गाङ्गः सिद्धार्थे नीपेऽपि निकुरम्बके, वि. कदम्बः सर्षपे नीपे कदम्बं निकुरम्बके, हे. वृन्दे कदम्बो नीपे ना, त्रि. कुमालकः कदम्बः स्यात् कदम्बः सर्षपः स्मृतः। कदम्बो वृषभे दृश्ये कदम्बो निगणः पुमान्, अने.

कदर. कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः, मे. कदरः श्वेतखदिरे क्षुद्ररोगेऽपि भावितः, वि. कदरः श्वेतखदिरे क्रकचक्षुद्ररोगयोः हे.

कदल. कदलाकदली रम्भा कदलीकदली पुनः। रम्भावृद्धेऽथ कदली पताकामृगभेदयोः। कदला डिम्बिकायाञ्च शाल्मलीभूरुहेऽपि च, मे. कदली हरिणान्तरे। रम्भायां वैजयन्त्यां च, हे. कदली ध्वजरम्भयोः, त्रि. कदली वैजयन्त्यां च रम्भायां हरिणान्तरे। कदली शाल्मलीशाखीडिम्बिकासु च कथ्यते, वि. कदली करिवैजयन्त्यां च, हु.

कद्रु. कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम्, मे. काद्रूमातरि नागानां कद्रुः कनकपिङ्गले, वि. कद्रुः कनकपिङ्गे स्यात् कद्रूः स्यान्नागमातरि, हे. कद्रुस्त्रिषु कडारे स्यात् कद्रूः स्त्री नागमातरि, त्रि.

कनक. कनकं हेम्नि पुंसि स्यात् किंशुके नागकेशरे। धत्तूरे काञ्चनारे च कालीये चम्पकेऽपि च, मे. कनकं हेम्नि कनको नागकेसरे। धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि, हे. कनकं चम्पके स्वर्णे किंशुके नागकेसरे। धुस्तूरे काञ्चनारे च कालीयेऽपि कचिन्मतम्, वि. कनकं धुस्तूरे नागकेसरे। चम्पके किंशुके हेम्नि, त्रि.

कनिष्ठ कनिष्ठोऽतियुवात्यल्पाऽनुजे स्त्री दुर्बलाङ्गुली, मे. कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा दुर्बलाङ्गुली, वि. कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुली, हे. कनिष्ठोऽतियुवाल्पयोः, ध.

कनीनिका. कनीनिका तारकाक्ष्णः स्यात् कनिष्ठाङ्गुलावपि, मे. वि. कनीनिकाक्षितारका। स्यात् कनिष्ठाङ्गुलिरपि, हे.

कनीयस्. कनीयानतियूनि स्याद् अत्यल्पानुजयोस्त्रिषु, मे. कनो-

यानतुजेऽत्यन्ये कनीयानतियूनि च, वि कनीयानतुजेऽल्पके । अतियूनि, हे (अतिशये) कनीयांस्तु युवाल्पयो, श कनीयाननुजेऽल्पे च, ति

कन्तु. कन्तुः कामकुसूलयो, हे

कन्था कन्था स्मृण्मयभित्तौ च तथा प्रावरणान्तरे, मे कन्था स्मृण्मयभित्तौ स्यात् कन्था प्रावरणान्तरे, वि कन्था पुरे प्रावरणे, हे

कन्द कन्दोऽस्त्री सूरणे ससत्रमूले जलधरे पुमान्, मे कन्दस्तु सूरणे ससत्रमूले जलधरेऽपि च, वि कन्दोऽब्दे सूरणे ससत्रमूले, हे कन्दोऽस्त्री सूरणे मूले, त्रि मूले कन्दलिके कन्द कन्दो वारिद उच्यते, अने

कन्दर कन्दरस्त्वङ्कुशे पुंसि गुहायां न नपुंसकम्, मे कन्दरो विवरेऽङ्कुशे, वि कन्दरः स्यादङ्कुशाद्वारणयोः, त्रि कन्दरोऽङ्कुशे । विवरे च गुहायाञ्च, हे

कन्दराल कन्दरालः पुमान् गर्दभाण्डे अश्वतरावपि, मे कन्दराल स्यात् पर्कटीगर्दभाण्डयोः, वि कन्दरालो जटिद्रुमे । गर्दभाण्डे, हे

कन्दल कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः, मे कन्दलन्तु कपाले स्यादुपरागे नवाङ्कुरे । कलध्वनौ कन्दली तु मृगद्रुमविशेषयोः, वि कन्दलन्तु नवाङ्कुरे कलध्वनौ । उपरागे मृगभेदे कलापे कन्दली द्रुमे, हे

कन्धर कन्धरो वारिवाहे स्याद् ग्रीवायां कन्धरा मता, मे कन्धरो वारिवाहे स्याद् ग्रीवायामपि कन्धरा, वि कन्धरोऽम्बुदे। कन्धरा तु शिरोधौ स्यात्, हे

कन्या कन्या कुमारिकानार्योरोषधीराशिभेदयो, वि, मे कन्या नार्यां कुमार्यां च राश्योषधिविशेषयो, हे

कपर्द कपर्द खण्डपरशो र्जटाजूटे वराटके, मे, वि कपर्दः पार्वतीभर्तु र्जटाजूटे वराटके, हे शिवजूटे वराटेऽपि कपर्दः, त्रि,ह कपर्दो हरजटाजूटः स्यात् कपर्दस्तु काकिणी, अने

कपर्दक कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः, मे,वि

कपाल कपालोऽस्त्री शिरोऽस्थि स्याद् घटादेः शकले व्रजे, मे,

कपालं शिरसोऽस्थि सव्राद्, घटादिशकले व्रजे। कुष्ठरोगविशेषे च, वि. कपालं कुष्ठभेदे घटादिशकले गणे। शिरोऽस्थनि, हे. शिरसोऽस्थि, कपालोऽस्त्री घटादेः शकले व्रजे, त्रि. कपालमुक्तं घटादिशकलेऽपि, ह.

कपि. कपि र्ना सिल्हके शाखामृगे च मधुसूदने, मे.

कपिल. कपिला रेणुकायाञ्च शिंशपागोविशेषयोः। पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे, मे. कपिलो मुनिभेदे सव्रात् पावके चारसत्वपे। कपिला शिंशपायां च रेणुकागोविशेषयोः। पुण्डरीककरिण्यां च लिङ्गे तु कपिलोऽन्यवत्, त्रि. कपिलो वह्निपिङ्गयोः। कुक्कुरे मुनिभेदे च कपिला शिंशपातरौ। पुण्डरीककरिण्यां च रेणुकागोविशेषयोः, हे. कपिला शिंशपाकौन्त्योः कपिलोऽग्नौ मुनौ शुनि, त्रि.

कपिलधारा. भवेत् कपिलधाराख्या स्वर्णदीतीर्थभेदयोः, वि. कपिलधारा त्रिदशापगायां तीर्थभिदयपि, हे.

कपिश. कपिशस्त्रिषु श्यावे स्त्री माधव्यां सिल्हके पुमान्, मे. कपिशः सिल्हके श्यावे माधव्यां कपिशी मता, वि. कपिशौ सिल्हकश्यावौ कपिशा माधवी सुरा, हे.

कपिशीर्ष. प्राकाराग्रेऽपि कपिशीर्षः, ह.

कपीतन. कपीतनं गर्दभाण्डे शिरीषाम्रातकेषु च। अश्वत्थे च, वि. कपीतनो गर्दभाण्डे शिरीषाम्रातकेषु च। अश्वत्थे च,मे. कपीतना गर्दभाण्ड-शिरीषाम्रातपिप्पलाः, हे. शिरीषाम्रातकेऽश्वत्थगर्दभाण्डे कपीतन, त्रि.

कपोत. कपोत सव्रात् नितकण्ठपारावतविहङ्गयोः, मे. कपोतः पारावते सव्रात् कवकाख्यविहङ्गमे, वि. कपोतः पक्षिमात्रेऽपि, त्रि.

कबन्ध. कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरे। क्लीबं जले पुंसुदरे राहुरक्षोविशेषयोः, मे. कबन्धमुदरे रक्षोविशेषेऽपि विधुन्तुदे, वि. कबन्धमुदके रुण्डे कबन्धो राहुरक्षसोः, हे राहौ शिरःशून्यकाये कबन्धः क्लीबमम्बुनि, त्रि विशिरस्के नरे नीरे कबन्धः खेचरेऽपि च, अने.

कम्. कं पादपूरणे तोये मस्तके च सुखेऽपि च, मे कं सुखं वारिशिरसोः, हे. कं शिरःसुखवारिषु, वि कं पानीयं शिरः प्रोक्तम्, अने कं वारिणि च मूर्धनि, अ.

कमठ कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकं, मे. कमठः कच्छपे भाण्डभेदे च कमठं मतम्, वि. कमठः कच्छपे दैत्यविशेषे मुनिभाजने, हे.

कमण्डलु. कमण्डलुः सत्रात् करके न स्त्री ना प्लक्षपादपे, मे. कमण्डलुः सत्रात् करके पर्कटीपादपेऽपि च, वि कमण्डलु पर्कटिकुण्डके, हे पर्कट्याश्च कमण्डलुः, त्रि

कमन कमन. कामुके कामेऽभिरूपेऽशोकपादपे, मे वि कमनोऽशोकपादपे। कामिकामाभिरूपेषु, हे.

कमल कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः, वि,मे सत्रात् कुरङ्गेऽपि कमलः,ग मृगे जले च कमलम्, त्रि कमलं क्लोम्नि भेषजे। पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे। कमला श्रीवरनार्योः, हे.

कम्पन कम्पनं न द्वयोः कम्पे कम्प्रे सत्रादभिधेयवत्, मे

कम्बल कम्बलो नागराजे सत्रात् सास्नाप्रावारयोरपि। कृमावपुत्रस्तरासङ्गे सलिले तु नपुंसकम्,मे कम्बलो नागराजे सत्रात् सास्नाप्रावारयोः कृमौ। कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम्, वि कम्बलः कृमिसास्नयोः। नागप्रभेदे प्रावारे वैकक्ष्येऽत्र कम्बलं जले, हे प्रावारेऽपि च कम्बलः, ध्या सास्नायामपि कम्बलः, त्रि इन्द्रियं कम्बलं प्रोक्तं कम्बलो रोमजः पटः। कम्बलं तु गवां सास्ना कम्बलं कम्बलं विदुः, अने

कम्बि कम्बिर्दर्वी च वंशस्य शलाकायां स्त्रियामपि, मे कम्बिर्दर्वी च वंशस्य शलाकायामपीष्यते, वि कम्बि वंशलतादर्व्योः, हे

कम्बु. कम्बु, शङ्खे स्त्रियां पुंसि शम्बूके-वलये गजे, मे कम्बुः शम्बूकगजयोः ग्रीवानलकशङ्खयोः, वि कम्बु. वलयशङ्खयोः। गजे शम्बू-

के कर्पूरे ग्रीवायां नलकेऽपि च, हे. कम्बुर्नां वलये शङ्खे, अ. गजग्रीवा-विले कम्बुः, त्रि.

कम्बोज. कम्बोजो हस्तिभेदेऽपि शङ्खदेशविशेषयोः, मे. कम्बजो हस्तिभेदे सप्राच्छङ्खदेशविशेषयोः, वि. कम्बोजो नीवृदन्तरे। शङ्खहस्ति-भेदयोश्च, हे. कम्बोजो देशशङ्खयोः, त्रि.

कर. करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः, मे. करो वर्षोपले पाणौ शुण्डाप्रत्यायरश्मिषु, वि. करः प्रत्यायशुण्डयोः। रश्मौ वर्षोपले पाणौ, हे. बलिहस्तांशवः कराः, अ. करो हस्तः करो रश्मिः करः कर्षकवेतनम्, धने.

करक. करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयो मेघोपले न स्त्री करे चापि कमण्डलौ, मे. करको दाडिमे पक्षिभेदे करे कमण्डलौ। लट्वाकरञ्जयो र्वर्षोपले च, रे. कमण्डलौ च करकः, अ. करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ। पक्षिभेदे करे चापि करका च घनोपले, वि. वर्षोपले स्त्री करका करङ्के करकोऽस्त्रियाम्। कुसुमे दाडिमे पक्षिभेदे च करकः पुमान्, त्रि.

करङ्क. करङ्को मस्तके शस्ये नारिकेलफलास्थनि, मे, वि.

करज. करजः स्यात् व्याघ्रनखे करञ्जनखयोः पुमान्, मे. करजस्तु करञ्जे स्यात् नखे व्याघ्रनखेऽपि च, वि. करजो नखदन्तयोः, रे. नखे करञ्जे करजः, त्रि.

करट. करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीवने। एकादशा-हादिश्राद्धे दुर्दुरूटेऽपि वायसे। करटो वाद्यभेदे, मे. करटः करिगण्डे स्यात् कुसुम्भे निन्द्यजीविनि। काके वाद्ये दुर्दुरूटे नवश्राद्धे, हे. करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीविनि। एकादशाहश्राद्धेऽपि दुर्दुरूटेऽपि वायसे। करटो वाद्यभेदेऽपि, वि. काकेभगण्डौ करटौ, अ. करटो वाद्यगण्डकुदिमटो, त्रि. करटः कातरो ज्ञेयः करटो ध्वाङ्क्ष उच्यते, धने

करण. करणं हेतुकर्मणोः। वाणिजादौ हस्तलेपे नृत्यगीतप्रभेदयोः। क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च। कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते, मे. करणं क्षेत्रगात्रयोः। गीताङ्गहारसंवेशभित्सु कायस्थसंहतौ। वर्णानां स्पष्टतादौ च योगिनामासनादिषु। हृषीके साधकतमे वाणिजादौ स्तनादिषु। करणः शूद्राविट्पुत्रे, हे. करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि, अ. सप्तान्, साधने गीतनृत्यभेदे कायस्थकर्मणि। करणं पुंसि सङ्कीर्णे, त्रि. करणं कार्येऽपि, ह. करणं कारणं विद्यात् क्षेत्रं करणमिष्यते। करणो जातिभेदः स्यात् करणानीन्द्रियाणि च, अने. करणं साधनक्षेत्रकायकायस्थकर्मसु। गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च। वालवादौ च करणः स्मृतः शूद्राविशोः सुते, वि.

करण्ड. करण्डो मधुकोशासिकारण्डेषु दलाढके, मे. कारण्डो मधुकोशेऽसौ कारण्डवे दलाढके, हे. कारण्डवे करण्डः स्यात् मधुकोषे दलाढके, हा. v. कारण्ड.

करभ. करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते, मे. करभो मय उष्ट्रके। अङ्गुलेश्च कनिष्ठाया मणिबन्धस्य चान्तरे, हे. करभोऽथ करोष्ट्रयो, त्रि. शूकरोष्ट्रौ च करभौ, अने. मणिबन्धकनिष्ठकयो र्मध्यविभागेऽपि करभ, ह. करभो मणिबन्धादिकणिष्ठान्ते तथोष्ट्रके। करभः, वि.

करवीर. करवीरः कृपाणे स्यात् दैत्यभेदाश्वमारयोः। करवीर्यदितिश्चेष्ठगवीपुत्रवतीषु च, मे. करवीरोऽश्वमारः स्यादङ्गुष्ठः करवीरकः, अने. करवीर. कृपाणे स्यात् दैत्यभेदाश्वमारयो। श्रेष्ठगव्यां पुत्रवत्यामदितौ करवीर्यपि. वि. करवीरो हयमारे कृपाणे दैत्यभिद्यपि। करवीरी पुत्रवत्यां सद्गव्यामदितावपि, हे.

करहाट. करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे, मे. करहाटः पद्मकन्दे पुष्पद्रुमविशेषयोः, हे. करहाटोऽब्जकन्दे स्यात् पुष्पवृक्षप्रभेदयोः, वि.

कराल. करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्। सर्जरसतैले ना क्लीबं स्यात् कुठेरके, मे. करालो दन्तुरे तुङ्गे करालं च कुठेरके।

करालो घूणतैलेऽपि करालो भीषणेऽन्यवत्, वि करालो रौद्रतुङ्गोरुघूण-तैलेषु दन्तुरे। करालं तु कुठारे स्यात्, हे करालो दन्तुरे तुङ्गे, अ करालो घूणतैलेऽपि, त्रि

करीर करीरो वंशाङ्कुरेऽस्त्री द्रुमभिद्घटयोः पुमान्। करीरी चीरि-कायाञ्च दन्तमूले च दन्तिनाम्, मे वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना, अ द्रुमभेदे करीरः स्याद्, घटे वंशाङ्कुरेऽपि च, अने करीरः कलशे द्रुमभेदे वंशाङ्कुरेऽपि च। करीरी चीरिकायां च दन्तमूले च दन्तिनाम्, वि करीर. कलशे वंशाङ्कुरद्रुमविशेषयो, हे वंशाङ्कुरे करीर द्रुमविशेषेऽपि कथयन्ति, श,

करुण करुणस्तु रसे द्रुमे कृपायां करुणा मता, मे, वि करुणो रसद्रुमयो। करुणा तु कृपायां स्यात्, हे

करेणु करेणु र्गजयोषायां स्त्रिया पुंसि मतङ्गजे, मे करेणु र्गज-हस्तिन्योः कर्णिकारेऽपि च क्वचित्, वि करेणुस्तु मतङ्गजे। द्विरदस्य च योषायां कर्णिकारतरावपि, हे करेणुरिभ्या स्त्री नेभे, अ करेणु र्गज-हस्तिन्योः, श

कर्क कर्कः कर्कतने वह्नौ शुक्लाश्वे दर्पणे घटे, मे, वि कर्कः श्वेताश्वे दर्पणे घटे। कर्कतनेऽग्नौ राशौ च, हे

कर्कट कर्कटो विष्कम्भरे। राशिभेदे कुलीरे स्त्री वालुङ्क्यां शाल्मलीफले, मे अथ कर्कटः। कुलीरे करणे स्त्रीणां राशौ खगेऽथ कर्कटी। शाल्मलीफलवालुङ्क्योः, हे कर्कट करणे स्त्रीणां राशिभेदकुलीरयोः। शाल्मलीफलवालुङ्क्यो कर्कटी कर्कटः खगे, वि कुलीरे कर्कटो राशौ, त्रि

कर्कर कर्करो भाण्डभेदे ना दर्पणे कठिने त्रिषु, मे कर्करो दर्पणे दृढे, वि कर्करो दृढदर्पणौ, त्रि कर्करो मुकुरे दृढे, हे.

कर्करेटु कर्करेटुः शृगो गृध्र कर्करेटुरमर्षण, अने

कर्कश कर्कशः काशमर्दस्य कम्पिल्लेऽप्यसौ पुमान्। त्रिषु साह-सिके क्रूरे दृढामसृणनिर्दये, मे कर्कश परुषे क्रूरे कृपणे निर्दय दृढे।

द्यूतौ साहसिके कासमर्द्दकम्पिल्लयोरपि, वि. कर्कशो निर्द्दये क्रूरे कम्पि-ल्लकृपाणयोः। द्यूतौ साहसिके कासमर्द्दके परुषे दृढे, हे. स्यात् कर्कशः साहसिकः कठोरामसृणावपि, ध.

कर्कोटक. कर्कोटकः स्यान्मालूरकाद्रवेयमभेदयोः, मे, वि. कर्कोटकोऽहौ विल्वे च, हे.

कर्चूर. V. कर्बूर.

कर्ण. कर्णः स्यात्सुते सुवर्णालौ श्रुतावपि, मे, वि. कर्ण-श्चम्पापतौ श्रुतौ, हे. श्रुतिराधेययोः कर्णः, त्रि. पार्थारौ श्रवणे कर्णः, अने.

कर्णपूर. कर्णपूरः शिरीषे स्यात् नीलोत्पलवतंसयोः, मे. कर्ण-पूरोऽवतंसे स्यात् नीलोत्पलशिरीषयोः, वि. कर्णपूरः स्याच्छिरीषे नीलो-त्पलवतंसयोः, हे. अशोकपल्लवेऽपि च। कर्णपूरः, त्रि.

कर्णिका. कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि। कमुकादि-च्छटाग्रेऽञ्जवराटे कर्णभूषणे, मे. कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य करमध्याङ्गुलावपि। कुट्टिन्यां हस्तिहस्ताग्रे, हे. कर्णिका करि-हस्ताग्रे करमध्याङ्गुलावपि। कमुकादिच्छटाग्रे च कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य कुट्टन्यामपि कुत्रचित्, वि. कर्णिका कर्णभूषणे। करि-हस्तेऽङ्गुलौ पद्मबीजकोश्याम्, अ. करमध्याऽङ्गुलौ च स्यात् कर्णिका, त्रि.

कर्णिकार. कर्णिकारः सुमानारग्वधद्रौ च द्रुमोत्पले, मे. कर्णि-कारश्च सम्पाके कर्णिकारो द्रुमोत्पले, वि. कर्णिकारस्तु कृतमाले द्रुमो-त्पले, हे.

कर्ण(र्णा)न्दु. कर्णान्दुस्तुत्चिलिकायां कर्णपाल्यामपि स्त्रियाम्, मे. कर्णान्दुस्तुत्चिलिकायां कर्णपाल्यामपीरिता, वि. कर्णान्दुः स्यात् कर्णपालुस्त-तुत्चिलिका, हे.

कर्तन. कर्तनं न द्वयोश्छेदे नारीणां तूलनिर्मितौ, मे. कर्तनं छेदने प्राहुः नारीणां तूलसेवने, वि. कर्तनं योषितां तूलसेवने च्छेदने-ऽपि च, हे.

कर्तृ. कर्ता तु कारके वाच्यलिङ्गो ना परमेष्ठिनि, मे.

कर्हट. कर्हटः करहाटे स्यात् पद्मपङ्कारयोरपि, मे, वि.

कर्पर. कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः, मे, वि. कर्परस्तु कटाहे स्यात् शस्त्रभेदकपालयोः, हे. कपाले च कटाहे च शस्त्रभेदे च कर्परः, त्रि.

कर्बर. कर्बरः कथितो व्याघ्रे शिवायामपि कर्बरी, मे, वि.

कर्बुर. कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णावृत्तायां शबले पुनरन्यवत्, मे. कर्बुरं काञ्चने जले। कर्बुरो राक्षसे पापे शबले, हे कर्बुरं सलिले हेम्नि कर्बुरं पापरक्षसोः। कर्बुरा कृष्णवृत्तायां किर्मीरे कर्बुरोऽन्यवत्, वि. कर्बुरा राक्षसे पापे कर्बुरं शबले जले, त्रि.

कर्मन्. कर्म व्याप्ये क्रियायां च, वि. कर्माऽस्त्री व्याप्यक्रिययोः, मे. कर्म कारकभेदे स्यात् क्रियायां च शुभाशुभे, हे.

कर्मकर. अथ कर्मकरो भृत्ये वेतनाजीविनि त्रिषु। कीनाशे पुंसि मूर्वायां बिम्बिकायामपि स्त्रियाम्, मे. कर्मकरस्तु कीनाशे भृत्ये वेतनजीविनि। कर्मकरी तु मूर्वायां बिम्बिकायामपि क्वचित्, वि. - कर्मकरोऽन्तके। भृतिजीविनि भृत्ये च, हे.

कर्मकार. कर्मकारी तु बिम्बिका। मूर्वा च, हे. v. कर्मकर.

कर्मफल. अथ कर्मफलं कर्मरङ्गकर्मविपाकयोः, मे. विदुः कर्मफलं कर्मरङ्गकर्मविपाकयोः, वि. कर्मरङ्गतरौ कर्मफलं दुःखे सुखेऽपि च, त्रि.

कर्मार. कर्मारो जातिभेदे च स्वदिरारि च पुंस्त्वयम्, मे.

क(र्चू)र्बूर. कर्चूरः स्यात् पुमान् शट्यां सुवर्णे तु नपुंसकम्, मे. कर्चूरं शटीकाञ्चनयोर्मतम्, वि.

कर्ष. कर्षो ना कर्षणे मानप्रभेदे पुंनपुंसकम्, मे. कर्षः कर्षणमानयोः, वि कर्षः कर्षणे मानभिदपि, हे.

कर्पू  कर्पूः पुमान् करीषाग्नौ स्त्रियां कुलेऽष्टिखातयोः, मे कर्पूः करीषदहने कुल्यायामपि चेष्यते, वि  कर्पूस्तु तुषाग्नौ कपिकुल्ययोः, हे कर्पूर्वार्ता करीषाग्निः कर्पूः कुल्याभिधायिनी, श्र

कल  कला स्यान्मूलरे वृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयो.। कलं शुक्रे त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ, मे  कलं शुक्रे कलोऽजीर्णेऽप्यव्यक्तमधुरध्वनौ। कला स्यान्मूलरे वृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालयोः कला, वि कलं त्वजीर्णरेतसोः। अव्यक्तमधुरध्वाने कला स्यात् कालशिल्पयोः। कलने मूलरे वृद्धौ षोडशांशे विधोरपि, हे कला शिल्पे कालभेदेऽपि, श्र अंशे वृद्धावपि कला, त्रि, सौधावयवविज्ञानगमनेषु कला मता, श्रने

कलकण्ठ. कलकण्ठः कलध्वाने हंसे पारावते पिके, मे वि कलकण्ठः पिके पारावते हंसे कलध्वनौ, हे

कलकल  कलकल उक्तः कोलाहले तथा सर्जनिर्यासे, मे भवेत् कलकलः सर्जरसे कोलाहलेऽपि च, वि  कलकलः पुमः। कोलाहले सर्जरसे, हे. धूनकेऽपि कलकलः, त्रि

कलङ्क  कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च, मे, वि  कलङ्कोऽङ्कापवादयोः, श्र, हे  कलङ्कं लाञ्छने दोषे, ह

कलत्र  कलत्रं श्रोणिभार्ययोः। दुर्गस्थाने नृपादीनाम्, मे, वि. कलत्रं श्रोणौ भार्यायां दुर्गस्थाने च भूभुजाम्, हे कलत्रं श्रोणिभार्ययोः, श्र

कलधौत  कलधौतं सुवर्णे स्याद्रजते च नपुंसकम्, मे कलधौतं रूप्यहेम्नोः कलधौतं कलध्वनौ, वि कलधौतं रूप्यहेम्नो कलधौतः कलध्वनौ, हे. कलधौतं रूप्यहेम्नोः. श्र  रजते कलधौतं स्यात्, कलधौतं च काञ्चने, श्रने  कलधौतं शातकुम्भेऽपि, ह

कलध्वनि  कलध्वनिः पुमान् पारावते पिकमयूरयोः. मे कलध्वनिः कोकिले स्यात् पारावतमयूरयो, वि  कलध्वनि. परभृते पारावतकलापिनोः, हे

कलम. कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च, मे. कलमो लेखनीचौरशालिकाचाटकेषु च, वि. कलमः शालिचौरयोः, हे. कलमा लेखनीचौरशालय, त्रि.

कलम्ब. कलम्बो शाकभेदे स्यात् कदम्बशरयो पुमान्, मे. कलम्बः सायके नीपे नाले शाके कलम्बरपि, वि. कलम्बो नालिकाशाके स्यात्कनीपपादपे, हे. कलम्बः शरनालयोः, त्रि.

कलविङ्क. कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके, मे. कलविङ्कः स्मृतो ग्रामचटकेऽपि कुलिङ्गके, वि.

कलह. कलहं युद्धवाटे ना खड्गकोषे च भण्डने, मे. कलहं खड्गकोषे सम्राद् भण्डने युद्धवाटयोः, वि. कलहो भण्डने खड्गकोषे समरवाटयोः, हे. खड्गकोषे च कलहं, त्रि.

कलहंस कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे, मे, वि. कलहंसो राजहंसे कादम्बे नृपसत्तमे, हे.

कलानुनादिन्. कलानुनादी रोलम्बे कलविङ्के कपिञ्जले, मे, वि. कलानुनादी चटके चञ्चरीके कपिञ्जले, हे.

कलाप कलाप संहतौ बर्हे काञ्च्यां भूषणतूणयो.। चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते बुधैः, मे. कलापो भूषणे बर्हे तूणीरे संहतेऽपि च, वि. कलापो बर्हतूणयो। संहतौ भूषणे काञ्च्याम्, हे. कलापो भूषणे बर्हे तूणीरे संहतावपि, त्रि.

कलापिन्. कलापी तु मयूरवर्हिणयोः पुमान्, मे. कलापी तु मयूरवर्हिणयोरपि, वि. कलापी प्लक्षकोकिलयोः, हे.

कलि कलिः सम्रात् कलहे शूरे कलिरन्त्ययुगे युधि, वि. कलि र्विभीतके शूरे विवादेऽन्त्ययुगे युधि, हे. कलहेऽपि कलिशब्दः, श. कलिः स्त्री कलिकायां ना शूराजिकलहे युगे, मे. चतुर्थेऽपि युगे कलिः, श. कलिः कलहकालयोः, अने.

कलिकार कलिकारस्तु धूम्याटे करञ्जे पीतमलके, मे. त्रि. कलि-

कारः करञ्जे सप्तात् धूम्याटे पीतमस्तके, वि. कलिङ्कारस्तु धूम्याटे पीतमुण्डकरण्डयोः, हे.

कलिङ्ग. कलिङ्गः पूतिकरञ्जे धूम्याटे भूम्नि नीवृति। न द्वयोः कौटजफले मल्लिलायान्तु योषिति, मे. कलिङ्गो नीवृदन्तरे। पूतीकरञ्जे धूम्याटे सप्तात् कलिङ्गा नितम्बिनी। कलिङ्गं कौटजफले, हे. कलिङ्गः पूतिकरञ्जे धूम्याटे नीवृदन्तरे। कलिङ्गं कौटजफले कलिङ्गा योषिति स्मृता, वि. देशे कलिङ्गो धूम्याटे कलिङ्गं कौटजे फले। त्रिषु विदग्धे दक्षे च, त्रि. धूम्याटश्च कलिङ्गः स्यात् कलिङ्गो देश उच्यते, अने.

कलित. कलितं विदिताप्तयोः, मे, वि, त्रि. कलितं वेदिताप्तयोः, हे.

कलुष. कलुषन्त्वाविले पापे, मे. कलुषं चाविलैनसोः, वि. कलुषं त्वाविलांहसोः, हे. अथाविले। पापे च कलुषं, त्रि.

कल्क. कल्कोऽस्त्री दृततैलादिशेषे दम्भे विभीतके। विट्किट्टयोश्च पापे च त्रिषु पापाशये पुमः, मे. कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि, वि. कल्कोऽस्त्री शमलैनसोः दम्भेऽपि, श. कल्को विभीतके तैलादिशेषे च, त्रि. चारिष्टपिष्टकौ कल्कौ, अने. कल्कोऽघविष्ठयोः। दम्भे पापिनि किट्टे च, हे.

कल्प. कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने, मे, त्रि. कल्पः स्यात् प्रलये न्याये शास्त्रे ब्राह्मदिने विधौ, वि. कल्पो विकल्पे कल्पद्रौ, संवर्त्ते ब्रह्मवासरे। शास्त्रे न्याये विधौ, हे. न्याये तुल्ये विधौ काले दिवसे दण्डे च कल्पवाक्, अने.

कल्पना. अथ कल्पना। करिणः सज्जनायां स्त्री. क्लीवं कॢप्तौ. च. कल्पने, मे. कल्पनं कर्त्तने कॢप्तौ सज्जनायां तु कल्पना, वि. कल्पने कॢप्तिकर्त्तने। कल्पनेभसज्जनायाम्, हे. कॢप्तौ छेदे च कल्पनम्, त्रि.

कल्मष. कल्मषं किल्बिषे क्लीवं पुंसि सप्तान्तरकान्तरे, मे.

कल्माष. कल्माषो यातुधाने च कृष्णपाण्डुरकृष्णयोः, मे. कल्माषो राक्षसे कृष्णे कल्माषः कृष्णपाण्डुरे, वि. कल्माषो राक्षसे कृष्णे शबले, हे.

कल्य. कल्यं प्रभाते क्लीवं स्यात् कल्यो वाक्श्रुतिवर्जिते। सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च। उपायवचनेऽपि स्यात् त्रिषु मद्येत्र च योषिति, मे. कल्यं सज्जे प्रभाते च कल्यो नीरोगदक्षयोः। कल्या कल्याणवाचि स्यात् कादम्बर्यामपि स्मृता, वि. कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये। कल्या कल्याणवाचि स्यात्, हे. श्वस्तनदिनेऽपि कल्यम्, श. कल्यौ सज्जनिरामयौ, प. कलासु कुशलः कल्यः कल्यो दक्षो निरामयः। कल्यं कालविशेषश्च कल्यं मद्यञ्च कीर्त्तितम्, धने.

कल्याण. कल्याणमक्षयस्वर्गे मङ्गलेऽपि नपुंसकम्, मे. कल्याणमक्षये स्वर्गे कल्याणं मङ्गलेऽपि च, वि. कल्याणं हेम्नि मङ्गले, हे. कल्याणं काञ्चने शुभे, त्रि.

कल्लोल. कल्लोलः पुंसि हर्षे स्यात् उल्लोलवैरिणोरपि, मे. कल्लोलो हर्षे उल्लोले कल्लोलः परिपन्थिनि, वि. कल्लोलोऽरौ हर्षवीचयोः, हे. कल्लोलौ शात्रवोल्लोलौ, त्रि.

कवच. कवचो गर्द्दभाण्डे च सन्नाहे पटहेऽपि च, मे. कवचो गर्द्दभाण्डे स्यात् सन्नाहे पटहेऽपि च, वि. कवचस्तु तनुत्राणे पटहे नन्दिमादपे, हे.

कबन्ध. कबन्धं सलिले मोक्षमपमूर्धकलेवरे, वि. v. कबन्ध.

कबर. कबरं लवणेऽम्ले स्त्री पृथ्वीतुल्लोकयान्तरे। कबरुर्मायां मा स्य.पापयो र्भेजान्तरे, मे. कबरी केशपाकविशेषयोः। कबरं लवणेऽम्ले च, वि. कबरं लवणाम्लयोः। कबरो केशविन्यासशाकयोः, हे.

कवि. कवि र्वाल्मीकिशुक्रयोः। सूरौ काव्यकरे पुंसि खलीने स्यात्तु योषिति, मे. कविः काव्यकरे सूरौ कवि र्वाल्मीकिशुक्रयोः। कवी खलीने कथिता, वि. कविः काव्यस्य कर्तरि। विचक्षणे दैत्यगुरौ स्यात् कवी तु खलीनके, हे. खलीने स्त्री कविः पुंसि काव्यकर्त्तृशुक्रसूरिषु, त्रि.

कशा. कशा स्यादश्वताडन्यां रज्जौ मुखे गुणेऽपि च, हे.

कशिपु. कशिपु र्भक्ताच्छादनयोरेकोक्त्या पृथक्तयोः पुंसि, मे. एकोक्त्या कशिपु भक्ताच्छादने च द्वयोः पृथक्, वि. कशिपु र्भोजनवस्त्रयो-रेकैकस्मिन् द्वयोश्चापि, हे. कशिपु त्वन्नमाच्छादनं द्वयम्, श. रभसः कशिपु-राख्यातः प्रावारः कशिपु र्मतः, धाने..

कशेरु. कशेरुः पृष्ठकीकसे । तृणजातौ कन्दभेदे, हे. कशेरुः कज्जले कन्दे पृष्ठसन्नास्थ्नि, कशेरुका, धाने.

कश्मल. कश्मलः स्यात् पिशाचेऽपि कश्मलो मोह उच्यते, धाने.

कश्य. कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययो., मे. कश्यं मद्ये तुरङ्गाणां कश्यं मद्यकशार्हयोः, वि. कश्यं कशार्हमद्ययोः । अश्व-मध्ये, हे. कश्यं कशार्हे मद्ये च, त्रि. मद्याश्वमध्ययोः कश्यम्, धाने.

कषाय. कषायो रसभेदे च निर्यासे च विलेपने । अङ्गरागे च न स्त्री स्यात् सुरभौ लोहिते त्रिषु, मे. कषायो रसभेदे स्यादङ्गरागे विलेपने । निर्यासेऽपि कषायोऽथ सुरभौ लोहितेऽन्यवत्, वि. कषायः सुरभौ रसे । रागवस्तुनि निर्यासे क्रोधादिषु विलेपने । वर्णे, हे. निर्यासेऽपि कषायोऽस्त्री, श. कषायः सुरभौ रसे, त्रि. कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः, ह.

कष्ट. कष्टन्तु गहने कृच्छ्रे, मे. कष्टं गहनकृच्छ्रयोः, हे, वि. कष्टं तु कृच्छ्रगहने, श.

कांस्य. कांस्यं वाद्यान्तरे पानपात्रे स्यात्तैजसान्तरे, मे. कांस्यं तु तैजसद्रव्ये वाद्यभित्पानपात्रयोः, वि. कांस्यं तैजसवाद्ययोः । पान-पात्रे मानभेदे, हे.

काक. काकः स्याद् वायसे द्वीपभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात् काकनासायां काकोलीकाकजङ्घयोः । रक्तिकायां मलपूं च काकमाची च योषिति । काकं सुरतबन्धे स्यात् काकानामपि संहतौ, मे. काकः स्यात् पीठसर्पिणि । द्वीपमानप्रभेदेषु शिरोऽवक्षालने द्विजे । काकं काकसमूहे स्याद्रतबन्धे च योषिताम् । काका

तु काकजङ्घायां काकोलीकाकनासयोः। काकोदुम्बरिकाकाकमाचिका-रक्तिकास्वपि, हे. काकः स्यादायसे ध्वमभेदे पीठसर्पिणि। शिरोऽवक्षालने मानविशेषद्वीपभेदयोः। काकं स्त्रीरतबन्धे स्यात् काकानामपि संहतौ। काका स्यात् काकनासायां काकोलीकाकजङ्घयोः। रक्तिकायां मलपाख्य काकमाचयाश्च कीर्त्तिता, वि. अथ द्रुमान्तरे। द्विके धृष्टे च काकः स्यात्, त्रि.

काकरुक काकरुको नग्नदम्भस्त्रीजितोलूकभीरुषु। नि स्वे, मे. काकरुक उलूके स्यान्नि.स्वे स्त्रीजितदम्भयोः, वि. काकरुको दिगम्बरे। उलूके स्त्रीजिते दम्भे भीरुके निधनेऽपि च, हे. पेचकस्त्रीजितौ काकरुकौ, त्रि.

काकिणी. काकिणी पणतुर्यांशे मानदण्डे च दृश्यते। कपर्दैक-वराटयोः स्यादुन्मानस्यांशकेऽपि च, मे. काकिणी पणतुर्यांशे मानदण्डे च काकिणी। कपर्दैकवराटयोः स्यादुन्मानांशकेऽपि च, वि. काकिणी मानदण्डस्य तुरीयेऽंशे पणस्य च। कपर्दिकायां वराटे च, हे.

काकिनी. काकिनी पणपादेऽपि मानपादवराटके, मे.

काकोल काकोलो विषभेदे स्याद् द्रोणकाककुलालयोः, वि. काकोलो मौकुलौ विषे।. कुलाले, हे. काकोलं नरकान्तरे। ना कुलाले द्रोणकाके विषभेदे तु न स्त्रियाम्, मे. काको विषश्च काकोलौ, त्रि.

काची. काची तुवरिकायाञ्च सौराष्ट्र्यामपि स्त्रियाम्, मे.

काच. काचः शिक्येऽत्र मणौ नेत्ररोगभेदे मृदन्तरे, मे. काचस्तु मणौ शिक्ये मृदन्तरे। नेत्ररोगेऽपि, वि काचोऽक्षिरोगे शिक्ये मणौ मृदि, हे काचाः शिक्यमृद्दृग्रुजः, अ.

काचवलिक राजपट्टस्य कारस्य गुडके काचवर्त्तिकः, वि.

काचिघ काचिघः काञ्चनेऽपि स्यात् छेत्खण्डे कूपकेऽपि च, मे. 'काचिघः काञ्चने प्रोक्तः छमण्डे मधिकेऽपि च, विं काचिघम्तु मृदिके स्यात् 'मागकुम्भे दमण्डके, हे काचिघौ काञ्चनोन्दुके, त्रि

काञ्चन. काञ्चनः काञ्चनारे सप्रात् चम्पके नागकेशरे। उदुम्बरे च धत्तूरे हरिद्रायां च काञ्चनी। क्लीबेऽब्जकेशरे हेम्नि, मे. काञ्चनः काञ्चनारे सप्रात् चम्पके नागकेसरे। उदुम्बरे च पुन्नागे हरिद्रायां च काञ्चनी। काञ्चनं हेम्नि किञ्जल्के, वि. काञ्चनं हेम्नि किञ्जल्के काञ्चनो नागकेशरे। उदुम्बरे काञ्चनारे पुन्नागे चम्पकेऽपि च। काञ्चनी तु हरिद्रायां, हे. काञ्चनन्तु हेम्नि नागकेसरे काञ्चनी निशा, लि.

काञ्ची. काञ्ची सप्रान् मेखलादाम्नि प्रभेदे नगरस्य च, मे. काञ्ची सप्राम्मेखलादाम्नि गुञ्जायां नीरदन्तरे, वि. काञ्ची गुञ्जामेखलयोः पुर्य्यां, हे. देशभेदेऽपि काञ्ची सप्रात्, लि.

काण. काणः काकैकचक्षुषोः, मे, वि.

काण्ड. काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वर्गभिन्नाड़ीदण्डे रहसि न स्त्रियाम्, मे. काण्डं नाले तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते रहसि स्तम्बे काण्डं वर्गेऽपुप्रदाण्डलम्, वि. काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे। रहःश्लाघास्वपु स्तम्बे, हे. काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु, च. काण्डो वाथस्तुला काण्डः काण्डः सङ्गात इष्यते। काण्डः कालो बलं काण्डं काण्डो मूलं तरोरपि, धने. काण्डः शरो जलं काण्डम्, धने.

कात्यायन. कात्यायनो वररुचौ विशेषे च मुनेः पुमान्। कात्यायवस्त्रे विधवार्द्धजरत्प्रमयोः स्त्रियाम्, मे. कात्यायनो वररुचौ गौर्यां कात्यायनी मता। काषायवस्त्रविधवार्द्धजरत्प्रामपौत्यते, वि. कात्यायनो वररुचौ कात्यायनी तु पार्वती। कषायवस्त्रविधवार्धवृद्धमहिलाऽपि च, हे. सप्रात् कात्यायन्यर्धवृद्धागौर्यौ वररुचौ नरि, लि.

कादम्ब. कादम्बः सप्रात् पुमान् पक्षिविशेषे सायकेऽपि च, मे. कादम्बः कलहंसेष्वोः, वि, हे. कादम्बो शरपक्षिणौ, लि.

कादम्बर. कादम्बरन्तु दध्यग्रे मद्यभेदे नपुंसकम्। स्त्री वारुणीपरभृता-भारतीशारिकासु च, मे. कादम्बरं तु दध्यग्रे मद्यभेदे च सीधुनि। काद-

स्वरो परभ्रताभारतीसारिकासु च, वि. कादम्बरं दधिसरे शीधुमद्य-प्रभेदयोः। कादम्बरी कोकिलायां वाणीशारिकयोरपि, हे.

कानन. काननं विपिने गेहे परमेष्ठिमुखेऽपि च, मे, वि. काननं तु ब्रह्मास्ये विपिने गेहे, हे.

कानीन. कानीनः कन्यकाजातसमये व्यासकर्णयोः, मे, वि. कानीनः कन्यकासुते। कर्णे व्यासे, हे.

कान्त. कान्ता नार्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे। लोहे च चन्द्रसूर्यायःपर्यायान्तःशिलासु च, मे. कान्तो रम्ये प्रिये प्रावृषि कान्ता प्रियङ्गुयोषितोः, हे. कान्तोऽश्मनि गृहे चारौ कान्ता तु फलिनीस्त्रियोः, वि. कान्तस्तु प्रियरम्ययोः, त्रि.

कान्तार. कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि। पुंसि स्यादिक्षुभेदे च, मे. कान्तारमुपसर्गादौ वने दुर्गमवर्त्मनि। इक्षुप्रभेदे कान्तारः, वि. कान्तारं दुर्गवर्त्मनि। महारण्योपसर्गयोः काननेक्षु-विशेषयोः, हे. महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम्, श. कान्तारं काननं प्रोक्तं कान्तारः पाकशासनः। इक्षुभेदश्च कान्तारः कान्तारो दुर्भरो दरः, धने. दुर्गमार्गेऽपि कान्तारम्, रु.

कान्ति. कान्तिः शोभेच्छयोः स्त्रियां, मे. कान्तिः शोभाभिला-षयोः, वि. कान्तिः शोभाकामनयोः, हे. अथ कान्ति र्द्युतीच्छयोः, त्रि. V. विभ्रम.

कार्पटिक. कार्पटिकोऽन्यमर्मज्ञे छात्रे पुंसि पठे त्रिषु, मे. का-र्पटिकोऽन्यमर्मज्ञे छात्रे सत्रात् कालदेशनि, वि.

कापथ. कापथः कुत्सितपथे उशीरे क्लीबमिष्यते, मे.

कापोत. कापोतो रुचके क्लीबं कपोतौघेऽञ्जनान्तरे, मे. कापोत-मञ्जने स्त्रज्ञां कपोतानां च संहतौ, वि.

काम. कामः स्मरेच्छयोः पुमान्। रेतस्यपि निकामे च कामेऽपि स्यान्नपुंसकम्, मे. कामः स्मरेऽभिलाषे च कामं रेतोनिकामयोः।

भव्यय त्वम्यनुज्ञायाम्, वि. कामं याढ़ेऽनुमतिरेतयो:। कामः स्मरेच्छाकामेष्वु, हे. इच्छामनोभवौ कामौ, अ. रेतोनिकामकामेष्वु कामं पुंसि स्मरेच्छयो:, त्रि.

कामकूट. कामकूटस्तु वेश्याया: प्रियविभ्रमयो: पुमान्, मे. कामकूटौ वेश्याविभ्रमेष्टौ, हे. कामकूटस्तु वेश्याया: प्रियविभ्रमदो मतः, वि.

कामगुण. अथ कामगुणो रागे विषयाभोगयोरपि, मे. कामगुणः स्मृतो रागे विषयाभोगयोरपि,वि. कामगुणो रसौ। विषयाभोगयोश्चापि,हे.

कामचारिन् कामचारी कामुके स्यात् स्वच्छन्दकलविङ्कयो:, मे. कामचारी तु कमने स्वच्छन्दकलविङ्कयो:, वि. कामचारी कलविङ्के स्वेच्छाचारिणि कामुके, हे.

कामद. कामदा कामधेनौ स्त्री कामदातरि वाच्यवत्, मे. कामदा धेनुकायां स्यात् वाच्यवत् कामदोग्धरि, वि.

कामम् काममाज्ञमतौ स्मृतम्। प्रकामे चाप्यसूयायां तथानुगमनेऽपि च, मे. काममसूयानुगमे प्रकामेऽनुमतावपि, हे. कामं प्रकामेऽनुमतावसूयानुगमेऽपि च, वि.

कामल. कामला रोगभेदे या ना ना मरुवसन्तयो:। कामुके वाच्यलिङ्गः, मे. कामलः कामुके रोगे मरुदेशवसन्तयो:, वि. कामलः कामिरोगो.। मरुदेशे ऽवसन्ते च, हे. कामलः कामुके मधौ, त्रि.

कामि. कामि नौ कामुके रत्यां स्त्री, मे. कामि. स्यात् कामुके रत्याम्, वि.

कामिन्. *कामिनी भीरुवन्द्यो:। कामी तु कामुके चक्रवाके पारावतेऽपि च*,मे. कामिनी भीरुवन्द्यो:। कामी स्यात् कामुके चक्रवाके पारावतेऽपि च, वि. कामी स्यात् कमने चक्रवाके पारावतेऽपि च, हे. कामिन। स्त्रैणचक्रौ च, त्रि. वन्दाागमपि कामिनी, अ.

कामुक. कामुकः कमनेऽशोकमाधवे चातिमुक्तके, मे, वि. कामुकास्तु काम्यशोकातिमुक्तकाः, हे.

काम्बोज. काम्बोजोऽश्वान्तरे सोमवल्के पुन्नागपादपे। काम्बोजी माषपर्ण्यां च वलक्षखदिरे स्त्रियाम्, मे. काम्बोजः पुनरश्वानां भेदे पुन्नागपादपे। वलक्षखदिरे चापि काम्बोजी माषपर्णिका, हे. काम्बोजस्तुरंगे सोमवल्के पुन्नागपादपे। काम्बोजी माषपर्ण्यां च हिङ्गुपर्ण्यामपि क्वचित्, वि.

काय. कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः। कायो मनुष्यतीर्थेऽपि, वि. कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः। कायं मनुष्यतीर्थं च, हे. कायः कदैवते मूर्त्तौ सङ्घे लक्ष्यस्वभावयोः। मनुष्यतीर्थे कायं स्यात्, मे. कायः स्वभावे लक्ष्ये च सङ्घे मूर्त्तौ कदैवते, त्रि. शरीरोत्सेधयोः कायः, धने.

कायस्थ. कायस्थः परमात्मनि। नरजातिविशेषे ना हरितक्यान्तु योषिति, मे. कायस्थोऽपि स्वजातेः स्यात् प्रभेदे परमात्मनि। कायस्था तु हरितक्यामामलक्यां च दर्शिता, वि. कायस्थोऽक्षरजीवकः। परमात्मा च कायस्था हरितक्यामलक्यपि, हे.

कार. कारो वधे निश्चये च वलौ यत्ने यतावपि। तुषारशैलेऽपि पुमान् स्त्रियां दूतीप्रसेवके। सुवर्णकारिकायां च बन्धनागारबन्धयोः, मे. कारो वधे निश्चये च वलौ यत्ने यतावपि। कारस्तुषारशैले च कारा दूती प्रसेवके। बन्धने बन्धनागारहेमकारिकयोरपि, वि. कारो बलौ वधे यत्ने हिमाद्रौ निश्चये यतौ। कारा बन्धनशालायां बन्धे दूतीं प्रसेवके। स्वर्णहेमकारिकायां च, हे. कारा पीड़ाबन्धशाले, त्रि. कारो वधे निश्चये च, धने.

कारक. कारिका नटयोषिति। स्तौ विवरणश्लोके शिल्पयातनयोरपि। नपुंसकं तु कर्मादौ कारकं कर्त्तरि त्रिषु, मे. कारकं कर्तृकर्मादौ कारिका यातना नटी। स्तौ विवरणश्लोकनापितादिककर्म च, हे. कारिका नटयोषिति। स्तौ विवरणश्लोके यातनायाञ्च कारिका। नापितादिकशिल्पेऽपि, वि. कारकः कर्त्तरि प्रोक्तः कर्मादावपि कारकम्, वि.

कारिका यातनाकृत्योः, श. व्याख्याश्लोकेऽपि कारिका, त्रि

कारण. कारणं करणे हेतुवधयोश्च नपुंसकम्। स्त्री यातनायाम्, मे. कारणं करणे हेतुवधयोरपि कारणम्। कारणा यातनायां च, वि. कारणं यातने हेतौ करणे कारणा पुनः। यातना, हे. वधे हेतौ च कारणम्, त्रि.

कारण्ड कारण्डो मधुकोशासिकारण्डवद्लाढ़के, वि v. कारण्ड.

कारन्धमिन्. कारन्धमी कांस्यकारे धातुवादरतेऽपि च, मे, वि. कारन्धमी धातुवादनिरते कांस्यकारिणि, हे. धातुवादरते कांस्यकारे कारन्धमी नरि, त्रि.

कारवी. कारवी मधुराद्दीप्यत्वक्पत्रीकृष्णजीरके, मे, वि. कारवी कृष्णजीरके। दीप्ये मधुरात्वक्पत्र्योः, हे.

कारि. कारिः स्त्रियां क्रियायां स्यात्वाच्यलिङ्गस्तु शिल्पिनि, मे. कारिः क्रियायामाख्याता नापितादिकशिल्पिनि, वि. कारिः शिल्पक्रियाऽपि च, हे.

कारु कारु विश्वकर्मणि ना त्रिषु कारकशिल्पिनोः, मे. कारुः कारकशिल्पिनोः। विश्वकर्मणि शिल्पे च, वि. कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि, हे. कारु कारकशिल्पिनोः, त्रि.

कारुज कारुजः शिल्पिनां चित्रे वामलूरे गजार्भके मे. कारुजः शिल्पिनां चित्रे कलभे नागकेशरे। स्वयंजाततिले फेने वल्मीके गैरिकेऽपि च, वि कारुजः कलभे फेने वल्मीके नागकेशरे। गैरिके शिल्पिनां चित्रे स्वयंजाततिलेऽपि च, हे.

कार्पट. कार्पटो जतुकार्यिणोः, मे, वि, हे.

कार्मण. कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च, मे कार्मणं मन्त्रतन्त्रादियोजने कर्मकारके. वि. कार्मणं मन्त्रादिसाधने कर्मकारके, हे.

कार्मुक कार्मुकं धनुषि स्यान् ना त्वेषो. कर्मक्षमेऽन्यवत्, मे. अथ कार्मुकं। वंशे कार्मुकमिष्वासे कर्मठे, हे. कार्मुकं वंशधनुषोः

कर्मशक्तौ तु वाचत्रवत्, वि. वेणौ ना कार्मुकं चापे, त्रि.

कार्यत्र. कार्यत्र हेतौ प्रयोजने, मे, वि, हे. कार्यं युद्धे तथा स्मृत्ये, ञने.

कार्यपुट. सप्रात् कार्यपुटः चपणोन्मत्तानर्थकरेषु च, मे. कार्यपुटोऽनर्थकरे चपणोन्मत्तयोरपि, हे. कार्यपुटस्तु चपणोन्मत्तानर्थकरेष्वपि, वि. उन्मत्ते चपणेऽनर्थकरे कार्यपुटध्वनिः, हा.

कार्षापण. कार्षापणोऽस्त्री कार्षिके पणषोड़शकेऽपि च, मे. कार्षापणः कार्षिके स्यात् पणषोड़शकेऽपि च, वि. कार्षापणः सुकार्षिके। पणषोड़शके, हे.

काल. कालो मृत्यौ महाकाले समये यमकृष्णयोः। काला तु कृष्णत्रिवृतामञ्जिष्ठानीलिकासु च। काली गौर्यां चारकीटे कालिकामातृभेदयोः, मे. कालो मृत्यौ महाकाले समये यमकृष्णयोः। कृष्णत्रिवृति काला तु नीलीमञ्जिष्ठयोरपि। काली गौर्यां चारकीटे कालिकामातृभेदयोः। नवाम्बुवाहपङ्क्तेऽपि परिवादेऽपि च क्वचित्, वि. कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः। मरणानेहसोः काली कालिकाचारकीटयोः। मातृभेदोमयो र्नव्यमेघौघपरिवादयोः। काला कृष्णात्रिवृन्नील्योर्मञ्जिष्ठायां, हे. कृतान्तानेहसोः कालः, घ. कालः स्यान्मृत्युरकृष्णयोः, त्रि. उत्पत्ते च प्रकोष्ठे च मुहूर्त्ते नियमे तथा। कालशब्दो व्यवस्थायां समयेऽपि निगद्यते, ञने. निमेषादौ यमे वर्णे कालो मृत्यौ च कीर्त्यते। कालाः शङ्करकाचारसिद्धान्तसमयाः स्मृताः, ह.

कालकण्ठ. कालकण्ठश्च दात्यूहे कलविङ्के च खञ्जने। मयूरे पीतसारे च स्यात् खण्डपरशौ पुमान्, मे. कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने। सितापाङ्गे-हरे पीतसारके नीलकण्ठवत्, वि. कालकण्ठनीलकण्ठौ पीतसारे महेश्वरे। दात्यूहे ग्रामचटके खञ्जरीटे शिखावले, हे. दात्यूहे कालकण्ठः स्यात् शिवखञ्जनयोरपि, त्रि.

कालञ्जर. कालञ्जरो योगिचक्रमेलके भैरवे गिरौ, मे. वि. काल-

श्वरो भैरवाद्रौ योगिचक्रश्च मेलके, हे.

कालपृष्ठ. कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे, मे. कालपृष्ठं भवेत् कर्णचापे कोदण्डमात्रके। कालपृष्ठस्तु सारङ्गविशेषे कङ्कपक्षिणि, वि. कालपृष्ठन्तु कोदण्डमात्रके कर्णधन्वनि। कालपृष्ठो मृगभेदे कङ्के, हे.

कालस्कन्ध. कालस्कन्धस्तमाले स्यात् तिन्दुके जीवकद्रुमे, मे, वि. कालस्कन्धस्तु तिन्दुके। तमाले जीवकद्रौ च, हे.

कालानुसार्य. कालानुसार्यं शैलेये कालीये शिंशपाद्रुमे, मे. कालानुसार्यं कालेये शैलेये शिंशपाद्रुमे, वि. कालानुसार्यस्तु शैलेये कालेये शिंशपातरौ, हे.

कालिङ्ग. कालिङ्गो भूमिकर्कारौ दन्तावलभुजङ्गयोः। कालिङ्गी राजकर्कट्याम्, मे, वि. कालिङ्गस्तु भुजङ्गमे। द्विरदे भूमिकर्कारौ कालिङ्गी राजकर्कटी, हे.

कालिका. कालिका चण्डिकाभेदे कार्ष्ण्यक्रमवृश्चिकपत्रयोः। क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः। पटोलशाखारोमालीमांसीकाकीशिवासु च। मेघावली च, मे. कालिका योगिनीभिदि। स्वर्णादिदोषे मेघाल्यां सुराशौर्यंश्च नवाम्बुदे। क्रमदेयवस्तुमूल्ये कार्ष्ण्यवृश्चिकपत्रयोः। रोमाल्यां धूसरीमांस्योः काकीपटोलशाखयोः, हे. कालिका योगिनीभेदे कार्ष्ण्ये गौर्यश्च घनावली। क्रमदेयवस्तुमूल्ये धूसरीनवमेघयोः। पटोलशाखारोमालीमांसीकाकीषु कालिका। तथा वृश्चिकपत्रेऽपि, वि. मेघजाले च कालिका, श्र. रोमावलीमेघमालाकरटीषु च कालिका, शा. कृष्णत्वे च हिमान्याश्च गौरीकाल्योश्च कालिका, त्रि.

कालेय. कालेयो दैत्यभेदे स्यात् कालखण्डे नपुंसकम्, मे. कालेयो दैत्यभेदे स्यात् कालेयं कालखण्डके, वि. कालेयस्तु दैत्ये कालेयं कुङ्कुमं यकृत्, हे.

कारक. कारकं लकुचाकौ स्यात् पौतमद्रककयोः, मे, वि. कारकः कुक्कुटे काके पौतमुण्डे, हे.

कावेरी. कावेरी स्त्रियां सरिद्भेदे पण्यनारीहरिद्रयोः, मे, वि. कावेरी तु हरिद्रायां वेश्यायां सरिदन्तरे, हे.

काव्य. काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्त्रियां पूतनाधियोः, मे. काव्यं ग्रन्थे शुक्रे काव्यः काव्या स्यात् पूतनाधियोः, वि. काव्यं ग्रन्थे काव्यः शुक्रे काव्या स्यात् पूतनाधियोः, हे. काव्यं प्रबन्धे शुक्रे ना, त्रि. काव्या तु पूतना ज्ञेया काव्यं ग्रन्थनिबन्धनम्, अने.

काश. काशी वाराणसीपुरे। न स्त्रियां तृणभेदे स्यात्, मे. काश-तृणे स्यात् सवर्थो वाराणस्यां तु काश्यपि, वि. काशस्तृणे रोगभेदे, हे.

काश्मीर. काश्मीरं कुङ्कुमे प्रोक्तं टङ्कपुष्करमूलयोः, वि. काश्मीरं कुङ्कुमेऽपि स्यात् टङ्कपुष्करमूलयोः, मे. काश्मीरं पौष्करे मूले टङ्ककुङ्कुमयोरपि, हे.

काश्मीरज (कश्मीरज). काश्मीरजं पुनः। कुष्ठकुङ्कुमयोः स्त्रीवे-ऽतिविषायान्तु योषिति, मे. काश्मीरजाख्याऽतिविषाकुष्ठकुङ्कुमपौष्करे, वि. कश्मीरजं कुष्ठे कुङ्कुमे पौष्करेऽपि च। कश्मीरजाऽतिविषायां, हे.

काश्यप. काश्यप उक्तो मुनिस्मृगयो र्भेदे च काश्यपी क्ष्मायाम्, मे. काश्यपः स्यात् मुनौ मानभेदे भूमौ तु काश्यपी, वि. काश्यपो मुनिमीनयोः। काश्यपूर्वग्राम्, हे.

काष्ठ काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्थानमाले दिशि च स्त्री दारुणि स्त्रियानपुंसकम्, मे. काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्याद् दिशि स्थानमाले च काष्ठमाख्यातमिन्धने, वि. काष्ठं दारुणि काष्ठा तु प्रकर्षे स्थानमालके। दिशि दारुहरिद्रायां कालमानप्रभिद्यपि, हे. काष्ठोत्कर्षे स्थितौ दिशि, अ. काष्ठा कालेऽपि, त्रि. काष्ठा निशा ककुप् काष्ठा काष्ठा प्रोक्ता वसुन्धरा। काष्ठा कालविशेषः स्यात् काष्ठं दारु निगद्यते, अने.

कासमर्द. पटोलेऽपि कासमर्दः, हा.

काष्ठु काष्ठु निकृष्टवाचि स्त्रियां नपा शस्त्रायुधे स्त्रियाम्, मे.

कासू: शक्त्यायुधे रुजि। बुद्धौ विकलवाचि स्यात्, हे. कासू विकल-वाचि स्यात् कासू: शक्त्यायुधेऽपि च, वि.

काहल. काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि। काहलौ तु तरुणश्री स्यात् काहलश्वरणायुधे। शब्दमात्रेऽपि पुंलिङ्गस्त्रिषु शुष्के भृशे खले, मे. काहलं तु स्याद् भृशे चाव्यक्तवाचि च। शुष्के च वाद्यभेदे च काहली तरुणस्त्रियाम्, हे. काहली तु तरुणीं स्यात् काहलं भृशशुष्कयोः। वाद्यभाण्डविशेषे तु काहला काहलः खले, वि.

किंशारु. किंशारु र्ना सस्यशूके विशिखे कङ्कपक्षिणि, मे. किंशारुः सस्यशूकेऽपि विशिखे कङ्कपक्षिणि, वि. किंशारु र्धान्यशूके शरेऽपि च, हे. किंशारु सस्यशूकेषु, श.

किंस्वित्. किंस्वित् प्रश्ने वितर्के च, वि

किङ्किणी. किङ्किणी क्षुद्रघण्टिका, अने.

किञ्च. किञ्चारम्भे च साकल्ये, मे, वि. किञ्च तु। साकल्यारम्भयोः, हे.

किट्टाल. किट्टालः पुंसि ताम्रस्य कलशे लोहगूथके, मे. किट्टालस्ताम्रकलशे किट्टालो लोहगूथके, वि. किट्टालस्तु लोहगूथे ताम्रस्य कलशेऽपि च, हे.

किण. व्रणचिह्ने घुणे किणः, श.

किण्व. किण्वं बीजे च श्रीधुनः। पापे, मे. किण्वं पापे सुराबीजे, वि, हे.

कितव. कितवस्तु पुमान् मत्ते वञ्चके कनकाह्वये, मे. कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये, वि. कितवः कनकाह्वये। मत्ते च वञ्चके चापि, हे. कितवौ मत्तवञ्चकौ, वि

किन्नु. किन्नु प्रश्नवितर्कयोः, मे, वि..

किम्. किम् कुत्सायां वितर्के च निषेधप्रश्नयोरपि, मे. किं स्याद्वितर्के प्रश्ने च क्षेपे निन्दाप्रकारयोः, वि. किं क्षेपनिन्दयोः प्रश्ने वितर्के, हे.

किं प्रश्नेऽपि च कुत्सायाम्, वि. किम् प्रश्ने कुत्सितेऽपि च, हे. किं इच्छायां जुगुप्सने, अ.

किमु. किमु सम्भावनायां स्याद् विमर्शे चापि दृश्यते, मे. किमु सम्भावनायां स्याद् विमर्शे च किमु स्मृतम्, वि. किमु सम्भावनायां विमर्शे, हे.

किमुत. किमुत प्रश्नवितर्कयोः। विकल्पेऽतिशयेऽपि स्यात्, मे. किमुतातिशये प्रश्ने विकल्पे च प्रयुज्यते, वि. किमुत प्रश्नवादयोः। विकल्पेऽतिशये चापि, हे.

किम्पाक. किम्पाको महाकालफलाख्ययोः, मे. किम्पाको द्रुमभिदज्ञे, हे. किम्पाकः फलमूर्खयोः, वि.

किम्पुरुष. अथ किम्पुरुषो लोकभेदकिन्नरयोः पुमान्, मे. किम्पुरुषः किन्नरे स्यात् लोकभेदेऽपि, वि. किम्पुरुषस्तु किन्नरे लोकभिद्यपि, हे.

किरात. किरातो म्लेच्छभेदे स्याद् भूनिम्बेऽल्पतनावपि। स्त्रियां चामरधारिण्यां कुट्टिनीदुर्गयोरपि, मे. स्यात् किरातस्तु भूनिम्बे म्लेच्छे चाल्पतनावपि। मन्दाकिन्यां किराती स्यात् कुट्टन्यामपि दृश्यते, वि. किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि। किराती कुट्टनी गङ्गा, हे. किरातौ म्लेच्छभूनिम्बौ, त्रि.

किरि. किरिः शूकरलोडयोः, धने.

किर्मी. किर्मी पलाशे शालायां हेमपुत्रकाश्च योषिति, मे. किर्मी पलाशे शालायां लोहपुत्रकासुदीरिता, वि.

किर्मीर. किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे, मे. किर्मीरः कर्बुरे दैत्यराक्षसान्तरयोरपि, वि. किर्मीरः शबले दैतेय, हे.

किल. किलशब्दस्तु वार्तायां सम्भाव्यानुशयार्थयोः, मे. किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः, वि. वार्तासम्भाव्ययोः किल, ह. वार्तायामरुचौ किल, त्रि. वार्तासम्भाव्ययोः किल, अ.

किल्बिष. किल्बिषं पापरोगयोः। अपराधेऽपि, मे. किल्बिषं

वृजिने रोगेऽप्यपराधेऽपि किल्बिषम्, वि किल्बिषं पापे रोगेऽपराधे च, हे अपराधेऽपि किल्बिषम्, अ

किशोर अथ किशोरोऽश्वसत्र शावके। तैलपर्ण्यौषधौ च सत्रात् तरुणावस्थसूर्ययोः, मे किशोरस्तरुणावस्थे हयशावकसूर्ययोः। तैलपर्ण्याम्, वि किशोरो हयशावके। सूर्ये यूनि, हे

किष्कु किष्कु र्हयो वितस्तौ च प्रकोष्ठेऽपि करेऽपि च, मे किष्कुः प्रकोष्ठे हस्ते च वितस्तौ कुत्सितेऽपि च, हे किष्कु र्हस्ते वितस्तौ च, अ किष्कु, र्वितस्तौ हस्ते च प्रकोष्ठे कुत्सितेऽपि च, वि किष्कुः प्रकोष्ठेऽपि, त्रि

किष्कुपर्वन् किष्कुपर्वा सुमानिची वेणौ पोटगलेऽपि च, मे. किष्कपर्वा भवेद्वेणाविक्षौ पोटगलेऽपि च, वि किष्कुपर्वा पोटगले शरादिमुत्वचिसारयोः, हे

कीकट कीकटः कृपणे निःस्वे त्रिषु पुंभ्न्नि नीवृति, मे कीकटः कृपणे निःस्वे देशभेदे तुरङ्गमे, हे कीकटस्तुरगे निःस्वे देशभेदे मितम्पचे, वि

कीकस कीकसः कृमिजातौ स्यात् पुंसि कुल्ये नपुंसकम्, मे. कीकसः कृमिजातौ सत्रादस्थ्नि, कीकसमिष्यते, वि कीकसस्तु क्रिमौ कीकसमस्थनि, हे कीकसो वानरो भित्तु कीर्तितं चास्थि कीकसम्, रुने

कीचक कीचको दैत्यभिद्वातहतसस्वनवंशयोः, मे कीचको दैत्यभेदे स्यात् शुष्कवंशे द्रुमान्तरे, वि कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे, हे वंशे दैतेत्र च कीचक., त्रि

कीटक कीटकः क्रिमिजातौ ना निष्ठुरे पुनरन्यवत्, मे कीटक कृमिभेदे सान्निष्ठुरे कीटकोऽन्यवत्, वि कीटको निष्ठुरे कृमौ, हे

कीनाश कीनाश कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् । यमे ना, मे कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोः, वि कीनाश क्षुद्रयमयो कर्षकोपांशुघातिनोः, हे कृतान्ते पुंसि कीनाशं क्षुद्रकर्षकयोस्त्रिषु, अ. कीनाशश्च कपटः सत्रात कीनाशो यमकर्षकौ, धमे

कीर कीर. शुके पुंश्चि नीवृति, मे. कीरो जनपदे शुके, वि कीरः शुके जनपदे, हे काश्मीरमशुकौ कीरौ, अने

कीर्ण कीर्णं दत्ते च विक्षिप्ते हिंसितेऽप्यभिधेयवत्, मे कीर्णं छन्ने परिक्षिप्ते हिंसिते कीर्णमिष्यते, वि कीर्ण. क्षिप्ते हते च्छन्ने, हे

कीर्त्ति कीर्त्तिः प्रसादयशसो र्योषित्, मे कीर्त्तिः प्रसादयशसो र्विस्तारे कर्द्दमेऽपि च, वि कीर्त्ति र्यशसि विस्तारे प्रासादे कर्द्दमेऽपि च, हे

कील कीलो लेशे द्वयोः शस्त्रज्वालाकफोणिशङ्कुषु, मे कीला कफोणिनिर्घाते शङ्कौ ज्वाले तु कीलवत्, वि कीलोऽग्नितेजसि। कफोणितम्भयो शङ्कौ कीला रतहतावपि, हे शङ्कावपि द्वयोः कीलः, अ कफोणिघाते ज्वाले च कीलावत् कील दृश्यते, त्रि

कीलाल कीलालं रुधिरे तोये, मे, हे शोणितेऽम्भसि कीलालम्, अ क्षीरे पुष्परसे तोये मद्ये मण्डे हतेऽस्त्रजि। समस्तर्थेषु कीलालं प्रवदन्ति मनीषिणः, अने कीलालं रुधिरे जले, र, वि

कीश कीशो दिगम्बरे कपौ, मे कीशो दिगम्बरे प्रोक्त कीशः शाखामृगेऽपि च, वि कीश कपौ दिगम्बरे, हे दिगम्बरे कपौ कीशः, त्रि

कु कु पापे चेषदर्थे च कुत्सायां च निवारणे, मे वि कु पापीयसि कुत्सायामीषदर्थे निवारणे, हे पापकुत्सेषदर्थे कु, अ

कुकूल कुकूलं शङ्कुसङ्कीर्णे श्वभ्रे ना तु तुषानले, मे कुकूलं शङ्कुसङ्कीर्णे श्वभ्रे पापि तुषानले। कुकूलं स्यात्, वि कुकूलन्तु तुषानले। शङ्कुसंयुक्तगर्त्ते च, हे कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले, अ कुकूल शङ्कुगर्त्तेऽपि तुषाग्नौ च निगद्यते, हे

कुक्कुट कुक्कुटस्त्वत्तचर्य्याया पुंसि स्यात् चरणायुधे। निषादशूद्रयो पुत्रे तृणोल्कायाञ्च कुक्कुभे, मे कुक्कुट कुक्कुभे ताम्रचूडे वह्निकणेऽपि च। निषादशूद्रयो पुत्रे, हे कुक्कुटस्ताम्रचूडे स्यात् कुक्कुभेऽग्निकणेऽपि च। निषादशूद्रयो पुत्रे तालमध्ये तु कुक्कुटी, वि

कुक्कुर कुक्कुर सारमेये ना ग्रन्थिपर्णे नपुंसकम्, मे कुक्कुरो

वकपुष्पे सन्नाद् ग्रन्थिपर्णेऽपि कुक्कुरस्, वि. कुक्कुरं ग्रन्थिपर्णके। कुक्कुरः श्वा, हे.

कुचन्दन. कुचन्दनञ्च पत्नाङ्गे द्रुभेदे रक्तचन्दने, मे,वि. कुचन्दनं वृक्षभेदे पत्नाङ्गे रक्तचन्दने, हे

कुचेल कुचेला विद्धकर्ण्यां स्त्री वाच्यवत् तु कुवाससि, मे. कुचेला विद्धकर्ण्यां सन्नास् कुचेलस्तु कुवाससि, वि. कुचेलः स्यात् कुवाससि। कुचेला विद्धकर्ण्यां च, हे

कुज. कुजा कात्यायनीदेव्यां कुजो नरकभौमयोः, मे. कुजः सन्नान्नरकारयोः, वि. कुजो द्रुमे। आरे नरकदैत्ये च, हे.

कुञ्ज कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि हस्तिनाम्, मे, कुञ्जो निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम्, वि. कुञ्जो हनौ दन्तिदन्ते निकुञ्जे च, हे. कुञ्जो दन्तेऽपि न स्त्रियाम्, अ हनौ कुञ्जः, रु.

कुञ्जर कुञ्जरोऽनेकपे केशे स्त्री धातक्याञ्च पाटलौ, मे. कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा, वि. कुञ्जरोऽनेकपे केशे कुञ्जरा धातकीद्रुमे। पाटलायां, हे.

कुट. कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयो गृहे। कुटी स्यात् कुम्भदास्यां च सुरायां चित्रगुच्छके, मे. कुटः कोटे शिलाकुट्टे गेहे घटे कुटी सुरा। चित्रगुच्छः कुम्भदासी, हे. कुटः कोटे घटे गेहे शिलाकुट्टकपूरुषे। सन्नात् कुटी कुम्भदास्यां च सुरायां चित्रगुच्छके, वि. कुम्भे कुटो ना भवने द्वयो', त्रि.

कुटज कुटजो वृक्षभेदे स्याद् अगस्त्यद्रोणयोरपि, मे, वि. कुटजोऽगस्त्ये द्रुभेदे द्रोणे, हे.

कुटन्नट. कुटन्नटन्तु कैवर्त्तीमुस्तके पुंसि शोणके, मे कुटन्नटस्तु श्योनाके कैवर्त्तीमुस्तकेऽपि च, वि अथ कुटन्नटः। शोणके कैवर्त्तीमुस्ते, हे.

कुटप. कुटपो मानभेदे स्यात् कुटपो निष्कुटे मुनौ, वि.

कुटपो मुनौ। निष्कुटे मानभेदे च, हे.

कुटार. कुटारं मैथुने विद्यात् कुटारं केवलेऽपि च, वि. कुटारं केवले रते, मे, हे.

कुटिल. कुटिला त्वापगायां स्त्री भुग्ने तु वाच्यलिङ्गकः, मे. कुटिलं वाच्यवक्रे स्यात् कुटिला सरिदन्तरे, वि. कुटिलं भङ्गुरे कुटिला नदी, हे.

कुठार. कुठारु र्ना द्रुमे कीशे, मे. कुठारुः पादपे कीशे, वि. कुठारु र्द्रुकीशयोः, हे.

कुड्मल. कुड्मलो मुकुले पुंसि न द्वयो र्नरकान्तरे, मे.

कुड्य. कुड्यं भित्तौ विलेपने, वि, मे.

कुणप. कुणपो पुनः। विट्सारिकायां कुणपः पूतिगन्धौ शवेऽपि च, मे, वि कुणपः पूतिगन्धिनि। शवे, हे. विट्सार्यां स्त्री कुणपः शवे, त्रि,

कुणि. कुणिस्तुन्नकवृक्षे ना कुकरे त्वभिधेयवत्, मे. कुणिस्तुन्नकवृक्षेऽपि कुणिः स्यात् कुकरेऽन्यवत्, वि कुणिः कुकरवृक्षयोः, हे.

कुण्ठ. कुण्ठोऽकर्मण्यमूर्खयोः, मे, वि. कुण्ठोऽकर्मण्ये मूर्खे च, हे.

कुण्ड. कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान्। पिठरे तु न ना, मे. कुण्डं देवजलाधारे पिठरेऽथ कमण्डलौ। कुण्डी कुण्डः स्मृतो जारात् पतिवत्नीसुतेऽपि च, वि. कुण्डो जाराज्जीवत्पतेः सुते। कुण्डी कमण्डलौ देवतोयाशये स्थाल्याम्, हे. कुण्डं स्थालीरन्ध्रो जारजे ना। कुण्डी कमण्डलौ, त्रि

कुण्डकीट. कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे। पतितब्राह्मणीपुत्रदासीकामुकयोरपि, मे. कुण्डकीटस्तु जारतः। विप्रीपुत्रे दासीरतौ चार्वाकेऽतिविशारदे, हे. कुण्डकीटस्तु चार्वाकवचनाभिज्ञपूरुषे। जारजब्राह्मणीपुत्रदासीकामुकयोरपि, वि. पुंश्चले कुण्डकीटः स्याज्जाराच्च ब्राह्मणीसुते. त्रि

कुण्डल. कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च। काञ्चनद्रुगुडूच्योः स्त्री, मे. कुण्डलं वलये पाशे कुण्डलं कर्णभूषणे। गुडूच्यां काञ्चनद्रौ च कुण्डली समुदीरिता, वि. कुण्डलं वलये पाशे माटङ्के कुण्डली पुनः। काञ्चनद्रौ गुडूच्यां च, हे. कुण्डलं मण्डलं ज्ञेयं कुण्डलं कर्णभूषणम्, अने.

कुण्डलिन्. कुण्डली वरुणे केकिभोगिनोश्च सकुण्डले, मे, वि. कुण्डली वरुणे सर्पे मयूरे कुण्डलान्विते, हे.

कुतप. कुतपोऽस्त्रियां द्विहित्रे वाद्ये च्छागलकम्बले। कुशे दिनस्याष्टमांशे ना सूर्येऽग्नौ, मे. कुतपः स्यात् कुशे वाद्ये तपने च्छागकम्बले। कुतपो भागिनेये स्याद् अष्टमांशे दिनस्य च, वि. कुतपस्तु छागकम्बलदर्भयोः। वैश्वानरे दिनकरे द्विजन्मन्यतिथौ गवि। भागिनेयेऽष्टमांशेऽह्नो वाद्ये, हे. (कुतपो छागरोमोत्थपटे चाह्नोऽष्टमेंऽशके, अ.) धान्येऽह्न्येऽष्टमांशेऽह्नः कुतपश्छागकम्बले, त्रि. कुशे काले तिले च्छागे कम्बले सलिलेऽम्बरे। दौहित्रे ऽग्निपात्रेऽग्नौ कुतपाख्या प्रवर्तते, अने. कुतपो दर्भऽपराह्णे च, च

कुतस्. कुतः प्रश्ने पञ्चम्यर्थे च निन्दने, वि.

कुतूहल. कुतूहलं कौतुके स्यात् प्रशस्तेऽपि च दृश्यते, मे. कुतूहलं कौतुके स्यात् प्रशस्तेऽपि कुतूहलम्, वि. कुतूहलं प्रशंसने, हे.

कुथ. कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि, मे. कुथः प्रदेष्यिकुशयोः, वि. कुथः स्यादास्तरदर्भयोः, हे. कुथः कम्बलबर्हिषोः, त्रि. कुथा कथ्या समाख्याता कुथः स्यात् करिकम्बलः। कुथः कुशः कुथः कीटः प्रासःस्थायी द्विजः कुथः, अने.

कुद्दाल. कुद्दालः स्यात् पुमान् भूमिदारणे युगपत्रके, मे. कुद्दालो युगपत्रे स्यात् कुद्दालो भूमिदारणे, वि. कुद्दालो भूमिदारणे। युगपात्रे, हे.

कुनटी. कुनटी मनःशिलायां नेपाल्यामपि योषिति, मे.

कुन्त. कुन्तो गवेधुकायां स्यात्। प्रासायुधे च कुन्ती गुग्गु-लुद्रुमयोश्च शल्लक्याम्, श. कुन्तः प्रासे चण्डभावे क्षुद्रजन्तौ गवेधुके। कुन्ती पाण्डुप्रियायाश्च शल्लक्यां गुग्गुलद्रुमे, वि.

कुन्तल. कुन्तलश्चषके वाले यवे पुंस्त्रि नीवृति, मे. कुन्तलः स्याद् यवे देशे केशलाङ्गलयोरपि, वि. कुन्तलो हलकेशयोः। कुन्तलाः स्युर्जनपदे, हे. देशे केशे च कुन्तलः, त्रि. कुन्तलो देशपर्यायः कुन्तलः केशवाचकः। कुन्तलः स्वत्वधारश्च कुन्तहस्तोऽपि कुन्तलः, धने.

कुन्ताम. कुन्तामं काचभाजने। गोलके च, वि.

कुन्त्या. कुन्त्या भूमिः समाख्याता कुन्त्या कुन्तकदम्बकम्, धने.

कुन्द. कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिधन्तरेषु ना, मे. कुन्द-चक्रभ्रमी माघ्ये निधिभेदे सुरद्विषि, वि. कुन्दोऽच्युते निधौ। चक्र-भ्रमौ च माघ्ये च, हे. पुष्पे क्लीवं भ्रमौ कुन्दः, त्रि.

कुमार. कुमारः स्यात् शुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणद्रौ ना न द्वयो जात्यकाञ्चने। कुमारी श्वेततनयानवमाल्यो-र्नदीभिदि। सहाऽपराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम्, मे. कुमारो बालके स्कन्दे युवराजेऽश्ववारके। शुके च वरुणद्रौ च कुमारं जात्य-काञ्चने। कुमारी रामतरणीनवमाल्यो र्नदीभिदि। कन्याऽपराजितागौरी-जम्बुद्वीपेषु च स्मृता, वि. कुमारोऽश्वानुचारके। युवराजे शिशौ स्कन्दे शुके वरुणपादपे। कुमारं जात्यकनके कुमारी त्वपराजिता। नदी-भिद्रामतरणी कन्यका नवमालिका। जम्बुद्वीपविभागश्च, हे. जम्बु-द्वीपसहाकन्याः कुमार्योऽथाश्ववारके। बालके कार्तिकेये च कुमारो भर्तृदारके, त्रि.

कुमुद्. कुमुत् त्रिषु स्यात् कृपणे कैरवे तु नपुंसकम्, मे. स्यात् कुमुत् कृपणेऽन्यवत्। कुमुदेऽपि कुमुत् प्रोक्तं, वि

कुमुद. कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकोपभौ। गम्भार्यां पुंसि दिङ्नागनागमाचात्वदशन्तरे, मे. कुमुदं कैरवे रक्तपद्मे कुमुदः कपौ।

दैत्यान्तरे च दिङ्नागनागयोरपि कीर्त्तितः। कुमुदा कुम्भीगम्भार्योः, वि. कुमुदः कपौ। दिङ्नागनागयो दैत्यविशेषे च सितोत्पले। कुमुदा कुम्भीगम्भार्योः, हे. स्त्री गम्भार्यां क्लीवमब्जे दिङ्नागे कुमुद. कपौ, त्रि.

कुमुद्वत्. कुमुद्वान् कुमुदभाये देशे सत्राद्याचरलिङ्गक। कुमुद्वती कुमुदिन्यां कुमुपत्न्यां च योषिति, मे. कुमुद्वती कैरविण्यां दयितायां कुमुदस्य च, हे. कुमुद्वती कुमुदिन्यां कुमुपत्न्यां कुमुद्वती, वि.

कुम्भ. कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे राक्षसान्तरे। कार्मुके वारनार्याश्च घटे क्लीवन्तु गुग्गुलौ। स्त्रियामुखाकट्फलयोः पृश्निकायाश्च पाटलौ, मे. कुम्भः सत्रात् कुम्भकर्णस्य सुते वेश्यापतौ घटे। राशिभेदे द्विपाङ्गे च कुम्भं त्रिवृति गुग्गुले। कुम्भी तु पाटलावारिपर्णीपिठरकट्फले, वि. कुम्भो वेश्यापतौ घटे। द्विपाङ्गे राक्षसे राशौ कुम्भं त्रिवृति गुग्गुलौ। कुम्भ्युखायां पाटलायां वारिपर्ण्यां च कट्फले, हे. कुम्भो घटेभमूर्द्धांशौ, श्र. कुम्भो वारस्त्रियाः कान्ते रक्षोराशिभभेदयोः, त्रि.

कुम्भकार. कुम्भकारो कुलत्थ्याश्च पुंलिङ्गो घटकारके, मे. कुम्भकारी कुलाल्यां सत्रात् कुम्भकारः कुलालके, वि. कुम्भकारः कुलालेऽङ्गौ कुम्भकारी कुलत्थिका, हे.

कुम्भयोनि. कुम्भयोनिरगस्त्ये सत्राद् वशिष्ठद्रोणयोः पुमान्, मे. कुम्भयोनिरगस्त्ये सत्राद् अर्जुनस्य गुरावपि, वि. कुम्भयोनि द्रोणेऽगस्त्यौ, हे.

कुम्भिल. कुम्भिलः श्यालमीने च चौरे श्लोकार्थचौरयोः, मे. कुम्भिलः श्यालके चौरे श्लोकच्छायाहरे झषे, वि. कुम्भिलश्चौरश्यालयोः। श्लोकच्छायाहरे श्याले, हे.

कुम्भीनस. कुम्भीनसः क्रूरसर्पे स्त्रियां लवणमातरि, मे. कुम्भीनसो विषज्वालाकुलदृष्टिभुजङ्गमे। कुम्भीनसी जनन्यां च लवणाख्यस्य रक्षसः, वि. कुम्भीनसस्त्वहौ कुम्भीनसी लवणमातरि, हे.

कुरण्ट, कुरण्टक, कुरवक. V. कुरण्ट, कुरुण्टक, कुरुवक.

कुरु. कुरुर्देशान्तरे भक्ते पुमान् पुंभूम्नि नीवृति, मे. कुरुः श्रीकण्ठजाङ्गले।. ओदने नृपभेदे च, वि. कुरुः स्यादोदने भूपभेदे श्रीकण्ठजाङ्गले, हे.

कुरण्ट. कुरण्टो दारुपुत्रां ना झिण्टाम्लानप्रभेदयोः, मे. कुरण्टो झिण्टिकाभेदे कुरण्टो दारुपुत्रिका, हे. कुरण्टी दारुपुत्रां च कुरण्टो झिण्टिकान्तरे, वि.

कुरण्टक. कुरण्टकः पीतपुष्पाऽम्लानझिण्टिकयोः पुमान्, मे.

कुरबक. कुरबकः शोणाऽम्लानझिण्टिप्रभेदयोः, मे. ख्यातः कुरबकः शोणाऽम्लानझिण्टीप्रभेदयोः, वि. कुरबकः शोणाऽम्लानाऽरुणा पीता च झिण्टिका, हे.

कुरुविन्द. कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्, मे. कुरुविन्दस्तु मुस्तायां कल्माषव्रीहिभेदयोः। हिङ्गुले पद्मरागे स्यात् मुकुरे च समीरितः, वि. कुरुविन्दः पद्मरागे मुकुरव्रीहिभेदयोः। कुल्माषे हिङ्गुले मुस्ते, हे.

कुर्वत्. कुर्वन् कर्मकरे भृतेत्र, वि.

कुर्वाण. कुर्वाणो भृत्यकारकयोस्त्रिषु, मे. कुर्वाणो भृत्यकारकयोरपि, वि.

कुल. कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबं कारुकार्यैर्षभो कुली, मे. कुलं जनपदे गृहे। सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्, शि. कुलं कुल्यगणे देहे जनपदेऽन्वयेऽपि च, हे. कुलं गोत्रे गणे देहे, वि. कुलं सङ्घः कुलं गोत्रं शरीरं कुलमुच्यते, अने.

कुलक. कुलकन्तु पटोले स्यात् सम्बद्धश्लोकसंहतौ। पुंसि वल्मीककाकेन्दुकुलश्रेष्ठेषु कथ्यते, मे. कुलकं पद्यादिश्लोकसमन्वये पटोलके। कुलकः कुलप्रधाने वल्मीके काकतिन्दुके, हे. कुलकन्तु पटोले स्यात् श्लोकसम्बद्धगुच्छके। कुलकः स्यात् कुलश्रेष्ठे वल्मीके काकतिन्दुके, वि. अथ स्यात् कुलकं श्लोकैकार्थपटोलयोः। कुलको नाकुकाकेन्दू, त्रि.

कुलाय. कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासदे, मे. कुलायः पक्षिनिलयस्थानयो र्नीडवन्मतः, वि. कुलायः पक्षिणां स्थानगेहयोः, हे. कुलायः स्थाननीड़योः, त्रि.

कुलाल कुलालः कुक्कुभे कुम्भकारेऽक्षो त्वक्षनान्तरे, मे. कुलालः कुम्भकारे स्यात् कुक्कुभे कौशिकेऽपि च, वि. कुलालो घूकपक्षिणि। कुक्कुभे कुम्भकारे च, हे.

कुलिक. कुलिको नागभेदे स्याद् द्रुमभेदे कुलसत्तमे, मे, वि कुलिकस्तु कुलश्रेष्ठे द्रुमनागविशेषयो, हे.

कुलिश. कुलिशो न स्त्री दम्भोलौ ना भषान्तरे, मे. कुलिशो मत्स्यभेदे स्याद् दम्भोलौ कुलिशं स्मृतम्, वि. कुलिशो मत्स्यभित्पव्योः, हे.

कुल्माष. कुल्माषं काञ्जिके यावके पुमान्, मे. कुल्माषो यावके प्रोक्तः कुल्माषं काञ्जिकेऽपि च, वि. कुल्माषं स्यात्तु काञ्जिके। कुल्माषोऽर्द्धस्विन्नधान्ये, हे कुल्माषं काञ्जिके यावके स्यात्, त्रि.

कुल्य. कुल्यं स्यात् कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च। कुल्या पयःप्रणाल्यां च नद्यां जीवन्तिकौषधौ। कुलोद्भवे कुलहिते त्रिषु मानेत्र पुनः पुमान्, मे. कुल्यं कुलोद्भवेऽस्मातेः कुलस्यातिहितेऽपि च। कुल्यं स्यात् कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च। पयःप्रणालीसरितो. कुल्या जीवन्तिकौषधौ, वि कुल्यं तु कुलजेऽस्थनि। सूर्पामिषाष्टद्रोणेषु कुल्या सरिति सारणौ, हे. कुल्या कुलस्त्रियामपि, त्रि.

कुवल. कुवलं चोत्पले मुक्ताफलेऽपि बदरीफले, मे, वि. कुवलं बदरीफले। मुक्ताफलोत्पलयोश्च, हे. कुवलं बदरोत्पले, त्रि.

कुवेर. कुवेरः स्यात् पुंसि नन्दीवृक्षे पुण्यजनेश्वरे, मे. कुवेरस्तु नन्दीवृक्षे धनाधिपे, वि. कुवेरस्तु धनदे नन्दीपादपे, हे. कुवेरस्तु नन्दीवृक्षैकपिङ्गयोः, त्रि

कुञ्ज कुञ्जो हस्तिदन्ते ना गुल्मे स्याद् वाच्यलिङ्गकः, मे.

कुञ्जो नुग्रज...योः, हे. ...थ कुञ्जोऽपि नुग्रजे स्यात् पादपान्तरे, वि. कुञ्जो नुग्रजे द्रुमान्तरे, त्रि.

कुश. कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले। कुशी फालेऽपि वल्गायां कुशा पापिष्ठमत्तयोः। कुशो वाच्यवदा स्यातः, वि. कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः। कुशी लोहविकारे स्यात् कुशा वल्गा कुशं जले, हे. कुशमप्सु च, च. कुशी फाले कुशा रज्ज्वां त्रिषु पापिष्ठमत्तयोः। योक्त्ररामसुतद्वीपे ना दर्भेऽस्त्री कुशं जले, मे.

कुशल. कुशलः शिक्षिते त्रिषु। क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम्, मे. कुशलः शिक्षिते क्षेमपर्याप्तिसुकृतेषु च। कुशलम्, वि. कुशलं क्षेमपुण्ययोः। पर्याप्तौ कुशलो विज्ञे, हे. पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु, अ. पर्याप्तौ शिक्षिते पुण्ये क्षेमे च कुशलध्वनिः, धने.

कुशिक. कुशिको मुनिसर्जयोः, मे. कुशिको मुनिभेदे स्यात् फाले सर्जे विभीतके, हे. कुशिकः स्यान्मुनौ तैलशेषे सर्जाक्षयोः, वि. कुशिको मुनौ। फाले, त्रि.

कुशीलव. कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि, मे, वि. कुशीलवस्तु चारणे। प्राचेतसे याचकेऽपि, हे.

कुषाकु. कुषाकुः कपिवह्न्यर्के ना परोत्तापिनि त्रिषु, मे. कुषाकुर्मर्कटे भानौ परोत्तापिनि पावके, वि.

कुष्ठ. कुष्ठं रोगे पुष्करेऽस्त्री, मे. कुष्ठो रोगे सुगन्धे च, वि. कुष्ठं भेषजरोगयोः, हे. कुष्ठं रोगौषधीभिदोः, त्रि.

कूष्माण्ड कुष्माण्डः प्रमायां स्त्री पुंसि कर्कारौ च गणान्तरे। भ्रूणान्तरे, मे. कूष्माण्डो गणभेदे स्याद् भ्रूणे कर्कारुकेऽपि च। कूष्माण्डी चौषधीगौर्योः, वि. कूष्माण्डो गणकर्कारू कूष्माण्डप्रावधिकौषधी, हे. कूष्माण्डो फलभिद्गणो, त्रि.

कुसीद. कुसीदं जीवने रक्षया क्लीबं त्रिषु कुसीदके, मे. कुसीदं जीवने रक्षया कुसीदश्च कुसीदके, वि. कुसीदं रद्धिजीवने। रद्धयाजीवे, हे.

कुसुम. कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः, मे, हे. कुसुमं पुष्पफलयो. स्त्रीरजोनेत्ररोगयोः, वि. कुसुमं स्त्रीरजः पुष्पम्, त्रि कुसुमं पुष्पमित्याहुः कुसुमं रज उच्यते, अने.

कुसुम्भ कुसुम्भं हेमनि महारजने ना कमण्डलौ, मे. कुसुम्भो हेमनि महारजने च कमण्डलौ, त्रि. कुसुम्भं तु शातकुम्भे स्यात् लङ्कायां कमण्डलौ, हे. स्यात् महारजने क्लीवं कुसुम्भं करके पुमान्, अ.

कुस्थान. कुस्थानं समरे मस्तेत्र, अने.

कुहन. कुहनं मृत्तिकाभाण्डविशेषे काचभाजने। कुहना दम्भचर्यायामीर्षालौ कुहनं लिङ्, मे. कुहना दम्भचर्यायामीर्षालौ कुहनः पुनः, वि. कुहनो मूषिके सर्पे कुहना दम्भकर्मणि, हे.

कुहर. कुहरं गह्वरे छिद्रे क्लीवं नागान्तरे पुमान्, मे. कुहरः कोटरे छिद्रनागराजविशेषयोः, वि. कुहरं गह्वरे छिद्रे, हे.

कुहरित. भवेत् कुहरितं क्लीवं पिकालापे रतध्वनौ, मे. कुहरितं पिकालापे रटिते रतनिस्वने, वि कुहरितन्तु रटिते पिकालापे रतस्वने, हे.

कुहू. कुहूः स्त्री कोकिलालापनष्टेन्दुकलदर्शयोः, मे. कुहूः स्यात् कोकिलारावनष्टेन्दुकलदर्शयोः, वि कुहू नष्टेन्दुदर्शे स्यात् क्वणिते कोकिलस्य च, हे

कूट. कूटोऽस्त्री निश्चले राशौ लोहमुद्गरदम्भयोः। मायाद्रिशृङ्गयोस्तुच्छे सीरावयवयन्त्रयोः। अनृते च, मे. कूटं पूर्द्वारदन्त्रयोः। मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः। निश्चलेऽयोघने राशौ, हे. कूटं यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे। मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदम्भयोः। पुरद्वारे च शंसन्ति, वि मायानिश्चलयन्त्रेषु कैतवानृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्, अ

कूटपाकल पित्तज्वरे कुलालस्य पवने कूटपाकलः, श.

कूप. कूप. कूपकम्भ्याने गर्तान्तःशरष्ट्रिके, मे. कूपः कूपदण-

स्तम्भस्थानगुणवृक्षके, वि कूपो गर्त्तोऽन्धौ गुणवृक्षके। स्तम्भाने कूपके, हे गुणवृक्षेऽपि कूप, त्रि

कूपक कूपको गुणवृक्षे सरात् तैलपात्रे कुकुन्दरे। उदपाने-ऽसुत्रताया च कूपिकाऽम्भोगतोपले, मे, वि कूपको गुणवृक्षे सराम् तैलपात्रे कुकुन्दरे, हे गुणवृक्षेऽपि कूपकः, त्रि

कूर्च कूर्चमस्त्री भ्रुवो मध्ये कठिनश्मश्रुकैतवे, मे कूर्चो विकत्थने। श्मश्रुणि दम्भे भ्रूमध्ये, हे कूर्चो विकत्थने मधेत्र भ्रुवोः श्मश्रुणि कैतवे, वि कूर्चमस्त्री भ्रुवो मध्येत्र श्मश्रुकैतवयोरपि, त्रि

कूर्चिका कूर्चिका सूचिकायां च तूलिकायाञ्च कुड्मले। कपाटो-द्घाटके चौरविज्ञातत्रपि योषिति, मे कूर्चिका चौरविज्ञतौ कुञ्चि-कायाञ्च कुड्मले। आलेख्यकूर्चिकासूचयोः, हे कूर्चिका सूचि-कायाञ्च तूलिकायाञ्च कुड्मले। कपाटांकुशके चौरविज्ञातावपि कूर्चिका, वि सूचयाञ्च कूर्चिका, त्रि

कूर्पर कूर्पर सरात् कफोणौ च जानुदेशे च पुंसयम्, मे, कूर्परो जानुनि प्रोक्त कफोणावपि कूर्परः वि कूर्परौ जानुकफोणी, हे

कूल अथ कूल तटे स्तूपे सैन्यपृष्ठतडागयो., मे कूलं स्तूपे तडागे च सैन्यपृष्ठप्रतीरयोः, वि कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि, हे

कूलक कूलकं न स्त्रियां स्तूपे पुंसि सरात् ह्रसिपर्वते, मे कूटक ह्रसितैले च प्रतीरस्तूपयोरपि, वि

कूव(व)र कूवरस्त्रिषु चारौ ना कुजकेऽस्त्री युगन्धरे, मे कूवरः कुब्जके चारौ कूबरश्च युगन्धरे, वि कूवरः पुनः। कुब्जे युगन्धरे रम्ये, हे

कूष्माण्ड १ कु ाण्ड

हक हक कण्ठे सयोदरे, भाने

• हकवाकु हकवाकुर्मयूरेऽपि सरटे चरणायुधे, मे, वि हकवा-कु ताम्रचूड मयूरकसामयोः हे ... त्रि

कृच्छ्र. कृच्छ्रमाख्यातमभीले पापसान्तपनादिनोः, मे, वि. कृच्छ्रं-मं ऽहसि। कष्टे सान्तपने, हे.

कृत. कृतं युगेऽनर्थं सत्राद् विहिते हिंसिते त्रिषु, मे. पर्याप्तेऽपि कृतं स्यात्, ह कृतं पर्याप्तयुगयो र्विहिते हिंसिते फले, हे. युगपर्याप्तयोः कृतम्, ध. कृतं युगेऽपि पर्याप्ते विहिते हिंसिते फले, वि.

कृतघ्न. कृतघ्नः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत्, मे. कृतघ्नः कुक्कुरेऽपि च, वि, त्रि.

कृतान्त कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु, मे, ध, वि. कृतान्तोऽशुभकर्मणि। सिद्धान्तयमदैवेषु, हे.

कृति. कृतिः करणहिंसयोः, वि, मे.

कृतिन् कृती स्यात् पण्डिते योग्ये, मे, वि. कृती योग्ये बुधे, हे. कृतिनौ योग्यपण्डितौ, त्रि

कृत्त. कृत्तन्तु वेष्टिते छिन्ने, मे, वि कृत्तं छिन्ने वेष्टिते च, हे.

कृत्ति. कृत्तिश्चर्मत्वचो र्भूर्जे कृत्तिकायां द्वयं स्त्रियाम्, मे. कृत्ति-श्चर्मत्वचो र्भूर्जे कृत्तिकायाञ्च कीर्त्तिता, वि.

कृत्य. कृत्या क्रियादेवतयोस्त्रिषु विहितकार्ययोः, मे. कृत्यं विहितकार्ययोः। कृत्या तु देवताभेदे कृत्या खन्यादिषु स्मृता, वि कृत्यो विहितेऽपि कार्ये च कृत्या सत्राद्देवता क्रिया, हे कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः, ध.

कृत्रिम. कृत्रिमं लवणभेदे ना सिह्लके रचिते त्रिषु, मे कृत्रिमं रचिते प्रोक्तं सिह्लके लवणान्तरे, वि कृत्रिमं लवणभेदे कृत्रिमः कृत-सिह्लयोः, हे.

कृत्स्न. कृत्स्नं सर्वाम्बुकुक्षिषु, मे. कृत्स्नं कटे समस्ते च, वि.

कृप. कृपो द्रोणश्यालके सत्राद् द्रोणपत्नी कृपी मता। कृपा दयायां, मे. कृपा दयायां व्यासपत्नी कृपी भारतपूरुषे, वि

कृपण. कृपणस्तु क्रिमौ पुंसि मन्दकुत्सितयोस्त्रिषु, मे. कृपणः कुत्सिते कृमौ, वि.

कृपाण. कृपाणः खड्गे च्छुरिकाकर्त्तर्योरपि योषिति, मे. कृपाणोऽसौ कृपाणी तु च्छुरिकायां च कर्त्तरौ, वि. कृपाणी कर्त्तरी च्छुरी। कृपाणोऽसौ, हे.

कूपीट. कूपीटमुदरे तोये, मे. कूपीटमुदरे जले, हे, त्रि. कूपीटमुदरे नीरे, वि. उदरे जले कूपीट, रु.

कूपीटपाल. कूपीटपाल उद्दिष्टः केनिपातसमुद्रयोः, मे. कूपीटपालमिच्छन्ति केनिपातसमुद्रयोः, वि. कूपीटपालस्तु केनिपाते जलनिधावपि, हे. कूपीटपालमिच्छन्ति केनिपाते च वारिधौ, श.

कृमि. कृमि र्ना क्रिमिवत् कीटे लाक्षायां कृमिले खरे, मे. कृमिः स्यात् क्रिमिवत् कीटे लाक्षायां कृमिले खरे, वि. क्रिमिः कृमिर्वल्लाक्षायां कीटे, हे. लाक्षायां च तथा कृमिः, रु.

कृमिकण्टक. कृमिकण्टकन्तु चित्राविडङ्गोडुम्बरेषु च, मे. सम्रात् कृमिकण्टकं चित्राविडङ्गोडुम्बरेषु च, वि. कृमिकण्टकश्चित्रायामुडुम्बरविडङ्गयोः, हे.

कृषक. कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत्, मे. कृषकौ फालकर्षकौ, हे, त्रि. कृषकः कर्षके फाले, वि.

कृषि. कृषि र्गोत्रविशेषः स्यात् कृषिः कालः कृषिः कषिः। कृषिराढक इत्युक्तः कृषि र्वैखानसो मुनिः, अने.

कृष्टि. अथ कृष्टिः स्याद् आकर्षे स्त्री बुधे पुमान्, मे. कृष्टिः सम्रात् कर्षणे बुधे, वि कृष्टिः कर्षणधीमतोः, हे. कृष्टिः कर्षे बुधे पुमान्, त्रि.

कृष्ण. कृष्ण मतत्रयसीपुत्रे वायसे केशवेऽर्जुने। कृष्णा सम्राट् द्रौपदीनीलीकणाद्राक्षासु योषिति। मेचके वाच्यलिङ्गः सम्रात् क्लीबे मरिचनीलयोः, मे. कृष्णम् मेचके। व्यासेऽर्जुने कोकिले च कृष्णं मरिचनीलयोः। कृष्णा तु द्रौपदीनीलीद्राक्षागम्सु कणत्रये। वाच्य-

वन् मेचके कृष्णे, वि. कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ। कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि। कृष्णन्तु मरिचे लोहे, हे. कृष्णो वर्णे हरौ व्यासे कृष्णं मरिचलोहयोः। पिप्पली द्रौपदी कृष्णा, त्रि. मरिचेऽपि भवेत् कृष्णम्, हा.

कृष्णवर्त्मन्. कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे, मे. कृष्णवर्त्मा हुताशे स्यात् दुराचारे विधुन्तुदे, वि. कृष्णवर्त्मा विधुन्तुदे। दुराचारे हुताशे च, हे.

कृष्णवृन्त. कृष्णवृन्ता पाटलायां माषपर्ण्यांश्च योषिति, मे. कृष्णवृन्ता पाटलायां माषपर्ण्यां च भाषिता, वि. कृष्णवृन्ता माषपर्णी पाटलाख्यद्रुमेऽपि च, हे.

कृष्णसार. कृष्णसारा शिंशपायां पुंसि स्नुह्यां मृगान्तरे, मे. कृष्णसारः स्नुहीवृक्षे शिंशपामृगभेदयोः, वि. कृष्णसारः शिंशपायां मृगभेदे स्नुहीतरौ, हे. शिंशपायां कृष्णसारा स्नुह्यांश्च, त्रि.

केतन. केतनन्तु निमन्त्रणे। गृहे केतौ च कृत्ये, मे. केतनं लाञ्छने कार्ये गेहे चोपनिमन्त्रणे, वि. केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे, हे. अथ केतनं कृत्ये केतावुपनिमन्त्रणे, अ.

केतु. केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि, मे. केतुर्द्युतिपताकयोः। ग्रहोत्पातादिचिह्नेषु, हे. ग्रहभेदे ध्वजे केतुः, अ. केतुर्द्युतौ पताकायां विग्रहोत्पातलक्ष्मसु, वि. केतुर्ग्रहोत्पातचिह्ने, त्रि. केतुर्ग्रहविशेषश्च ध्वजे चैव उदाहृतः, धने.

केदार. केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालवालयोः, मे. केदारः पर्वते शम्भौ क्षेत्रभेदालवालयोः, वि. केदारः क्षेत्रभिद्यालवाले शङ्करशैलयोः, हे.

केनार. केनार पुंसि नरके शिरःकपालसन्धिषु, मे. केनारः कुम्भिनरके शिरःकपालसन्धिषु, वि, हे.

केवल. केवलः कुहने पुमान्। नपुंसकन्तु निर्णीते यावत्रयच्चैक-

कृत्स्नयोः। केवलो ज्ञानभेदे, मे. केवलो ज्ञानभेदे सप्रात् केवलश्चैक-
कृत्स्नयोः। निर्णीते केवलं चोक्तं केवलः कुहने क्वचित्, वि. केवलं त्वेक-
कृत्स्नयोः। निर्णीते कुहने ज्ञाने केवलो ग्रन्थमित्यपि, हे. निर्णीते केवल-
मिति त्रिलिङ्गं त्वेककृत्स्नयोः, अ.

केश. केशः सप्रात् पुंसि वरुणे क्लीवेरे कुन्तलेऽपि च, मे. केशो दैत्यान्तरे वाले क्लीवेरे च प्रचेतसि, वि. केशः शिरसिजे पाशपाणौ क्लीवेरदैत्ययोः, हे. केशो वालप्रचेतसोः, त्रि.

केशट. केशटो हर्यत्रजौकणे, मे. केशटः शोषके विष्णौ, वि. त्रि.

केशव. केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु, मे. केशवो वासुदेवे सप्रात् पुन्नागे केशवत्यपि, वि. केशवः केशसंयुते। पुन्नागे वासुदेवे च, हे. केशवः केशवान् विष्णुः, त्रि.

केशिन्. अथ केशी केशवति त्रिषु। दैत्ये ना चौरपुष्प्यां स्त्री, मे.

केसर. केसरं हिङ्गुनि क्लीवं किञ्जल्के न स्त्रियां पुमान्। सिंहसटायां पुन्नागे बकुले नागकेसरे, मे. केसरं हिङ्गुनि प्रोक्तं केसरो नागकेसरे। सिंहसटायां पुन्नागकिञ्जल्कबकुलेष्वपि, वि. केसरो नागकेसरे। तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे। पुन्नागवृक्षे किञ्जल्के सप्रात् केसरन्तु हिङ्गुनि, हे. सिंहसटासु पुन्नागे बकुले नागकेसरे। केसरः पुंसि किञ्जल्के न स्त्री हिङ्गुनि न द्वयोः, त्रि.

केसरिन्. केसरी तुरगे सिंहे पुन्नागे नागकेशरे, मे, वि. केसर्यश्वेऽपि पुन्नागे नागकेसरसिंहयोः, हे. अश्वे पुन्नागेऽपि च केसरी, त्रि.

कैतव. कैतवं तु च्छले द्यूते, मे, त्रि, वि. कैतवं द्यूतदम्भयोः, हे.

कैरव. कैरवः कितवे रिपौ। नपुंसकश्च कुमुदे चन्द्रिकायां तु कैरवी, मे. कैरवः कितवे रिपौ। कैरवं कुमुदे चोक्तं चन्द्रिकायां च कैरवी, वि. कैरवः कितवे शत्रौ कैरवं सितपङ्कजे। कैरवी तु चन्द्रिकायां, हे.

कैवर्त. कैवर्त्तोऽपि च कैवर्तः कैवर्तः सलिलेचरः. धाने.

कोक　कोकश्चक्रे वृके जेत्रष्ठर्गां खर्जूरीद्रुमदर्दुरे, मे　कोको वृके चक्रवाके खर्जूरीद्रुमभेकयो, हे　कोकश्चक्रे वृके जेत्रष्ठर्गां खर्जूरीद्रुमभेकयोः, वि　कोकश्चक्रे वृकेऽपि च, त्रि.

कोकनद　अथ कोकनदं रक्तं कुमुदे रक्तपङ्कजे, मे　भवेत् कोकनदं रक्तकैरवे रक्तपङ्कजे, वि　कोकनदन्तु रक्तायो। अम्भोजन्मकुमुदयोः, हे

कोङ्कण　कोङ्कणा. स्त्रराष्ट्रजनपदे कोङ्कणं त्वायुधान्तरे, हे　कोङ्कणो देशभेदे स्त्रराष्ट्रभेद तु कोङ्कणाः, वि

कोटि　कोटिः स्त्री धनुषोऽग्रेऽस्त्रौ संख्याभेदप्रकर्षयोः, मे कोट्टरत्कर्षाटनीसंख्याः, हे　स्त्रीत् कोटिरस्त्रौ चापाग्रे संख्याभेदप्रकर्षयोः, वि आर्तुप्रत्कर्षाश्रयः कोटयः, म कोटि संख्यापि, त्रि कोटिरुत्कर्षसंख्ययाः, इ

कोटिर　कोटिर पुंसि नकुले शक्रगोपकशक्रयोः, मे　कोटिरं शक्रगोपे च शक्रे च नकुलेऽपि च, वि　कोटिरः शक्रगोपे स्त्रीत् नकुले पाकशासने, हे

कोट्टार　कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके, मे, वि, हे, हा　कोट्टारौ कूपनागरौ, त्रि

कोण　कोणो वाद्यप्रभेदे स्त्रीत् वीणादीनाञ्च वादने। एकदेशे गृहादीनामस्त्रौ च लगुडेऽपि च, मे　कोणो वाद्यप्रभेद स्त्रीत् कोणोऽस्त्रौ लगुडेऽर्कजे। वीणादिवादनोपायेऽप्येकदेशे गृहस्य च, वि　कोणो वीणादिवादने। लगुडेऽस्त्रौ लोहिताङ्गे, हे　कोणोऽस्त्रौ वाद्ये लगुडे, त्रि

कोथ　कोथो ना नेत्ररोगस्य भेदे च शटिते लिप, मे　कोथस्तु शटिते नेत्ररुग्भेदे मथनेऽपि च, वि　कोथस्तु मथने नेत्ररुग्भेदे शटितेऽपि च, हे

कोदण्ड　अथ कोदण्डं चापे ना नीवृदन्तरे। भ्रुवि, मे　कोदण्डो भ्रूलताया स्त्रीत् देशभेदे च कार्मुके, वि　कोदण्ड कार्मुके भ्रूलतयोरपि, हे

कोमल. कोमलं मृदुले जले, मे, वि. कोमलं मृदुले तोये, हे,

कोरक. कोरकोऽस्त्री कुड्मले स्यात् कक्कोलकमृणालयोः, मे. कोरकं कुड्मले विद्यात् कक्कोलकमृणालयोः, वि. कोरकन्तु कुड्मले स्यात् कक्कोलकमृणालयोः, हे.

कोल. कोलं कोलिफले क्लीबं पिप्पलीचव्ययोः स्त्रियाम्। नाऽङ्कपालौ प्लवे चित्ते वराहोत्सङ्गभेलके, मे. कोलोऽङ्कपालाऽऽत्सङ्गे भेलके पोत्रिचित्रयोः। कोली कणायां चव्ये च कोलं तु बदरीफले, वि. कोलो भेलक उत्सङ्गेऽङ्कपालत्रां चित्रके किरे। कोलन्तु बदरे. कोला पिप्पल्यां चव्यभेषजे, हे. कोलोऽङ्कपालायुत्सङ्गे वराहे भेलकेऽपि च। पिप्पल्यपि च कोला स्यात् कोलञ्च बदरीफले, वि. बदरे शूकरे कोल', याने

कोश. कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके। जातिकोशेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे, मे. कोशः कोष इवाण्डके। कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः। जातीकोशेऽसिपिधाने, हे. कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः, श्व. कोषस्तु कुड्मले पात्रे दिव्ये खड्गपिधानके। जातिकोशेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे, वि. द्रुमेऽपि मविवारेऽपि क्षपणेऽपि च कोशवाक्, याने.

कोशातक. कोशातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम्, मे. कोशातकः कचे ज्योत्स्नीपटोलीघोषकेषु च। कोशातकी वाणिजके वाडवाग्नौ मणिजत्रपि, वि. कोशातकः कचे कोशातकी ज्योत्स्ना पटोलिका। घोषके, रे. ज्योत्स्निकायां च घोषे च कोशातकी, श्व.

कोष. कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके। जातिकोषेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे, मे ४ कोश,

कोपाङ्ग. कूचो कोरे कोपाङ्गः, रा.

कोष्ठ. कोष्ठः कुसूले पार्श्वादे मध्ये कुक्षौ गृहस्य च, मे. कोष्ठः कुसूले पार्श्वादे कुक्ष्यन्तर्गृहस्य च, वि कोष्ठो निजे कुसूले च कुक्ष्यन्त-

गृहस्य च, हे. पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा, श्र. कोष्ठस्तु स्वकीयेऽपि, त्रि. अन्तर्गृहेऽपि कोष्ठः स्यात्, रु.

कोहल. कोहलो मद्यभेदे स्यात् नाट्यशास्त्रप्रवक्तरि, मे. कोहलो मद्यभेदे स्यात् कोहलः स्यान्मुनावपि, वि. कोहलो मुनिमद्ययोः, हे.

कौक्कुत्य. कौक्कुत्यमनुतापे स्याद् अयुक्तकरणेऽपि च, मे, वि, त्रि.

कौक्कुटिक. अथ कौक्कुटिकोऽदूरप्रेरितदृशि दाम्भिके, मे. कौक्कुटिको दाम्भिके स्याददूरप्रेरितेक्षणे, वि. कौक्कुटिको दाम्भिके स्याद्-दूरेरितलोचने, हे. स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः, श्र.

कौतुक. कौतुकं त्वभिलाषे स्यादुत्सवे नर्महासयोः। तथा परम्परायातमङ्गले च कुतूहले। विवाहसूत्रगीतादिभोगयोरपि न द्वयोः, मे. कौतुकं चाभिलाषे स्यादुत्सवे नर्महर्षयोः। परम्परासमायातमङ्गले च कुतूहले। विवाहसूत्रगीतादिभोगकालेषु च स्मृतम्, वि. कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि। पारम्पर्यागतख्याते मङ्गलोद्वाहसूत्रयो.। गीतादौ भोगकाले च, हे. कौतुकं मङ्गलेच्छयोः। भोग्येऽपि, त्रि.

कौतूहल. कौतूहलं प्रशस्तेऽपि, त्रि V. कुतूहल.

कौपीन. कौपीनं स्यादकार्ये च गुह्यचीरप्रदेशयो., वि. कौपीनं गुह्यदेशे स्यादकार्ये चीवरान्तरे, हे. अकार्यं गुह्यं कौपीनम्, रु. कौपीनं स्यादकार्ये च चीरगुह्यप्रदेशयोः, मे. अकार्ये गुह्ये कौपीनम्, श्र. चीरेऽपि कौपीनम्, त्रि. गुह्योऽकार्यं च कौपीनम्, अने.

कौमुद. कौमुदः स्यात् कार्त्तिकिके चन्द्रिकायां च कौमुदी, मे, वि. कौमुदस्तु कार्त्तिके कौमुदीन्दुभा, हे.

कौलीन. कौलीनं गुह्यजन्ययोः। कुकर्मणि कुलीनत्वे युद्धे पशुपक्षिणाम्, मे. कौलीनं स्यात् कुलीनत्वे गुह्ये जन्ये कुकर्मणि। कौलेयके विहङ्गादिपशूनां सङ्गरेऽपि च, वि कौलीनं जनवादेऽहिपशुपक्षिपुंसां युधि। अकार्यगुह्ययोः कौलीन्ये, हे. स्यात् कौलीनं लोकवादे युद्धे पशुपक्षिणाम्, श्र. कुलीनत्वे च गुह्ये च कौलीनम्, त्रि.

कौलेयक. कौलेयकः सारमेये कुलीने, मे. कौलेयकः कुलश्रेष्ठे स्यादिन्द्रमहकामुके, वि. अथ कौलेयकः सारमेयकुलीनयोः, हे. कौलेयकः शुनि। कुलीने च, त्रि.

कौशिक. कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः। कोषज्ञोलूकयोश्च सम्राट् विश्वामित्रमुनावपि। कौशिकी चण्डिकायाञ्च नदीभेदे च योषिति, मे. कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः। विश्वामित्रे च कोषज्ञोलूकयोरपि कौशिकः। कौशिकी चण्डिकायाञ्च नदीभेदे च कौशिकी, वि. कौशिकौ वासवोलूकौ, अने. कौशिकः शक्रघूकयोः। कोषज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ। कौशिकी चण्डिकानद्योः, हे. महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः, अ. कोषाज्ञे कौशिको विश्वामित्रे गोत्रे(?) कौशिकी, त्रि.

क्रकच. क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान्, मे. क्रकचः करपत्रे स्याद् ग्रन्थिलाख्यद्रुमेऽपि च, वि. क्रकचः करपत्रे स्याद् ग्रन्थिलाख्यतरावपि, हे.

क्रकर. क्रकरः करीरवृक्षे दीने क्रकचे पक्षिभेदे च, मे. क्रकरः क्रकचे दीने करीरे च खगान्तरे, वि. क्रकरः खगे। करीरे क्रकचे दीने, हे.

क्रतु क्रतुर्यज्ञे मुनौ पुंसि, मे. क्रतुर्यज्ञे मुने भिदि, वि.

क्रन्दन क्रन्दनं रोदनेऽपि स्यादाह्वानेऽपि, मे. क्रन्दनं रोदने ह्वाने, वि. हे क्रन्दनं रोदनाह्वाने, अ.

क्रन्दित. अथ क्रन्दितमाह्वाने रुदितेऽपि नपुंसकम्, मे. क्रन्दितं स्यात्समाह्वाने क्रन्दितं रुदितेऽपि च, वि. क्रन्दितं रुदिते हूतौ, हे.

क्रम. क्रमस्त्वानुक्रमे शक्तौ कम्पे चाक्रमणेऽपि च, मे. क्रमः शक्तौ परीपाट्यां क्रमश्चलनकम्पयोः, वि. क्रमः कल्पाङ्घ्रिशक्तिषु। परिपाट्याम्, हे

क्रमुक. क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि। फले कार्पा-

सिकायाञ्च पट्टिकालोध्रपूगयो:, मे. क्रमुको भद्रमुस्तके। गुवाके पट्टिकालोध्रे, हे. क्रमुक: पट्टिकारोध्रे भद्रमुस्तक्रपूगयो:। फले कार्पासिकायाञ्च क्रमुको ब्रह्मदारुणि, वि. क्रमुको भद्रमुस्तेऽपि, त्रि

क्रव्याद्. क्रव्याद्रक्षसि पुंसि स्यात् मांसाशिन्यन्यलिङ्गक:, मे. क्रव्यान्मांसाशिरक्षसो:, वि, हे.

क्रिमि. v. कृमि.

क्रिया. क्रिया त्वपायचेष्टयो:। आरम्भे निष्कृतौ पूजासम्प्रधारणकर्मसु। शिक्षाचिकित्साकरणे, मे. क्रिया कर्मणि चेष्टायां करणे संप्रधारणे। आरम्भोपायशिक्षार्थचिकित्सानिष्कृतिष्वपि, वि. क्रिया कारणचेष्टयो:। कर्मोपायचिकित्सासु निष्कृतौ सम्प्रधारणे। अर्चोपारम्भशिक्षासु, हे. आरम्भो निष्कृति: शिक्षा पूजनं सम्प्रधारणम्। उपाय: कर्म चेष्टा च चिकित्सा च नव क्रिया:, अ.

क्रीड़ा. क्रीडा केलिप्रकारे स्यात् खेलायञ्चानयोरपि, मे, वि. क्रीड़ा केल्यामनादरे, हे.

क्रुश. क्रुश रोदनशब्दयो:, मे. क्रुशस्तु रोदने शब्दे, त्रि.

क्रूर. क्रूरस्तु कठिने घोरे नृशंसेऽप्यभिधेयवत्, मे. क्रूरस्तु कठिने घोरे नृशंसे त्वभिधेयवत्, वि क्रूरा नृशंसघोरोष्णकठिना:, हे. क्रूरौ कठिननिर्दयौ, अ. क्रूरौ कठिनभीषणौ, त्रि.

क्रूरदृक्. क्रूरदृक् पिशुने वाच्यवल्लिङ्ग: पुंसि शनैश्चरे, मे. क्रूरदृक् खलात् खले शनौ, वि.

क्रोड़ क्रोड: शनौ शूकरे ना न पुमान् अङ्करवक्षसो:, मे. क्रोड़: शूकरपार्श्वगयो: क्रोडं क्रोड़ा च वक्षसि, वि क्रोड: कोले शनौ। क्रोड़मङ्के, हे. पर्णौ क्रोडो न ओरसि, त्रि उत्सङ्गशूकरो क्रोड़ौ, धने.

क्रोष्ट्री. क्रोष्ट्री शृगालिकाक्षीरविदारीलाङ्गलीषु च, मे, वि. क्रोष्ट्री क्षीरविदारिका। शृगालिका लाङ्गली च, हे

क्रोश. क्रोशो द्वीपविशेषे स्यात् पक्षिपर्वतभेदयो:, मे. क्रोश: खग-

नगद्वीपप्रभेदेषु प्रयुज्यते, वि. क्रौञ्चो द्वीपे खगे गिरौ, हे. क्रौञ्चः पक्ष्यद्रिभेदयोः, वि.

क्रौश्वादन. क्रौश्वादनं तु वेश्नुल्यां चित्रोटकसृणालयोः, मे. क्रौश्वादनस्तु वेश्नुल्यां चिश्रोटकसृणालयोः, वि, हा.

क्लीव. क्लीवं स्यात् पण्डके न स्त्री वाच्यलिङ्गस्त्वविक्रमे, मे.

क्लीव. क्लीवं षण्डेऽप्यपौरुषे, वि. क्लीवोऽपौरुषषण्ढयोः, हे. क्लीवो विक्रमहीनेऽपि, रु. क्लीवं नपुंसके षण्डेऽन्यवद्विक्रमे, मे. क्लीवं नपुंसकं षण्डे वाच्यलिङ्गमविक्रमे, ध.

क्लेश. क्लेशो दुःखे विपाकेऽपि व्यवसायेऽपि दृश्यते, मे. क्लेशो दुःखेऽपि रोगादौ व्यवसायेऽपि च क्वचित्, वि. क्लेशो रोगादौ दुःखे च, हे.

क्वाथ. क्वाथः स्यादतिदुःखेऽपि निष्पाकेऽपि द्रवस्य च, मे. क्वाथः स्याद्द्रवनिष्पाके दुःखव्यसनयोरपि, वि. क्वाथो व्यसनदुःखयोः। द्रव्यनिष्पाके, हे.

क्ष. क्षः संवर्त्ते राघवे च नरसिंहे च विदुर्यति। क्षेत्रे नाशे क्षेत्रपाले, मे. संवर्तको नृसिंहश्च हृदयान्यस्य संस्थितः। अनन्तः परमात्मा च वज्रकायाऽन्तिमः चकः, मा.

क्षण. क्षणः पर्वत्सवव्यापारेषु मानेऽप्यनेहसः, मे. क्षणः कालविशेषे स्यात् पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः, हे. निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः, अ. कालविशेषेऽवसरे व्यापारे पारतन्त्र्ये च। मध्ये तयोत्सवे च क्षणशब्दः कथ्यते क्षतिभिः, रु.

क्षणद. क्षणदो गणके रात्रौ क्षणदा क्षणदं जले, मे, वि. क्षणदं तोये क्षणदो गणके क्षणदा निशि, हे

क्षत्तृ. क्षत्ता शूद्राच्चक्षत्रियजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान्, मे. क्षत्ता शूद्रात् क्षत्रियायां जाते सारथिवेधसोः। नियुक्ते दासजे द्वाःस्थे, हे. क्षत्ता शूद्रात् क्षत्रियजे प्रतीहारे च सारथौ। भुजिष्यातनये क्षत्ता नियुक्ते च प्रजापतौ, वि. क्षत्ता स्यात्

सारथौ द्वाःस्थे क्षत्रियायाश्च शूद्रजे, श.

क्षम. क्षमा भूमौ तितिक्षायां स्त्रियां शक्ते नपुंसकम् । वाच्य-वच्छक्तहितयोः, मे. क्षमः स्यात् क्षमान्विते । क्षितिक्षान्त्योः क्षमा ख्याता हिते शक्ते च वाच्यवत्, वि. क्षमः शक्ते हिते युक्ते क्षमावति । क्षमा क्षान्तौ क्षितौ, हे. क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु, श.

क्षय. क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च, मे, वि. क्षयो गेहे कल्पान्तेऽपचये रुजि, हे. निलयापचयौ क्षयौ, श. क्षयं गेहं क्षयो ह्रासः, अने.

क्षर. क्षरं नीरे क्षरोऽम्बुदे, मे. क्षरं नीरे क्षरो मेघे, वि. क्षरो मेघे क्षरं जले, हे.

क्षव. क्षवः क्षुते राजिकायाम्, मे, वि, हे. राजिकायां क्षुति क्षवः, त्रि.

क्षवथु. क्षवथुर्ना क्षुते कासे, मे. क्षवथुः कथितः कासे हिक्का-यामपि दृश्यते, वि. क्षवथुः कासे हिक्कायाम्, हे. कासे क्षुते च क्ष-वथुः, त्रि.

क्षार. क्षारो रसान्तरे धूर्ते लवणे काचभस्मनोः, मे, वि. क्षारः काचे रसे गुडे । भस्मनि धूर्ते लवणे, हे. भस्मकाचरसाः क्षाराः, त्रि.

क्षारक. क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च, मे, वि. क्षार-को रसे । कोरके मत्स्यादिमाये, हे.

क्षारित. क्षारितः स्राविते क्षारैरभिशस्तेऽपि च त्रिषु, मे. क्षारितः स्राविते क्षारैरभिशस्ते च शंसितः, वि.

क्षि. क्षिः क्षेत्रे क्षरचे च नृसिंहे च प्रकीर्तितः, ए. क्षि र्निवासे गतौ क्षये, मे.

क्षिति. क्षिति र्निवासे मेदिन्यां कालभेदे क्षये स्त्रियाम्, मे. क्षिति-र्निवासे मेदिन्यां स्थानमात्रेऽपि च क्षितिः, वि. क्षिति र्गेहे भुवि क्षये, हे. क्षयवासावपि क्षितौ, श. क्षितिः पृथ्वी क्षितिः क्षयः, अने.

क्षिपणुत्र. क्षिपणुत्रस्तु पुमान् देहे सुरभौ वाचरलिङ्गकः, मे. क्षिपणुत्रः सुरभौ तनौ, वि

क्षीर. क्षीरं दुग्धे जले, मे. क्षीरं नीरे च दुग्धे च, वि. क्षीरं पानीयदुग्धयोः, हे. क्षीरमम्बु च, अ.

क्षीरदार. क्षीरदारो गुडक्षोदे गुडे मधुनि चेष्यते, हा.

क्षीराब्धिज. क्षीराब्धिजन्तु सामुद्रलवणे मौक्तिकेऽपि च। पुमांस्तुषारकिरणे कमलायां तु योषिति, मे. क्षीराब्धिजन्तु सामुद्रलवणे मौक्तिके क्वचित्। क्षीराब्धिजा श्रियां प्रोक्ता चन्द्रे क्षीराब्धिजो भवेत्, वि. क्षीराब्धिजन्तु मौक्तिके। वशिरे क्षीराब्धिजस्तु चन्द्रे क्षीराब्धिजा श्रियाम्, हे.

क्षुद्र. क्षुद्रः स्यादधमे क्रूरकृपणाल्पेषु वाच्यवत्। क्षुद्रा व्यङ्गानटी-कण्टकारिकासरघासु च। चाङ्गेरीवेश्ययो र्हिंस्रामक्षिकामात्रकेषु च, मे. क्षुद्रः स्याद् अधमे क्रूरे कृपणेऽल्पे च वाच्यवत्। क्षुद्रा वेश्यानटी-कण्टकारिकासरघासु च। चाङ्गेरीहस्तीहिंस्रामक्षिकामात्रकेषु च, वि. क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः। क्षुद्रा व्याघ्रीनटी-व्यङ्गाहस्तीसरघासु च। चाङ्गेरिकायां हिंस्रायां मक्षिकामात्रके-श्ययोः, हे. क्षुद्रः क्रूरे, ह. क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टका-रिका। त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रम्, अ. मक्षिकायामपि क्षुद्रा क्षुद्रः स्यात् कृपणे त्रिषु, त्रि क्षुद्रा वेश्या नटी क्षुद्रा क्षुद्रा स्यात् मधुमक्षिका। चमरिका, नरः क्षुद्रः क्षुद्रा स्यात् कण्टकारिका, धने.

क्षुमा क्षुमाऽतसीनीलिकयोः, मे, वि. क्षुमा सत्रान्तीलिकाऽतसी, हे

क्षुर क्षुरः स्यात् छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे, मे, वि. नापितशस्त्रोपकरणे कोकिलाक्षेऽपि च क्षुरः, त्रि. क्षुरो गोक्षुरके कोकिलाक्षे छेदनपत्त्रिणि, हे

क्षुरक क्षुरकः कोकिलाक्षे स्यात् गोक्षुरे तिलकद्रुमे, मे, वि.

क्षुल्लक क्षुल्लकस्त्रिषु नीचेऽल्पे, मे क्षुल्लक पामरे स्वल्पे कनिष्ठे दुःखिते खले, हे क्षुल्लक स्वल्पनीचयोः, वि स्वल्पेऽपि क्षुल्लकस्त्रिषु, अ क्षुल्लको नीचेऽपि, ह नीचेऽपि क्षुल्लक, त्रि

क्षेत्र क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः मे, वि क्षेत्रं भारतादौ भगाङ्गयोः। केदारे सिद्धभूपत्न्यो, हे क्षेत्रं पत्नीशरीरयोः, अ सिद्धस्थानेऽपि च क्षेत्रम्, त्रि देहे दारेषु केदारे क्षेत्रं रुद्रौ च कीर्त्त्यते, अने

क्षेत्रज्ञ क्षेत्रज्ञ आत्मनि च्छेके, मे क्षेत्रज्ञश्छेक आत्मनि, वि क्षेत्रज्ञावात्मनिपुणौ, हे पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः, ग

क्षेत्रिय क्षेत्रियं क्षेत्रजतृणे परदेहचिकित्स्ययोः। परदाररतासाध्यरोगयोः क्षेत्रियः पुमान्, म क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च। अन्यदेहचिकित्स्यार्हेऽसाध्यरोगे च जानते, वि क्षेत्रियास्त्रयः। अन्यदेहचिकित्स्यार्हासाध्यक्पारदारिकाः। क्षेत्रिय क्षेत्रजतृणे, हे

क्षेप क्षेपस्तु निन्दाविक्षेपलेपने। गर्वप्रेरणयोश्च, म क्षेपो विलम्बे निन्दायां हेलाप्रेरणलङ्घने। गर्वेऽपि, वि क्षेपा गर्वे लङ्घननिन्दयोः। विलम्बेरणहेलासु, हे

क्षेपण क्षेपणं प्रेरणे नौकादण्डजालभिदोः स्त्रियाम्, मे क्षेपणी जालभेदे स्यान्नौकादण्डे च कथ्यते, वि क्षेपणी तु नौदण्डजालभेदयोः, हे

क्षेम क्षेमोऽस्त्री लब्धरक्षणे। चण्डाया ना शुभे न स्त्री कात्यायन्यां तु यापिति, मे क्षेमं स्यान्मङ्गले लब्धरक्षणे चौरकेऽपि च। क्षेमा धनहरीगौर्योः, वि क्षेमस्तु मङ्गले। लब्धसंरक्षणे मोक्षे क्षेमाप्या धनहर्यपि, हे क्षेम कलत्राणरक्षयोः। क्षेमा दण्डा, त्रि

क्षोद क्षोदः स्यात् पुंसि रजसि पेषणे च प्रकीर्तितः, मे क्षोदो रजसि पेषणे, त्रि क्षोदः पेषणचूर्णयोः, वि, हे

क्षौद्र क्षौद्रं मधुनि पानीये, मे, वि क्षौद्र तु मधुनीरयोः, हे

क्षौम क्षौममट्टे दुकूलेऽस्त्री क्षौमं दस्कनजाशुके। शणज्येतमिजे

मे. चौमं सप्रादतसीवस्त्रे दुकूलेऽट्टालकेऽपि च, हे. चौममट्टे दुकूले च, त्रि. चौममट्टे दुकूले स्यादतसीवसनेऽपि च, वि.

घूंड. घुंडो ध्वनौ कर्णामये विषे। घूंडा वंशशलाकायां सिंहनादे च योषिति। लोहितार्कपर्णफले घोपपुष्पे नपुंसकम्। दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्तितः, मे. घूंड़ः कर्णामये ध्वाने गरले कुटिलेऽपि च। लोहितार्कफले घुंड़ं घोपपुष्पे दुरासदे। योधानां सिंहनादे तु घूंड़ा स्याद्वंशशल्यके, वि. घुंड़ः कर्णामये ध्वनौ। विषे वक्रे घूंड़ा सिंहनादवंशशलाकयोः। घूंड़ं लोहितार्कफले घोपपुष्पे दुरासदे, हे सिंहोक्तौ स्त्री विषे घुंडः, त्रि. घूंड़ा वंशशलाकाऽपि, श्र.

ख. खमिन्द्रिये पुरे क्षेत्रे शून्येत्र बिन्दौ विहायसि। संवेदने देवलोके कर्मण्यपि नपुंसकम्, मे. खं खः संविदि व्योमनीन्द्रिये। शून्येत्र बिन्दौ सुखे खस्तु सूर्यं, हे. खमिन्द्रिये सुखे स्वर्गे शून्येत्र बिन्दौ विहायसि। पुरे संवेदने क्षेत्रे कुलाहलफले क्वचित्, वि. इन्द्रियेऽपि खम्, श्र. खं स नभश्च खम्, त्रि. ऋद्धि गंद्रो च चण्डोग्रः खेटो दक्षिणकूर्परः। कैटभारिश्च मातङ्गः संहारः खार्णकः स्मृतः, मा.

खग. खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे, मे, वि. खगोऽर्कग्रहपवियु। शरे देवेऽपि, हे. शरार्कविहगाः खगाः, श्र.

खजा. खजा मन्थे प्रहत्ते, मे. खजा मन्थप्रहत्तयोः, वि. खजा दर्वीमयोः, हे.

खञ्ज खञ्जा छन्दःप्रभेदे स्त्री कुटिलाङ्घ्रौ तु वाच्यवत्, मे.

खञ्जन. खञ्जनं खञ्जरीटे स्त्री सर्पप्यां खञ्जनं गतौ, मे.

खट. खटोऽन्धकूपकफयोः प्रहारान्तरटङ्कयोः मे, वि. खटस्तृणे कफे। टङ्केऽन्धकूपे प्रहारे, हे. खटः स्मृणन्धकूपे प्रहारान्तरटङ्कयोः, हा

खटिका. खटिका लेखनद्रव्ये कर्णरन्ध्रे च वीरणे, वि.

खट्टारूढ़ खट्टारूढ़ः स्थिते खट्टामविनीते च वाच्यवत्, मे.

खड. खडः पानान्तरे भेदे, मे. V. षड्.

खड्ग. खड्गो गण्डकश्टङ्गासिबुद्धभेदेषु गण्डके, मे, वि. खड्गोऽस्त्री खड्गिश्टङ्गे च गण्डके, हे. खड्गी निस्त्रिंशगण्डकौ, त्रि.

खड्गधेनु. खड्गधेनुः स्त्रियां खड्गपुत्रिकागण्डकस्त्रियोः, मे. अस्त्रा-मपि खड्गधेनुः, षा.

खड्गरीट. खड्गरीटस्तु फलकेऽसिधाराव्रतचारिणि, हे. खड्गरी-टस्तु फलकासिधाराव्रतचारिणोः, मे. सप्रात् खड्गरीटः फलकाऽसिधारा-व्रतचारिणोः, वि.

खड्गिक. खड्गिको महिषीक्षीरफेनशौनिकयोरपि, मे, वि.

खड्गिन्. खड्गी ना गण्डके मञ्जुघोषे खड्गधरे त्रिषु, मे. खड्गी खड्गा-युधे गण्डे, वि. खड्गी गण्डके खड्गधारिणि, हे.

खण्ड. खण्डोऽस्त्री शकले नेत्रुविकारमणिदोषयोः, त्रि, मे. सप्रात् खण्डः शकले नेत्रविकारमणिदोषयोः, वि. खण्डोऽर्द्धे ऐक्षवे। मणिदोषे च, हे.

खण्डप(रशु)र्शु. खण्डपर्शुः पर्शुरामे शङ्करे चूर्णलेपिनि। खण्डा-मलकभैषज्ये सिंहिकातनयेऽपि ना, मे. खण्डपर्शुः पर्शुरामे शङ्करे चूर्ण-लेपिनि। खण्डामलकभैषज्ये सिंहिकातनयेऽपि च, वि. खण्डपर्शुः शिवे राहौ भार्गवे चूर्णलेपिनि। खण्डामलकभैषज्ये, हे धूर्जटौ खण्डपरशुः जामदग्न्ये विधुन्तुदे। खण्डामलकभैषज्ये चण्डालेऽपि स्मृतो बुधैः, वि. रुद्रेऽपि खण्डपरशु, रु.

खण्डाभ्र खण्डाभ्रमभ्रलेशे सप्रात् तथा दन्तक्षतान्तरे, मे. खण्डा-भ्रमभ्रलेशे स्यात् स्त्रीणां दन्तक्षतान्तरे, वि. खण्डाभ्रमभ्रावयवे स्त्रीणां दन्तक्षतान्तरे, हे.

खतमाल. खतमालस्तु पुंलिङ्गो धूमेऽपि च बलाहके, मे खतमालो बलाहके। धूमेऽपि, वि. खतमालो बलाहके धूमे, हे.

खदिर. खदिरो शाकभेदे स्त्री ना चन्द्रे दन्तधावने, मे. खदिरी

शाकभेदे स्यात् खदिरो दन्तधावने, वि. खदिरो शाके खदिरो दन्तधावन-चन्द्रयोः, हे.

खनक. खनको नोन्दुरौ सन्धिचौरे निष्पवदारके, मे. खनकः सन्धितस्करे। मूषके भूमिविकर्त्ते, हे. खनकः खञ्जनतखने सन्धिचौरे च मूषिके, वि. चौरोन्दुरू च खनको, त्रि.

खपुर. खपुरः कसुके भद्रमुस्तकेऽलसकेऽपि च, मे, वि. खपुरो मुस्तके पूगेऽलसके खपुरं घटे, हे. भद्रमुस्ते गुवाके च खपुरः, त्रि.

खर. खरः स्यात् तीक्ष्णधर्मयोः। गर्दभे स्त्री देवताड़े, मे. खरः सप्राङ्गर्दभे देवताडे तीक्ष्णोग्रकेऽपि च, वि. खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च, हे. देवताडे खरा स्त्री स्यात् खरो गर्दभतीक्ष्णयोः, त्रि. सत्यसन्धः खगो ज्ञेयः खरोऽपि पुरुषोत्तमः। खरो रासभ इत्युक्तो व्यवहारे खरः पटुः, रुने.

खरालिक अथ खरालिकः। ग्रामणीभण्डिनाराचेऽपुत्रप्रधाने च पुंसप्रयम्, मे. अथ खरालिकः। ग्रामणीभण्डिनाराचोपधानेषु मधु-जप्रते, वि.

खरु. खरु दर्पे हरे हये। दन्ते पुंसि त्रिषु श्वेते, मे. खरु र्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत्, वि. खरु. स्यादश्वहरयो र्दर्पदन्तसितेषु च, हे. खरुरश्वे हरे दर्पे दन्ते श्वेते तु वाच्यवत्, त्रि.

खर्जू अथ खर्जू कीटान्तरे स्मृता। खर्जूरपादपे कण्डाम्, मे. खर्जूः कण्डूं च कीटे च खर्जूरीपादपेऽपि च, वि. खर्जूः खर्जूरीकोटक-एडू,पु, हे

खर्जूर. खर्जूरं रूप्यफलयो र्वृश्चिके ना द्रुमे हयोः, मे. खर्जूरं रजते विद्यात्, वृश्चिकद्रुमभेदयोः। खर्जूरस्य, वि. खर्जूरं रूप्यफलयोः खर्जूरः कीटद्रुमयोः, हे. अथ द्रुमे पुमान्। रूप्ये फले च खर्जूरं, त्रि. खर्जूरो द्रुमभेदः स्यात् खर्जूरं रजतं मतम्। खर्जूरः क्षुद्रजातिः स्यात्

खर्पर. खर्परस्तस्करे धूर्ते भिक्षाभाण्डकपालयोः, मे. खर्परस्तस्करे धूर्ते भिक्षापात्रकपालयोः, वि. खर्परस्तस्करे भिक्षापात्रे धूर्तकपालयोः, हे. भिक्षापात्रे कपाले च खर्परस्तस्करेऽपि च, त्रि.

खर्म. खर्म पौरुषे कोषजांशुके, मे. खर्म क्षौमे च पौरुषे, वि. खर्म क्षौमे पौरुषे च, हे.

खर्व(र्ब). खर्वं संख्यान्तरे क्लीबं नीचे वामनके त्रिषु, मे. खर्बस्तु ह्रस्वे संख्यान्तरेऽपि च, वि. खर्वह्रस्वौ न्यग्वामनौ, हे.

खल. खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु, मे. खलं भूस्थान-कल्केषु क्रूरे नीचेऽधमे खलः, वि. खलः कल्के भुवि स्थाने क्रूरे कर्णेजपे-ऽधमे, हे. खलं शस्यस्थाने शठे त्रिषु, त्रि. खलो नीचः खलो राशिः खलः पिण्याक एव च, धने. खलो क्रूरः खलः क्रूरः, धने.

खलिनी. खलिनी खलवृन्दे स्यात् तालपर्णामपि स्त्रियाम्, मे.

खलु. खलु स्याद्वाक्यभूषायां जिज्ञासायाञ्च सान्त्वने। वीप्सामान-निषेधेषु पूरणे पदवाक्ययोः, मे. खलु स्याद्वाक्यभूषायां जिज्ञासादौ च सान्त्वने। निषेधनेऽपि वीप्सायां खलु मानेऽपि कीर्तितम्, वि. खलु वीप्सा-निषेधयोः। जिज्ञासायामनुनये वाक्यालङ्करणेऽपि च, हे. निषेधवाक्या-लङ्कारजिज्ञासानुनये खलु, अ.

खल्ल. खल्लो वस्त्रभेदे स्यात्, गर्त्ते चर्मणि चातके। खल्ली तु हस्तपादावमर्दनाख्यरुजि स्त्रियाम्, मे. खल्ली तु हस्तपादावमर्दनाख्य-रुजि स्मृता। खल्लो वस्त्रभेदे स्यात् निम्ने चर्मणि चातके, वि. खल्लो निम्ने वस्त्रभेदे चर्मचातकपक्षिणोः। खल्ली तु हस्तपादावमर्दनाद्वदनत्यपि, हे. खल्लश्चर्मणि चातके। वस्त्रे निम्ने च, त्रि.

खाण्ड. खाण्डः क्रोधे बलात्कृतौ, मे, वि.

खाटि. खाटिस्त्वसद्ग्रहेऽपि स्यात् किणे प्रवरये स्त्रियाम्, मे. खाटिः प्रवरये किणे। एकग्रहे, हे. खाटिः किणे प्रवरये खाटिरेकग्रहे स्मृता, वि.

खिखिरा, खिङ्खिर. खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके, मे खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके। खिखिरावद् बहुत्वे च, वि, हे.

खिल. खिलमप्रहते क्लीवं सारसंक्षिप्तयेधसोः, मे. खिलं भवेदप्रहते सारसंक्षिप्तयेधसोः, वि.

खुर. खुरः कोलदले शफे, मे, वि, त्रि. खुरः शफे कोलदले, हे.

खेट. खेटः कफे ग्रामभेदे चर्मण्यस्त्रत्रवर्तिनि त्रिषु, मे. अथ खेटः स्याद् ग्रामभेदे कफेऽधमे। स्फारे स्वगवेत्र, हे. खेटः कफे ग्रामभेदे निन्दिते वसुनन्दके, वि. खेटः सिङ्घानके हीने, त्रि. स्त्र्येषाप्यपि खेटः स्यात्, श.

खोलक. स्यात् खोलकस्तु पाके शिरस्त्रवल्मीकपूगकोशेषु, मे. खोलकः पाकवल्मीकपूगकोशशिरस्त्रके, वि. खोलकः पूगकोषे स्याच्छिरस्त्रे नाकुपाकयोः, हे. मधुस्ताणे नाको च खोलकः, त्रि.

ग. (गो गणेशे च नाके च वियत्यपि पुमानयम्। गः सुमेरौ समाख्यातः गायत्रीगीतयोः पुमान्। गन्धर्वे चापि गः ख्यातो गायके चाभिधेयवत्, मे.) स्मृतिः पश्चान्तगः शार्ङ्गी गणेशो मणिबन्धनः। गोमुखो गजकुम्भश्च गकारः सिंहसंज्ञकः, मा.

गज. गजो माने मतङ्गजे। वास्तुनः स्थानभेदेऽपि, मे.

गजाह्व. गजाह्वा करिपिप्पल्यां गजाह्वं हस्तिनापुरे, वि, मे.

गञ्ज. गञ्जा खनौ सुरागृहे। गञ्जः स्यात् पुंसि रौद्रायां भाण्डागारे तु न स्त्रियाम्, मे. गञ्जा खनौ सुरागेहे स्याद् भाण्डागाररौद्रयोः। गञ्जः, वि. गञ्जो भाण्डागारे रौद्राखन्यो गञ्जा सुरालये, हे. खनौ सुरागृहे गञ्जा, त्रि. गञ्जो भाण्डारे, हे.

गड़. गड़ो मीनान्तराययोः, मे, वि, हे.

गड्. गड्ः पृष्ठगुड़े कुब्जे, मे, वि, हे.

गण. गणः प्रमथसङ्घौघे चण्डासैन्यप्रभेदयोः, मे. गणः समूहे प्रमथे संख्यासैन्यप्रभेदयोः, वि. गणः प्रमथसङ्घयोः। समूहे सैन्यभेदे च, हे सङ्घाते प्रमथे गणः, श.

गणाधिपति. स्याद्गणाधिपतिः पुंसि शङ्करेऽपि गजानने, मे. गणाधिपतिराख्यातः शङ्करेऽपि गजानने, वि. स्याद्गणाधिपति र्विघ्ननायके पार्वतीपतौ, हे.

गणक. गणिका यूथीवेश्याभीतकारीषु ना तु दैवज्ञे, मे, गणिका यूथिकावेश्यातर्कारीकरिणीषु च। गणकोऽपि च दैवज्ञे, वि. वेश्यायूथ्योश्च गणिका, त्रि. गणको ग्रहवेदिनि। गणिकेभा यूथिकायां तर्कार्यां पण्ययोषिति, हे. हस्तिन्यां गणिका, रु.

गणेरु. गणेरुः कर्णिकारद्रौ करिणीवेश्ययोः स्त्रियाम्, मे. V. कणेरुः

गण्ड. गण्डः स्यात् पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे, मे. गण्डः कपोले पिटके योगभेदे च गण्डके। गण्डः प्रवीरे चिह्ने स्याद् अश्वभूषणबुद्बुदे, वि. गण्डस्तु वीरे पिटकचिह्नयोः। कपोले गण्डके योगे वाजिभूषणबुद्बुदे, हे. गण्डः कपोले पिटके श्रेष्ठगण्डकयोः पुमान्, त्रि.

गण्डक. गण्डकः पुंसि खड्गे स्यात् संख्याविद्याप्रभेदयोः। अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे, मे. गण्डकः खड्गिनि ख्यातः संख्याविद्याप्रभेदयोः। अवच्छेदेऽन्तराये च गण्डकी सरिदन्तरे, वि. गण्डको विघ्ने विद्यायां संख्यावच्छेदखड्गिषु। गण्डकी तु सरिद्भेदे, हे, सङ्ग्रामभेदे च गण्डकः, त्रि.

गण्डशैल. गण्डशैलो ललाटे स्याच्च्युतस्थूलोपले गिरेः, मे, वि. गण्डशैलोऽद्रिच्युतस्थूलाश्मभालयोः, हे.

गण्डूष. गण्डूषो मुखपूर्त्तौभपुष्करप्रसृतोन्मिते, मे. गण्डूषो मुखपूर्त्तौ स्यात् करिहस्ताङ्गुलावपि। प्रसृतोन्मिते, वि. गण्डूषो मुखपूरणे। गजास्ये च कराङ्गुल्यां प्रसृत्यां प्रमितेऽपि च, हे.

गत. गतं विज्ञानयातयोः, मे. गतन्तु याताधिगते, वि.

गति. गतिः स्त्री मार्गदशयो र्ज्ञाने यात्राभ्युपाययोः। नाडीव्रणसरण्यां च, मे. गति र्दशारूपे ज्ञाने यात्रोपायदशाध्वसु, हे. गति र्मार्गे

दशायाञ्च स्थाने यात्राभ्युपायथोः। नाडीव्रणसरणयाञ्च, वि. गति र्यात्रा-दशोपायाः, त्रि. ४. दशा.

गद. गदो भ्रातरि विष्णोः स्यात् आमये नाऽयुधे गदा, मे. गदो भ्रातरि विष्णोः स्यात् आमयेऽप्यायुधे गदा, वि. गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे, हे. अथामये गदः। विष्णो र्भ्रातरि चास्त्रे स्त्री, त्रि.

गदयित्नु. गदयित्नुः पुमान् कामे जल्पाके कामुकेऽपि च, मे. गदयित्नुः स्मृतः कामे जल्पाके कामुकेऽपि च, वि. गदयित्नुः शरासने। जल्पाके पुष्पचापे च, हे.

गन्ध. गन्धः प्रतिवेश्यामोदलेशसम्बन्धगन्धकेषु, मे. गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः, वि. गन्धः सम्बन्धलेशयोः। गन्धकामोद-गर्वेषु, हे. गन्धो गर्वे बलेऽपि च, त्रि. गन्धो लेशेऽपि, श.

गन्धन. गन्धनन्तूत्साहे स्यात् प्रकाशने सूचनेऽपि हिंसायाम्, मे. गन्धनं सूचनोत्साहहिंसनेषु प्रकाशने, वि. गन्धनन्तु प्रकाशने। सूचनो-त्साहहिंसासु, हे. उत्साहने च हिंसायां सूचने चापि गन्धनम्, म. उत्सा-हनसूचनयोः प्रकाशने गन्धनं प्रोक्तम्. श.

गन्धफली. गन्धफल्यपि गुन्द्रायां चम्पकस्य च कोरके, मे. गन्ध-फली प्रियङ्गौ स्यात् कोरके चम्पकस्य च, वि. गन्धफली तु प्रियङ्गौ चम्पकस्य च कोरके, हे.

गन्धमादन. स्याद्गन्धमादनो भृङ्गे गन्धके वानरान्तरे। स्त्री सुरायां नगे न स्त्री, मे. गन्धमादनमित्याहु र्गन्धके वानरान्तरे। अद्रिभेदे च भृङ्गे च सुरायां गन्धमादनी, वि. गन्धमादनः कप्यद्रिभिदोरलौ च गन्धके। गन्धमादनी सुरायाम्, हे.

गन्धर्व(र्व). गन्धर्वः पशुभेदे स्यात् पुंस्कोकिलतुरङ्गयोः। अन्तरा-भवसत्वे च गायने खेचरेऽपि च, मे. गन्धर्वो मृगभेदे स्यात् पुंस्कोकिल-तुरङ्गयोः। अन्तराभवसत्वे च गायने खेचरेऽपि च, वि. गन्धर्वस्तु नभ-

चरे। पुंस्कोकिले गायने च खगभेदे तुरङ्गमे। अन्तराभवदेहे च, हे. अन्तराभवसत्वेऽश्वे गन्धर्वो दिव्यगायने, अ. गन्धर्वो देवजातिः स्यात् गन्धर्वो हि तुरङ्गमः। गन्धर्वश्च मृगो गीतो गन्धर्वो खगपुङ्गव, धने.

गन्धवती. अथ गन्धवती पृथ्वीपुरीभिद्व्यासमातृषु। सुरायाञ्च, मे. गन्धवती सुराभूम्योः पुरीयोजनगन्धयोः, वि. गन्धवती सुराभूम्योः पृथ्वीयोजनगन्धयो, हे.

गन्धवह. स्याद्गन्धवहा नासायां पुंलिङ्गो मातरिश्वनि, मे. गन्धवहा तु नासायां वायौ गन्धवहो मतः, वि. गन्धवहो स्मृगेऽनिले। गन्धवहा तु नासायाम्, हे.

गन्धार. गन्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे, हे. ४. गान्धार.

गन्धोली. गन्धोली भद्राभद्योश्च योषिति, मे. गन्धोली वरटाभद्राशटीषु कथिता बुधैः, वि. गन्धोली वरटाशट्यो भद्रायाम्, हे.

गभस्ति. गभस्तिः किरणे सूर्ये स्वाहायां च विलोक्यते, वि. गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि, हे. गभस्तिः किरणे सूर्ये ना स्वाहायान्तु योषिति, मे.

गम. गमो नाऽक्षविवर्त्ते स्यात् अपर्यालोचितेऽध्वनि, मे. गमो द्यूतनभेदे स्यात् अपर्यालोचितेऽध्वनि, वि. गमोऽध्वद्यूतभेदयोः। सहक्पाठे, हे.

गय. गयः स्यात् प्रसुराजर्षौ भेदे तीर्थे पुन र्गया, मे.

गर. गरो व्वरायां करणे क्लीवं नोपविषे विषे, मे. गरो व्याधावुपविषे विषे च करणे गरम्, वि. गरस्तूपविषे विषे। रोगे गरं स्यात् करणे, हे.

गरल. गरलं तृणपूले च विषे माने नपुंसकम्, मे. गरलन्तु विषे माने गरलं तृणपूलके, वि. गरलं पन्नगविषे तृणपूलकमानयोः, हे.

गरुत्मत्. गरुत्मांश्च पक्षिमात्रे खगाधिपे, मे. गरुत्मान् विहगे तार्क्ष्ये च, वि. गरुत्मांस्तु विहगे पन्नगाशने, हे. पक्षिताक्ष्यौ गरुत्मन्तौ, ध.

गर्ग. (गर्गो मुनिविशेषे स्यात् वृषे किञ्चलुकेऽपि च, हे.)

गर्गर. गर्गरो मीनभेदे स्त्री मन्थन्याम्, मे. गर्गरो मीनभेदे स्यात् मन्थन्यामपि गर्गरी, वि. गर्गरो मीने स्यात्गर्गरी तु मन्थनी, हे.

गर्जन. गर्जनं निनदे कोपे, मे. गर्जनं स्तनिते क्रुधि, हे. गर्जनं निस्वने कोपे, वि.

गर्जित. गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे, मे. गर्जितो मत्तमातङ्गे गर्जितं जलदध्वनौ, वि. गर्जितो मत्तकुञ्जरे। गर्जितं जलदध्वाने, हे. गर्जितं स्तनिते नेभे, लि.

गर्त. गर्तस्त्रिगर्तभेदे स्यात् अवटे च कुकुन्दरे, मे, वि. गर्त्तोऽवटे कुकुन्दरे। त्रिगर्त्तांशे, हे.

गर्दभ. गर्दभं श्वेतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तुरोगविशेषयोः, मे. गर्दभो गन्धभेदे स्यात् गर्दभं कैरवे खरे। गर्दभो गर्दभी क्षुद्ररोगजन्तुविशेषयोः, वि गर्दभो रासभे गन्धे गर्दभी जन्तुरुग्भिदोः। गर्दभन्तु सितकुमुदे, हे. गर्दभं श्वेतकुमुदे खरे पुंसि, लि.

गर्व. गर्वोऽभिमानेऽवलेपे, मे.

गर्भ. गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके, मे, वि. गर्भः कुक्षौ शिशौ सन्धौ भ्रूणे पनसकण्टके। मध्यमे चापवरके, हे. कुक्षिभ्रूणाऽर्भका गर्भाः, अ.

गर्मुत् गर्मुत् स्त्री स्वर्णलतयोः, मे. गर्मुत् सुवर्णलतयोः, वि. *शैले तृणविशेषेऽर्के त्रिषु गर्मुत्स्त्रि अल्लिः, त्रिले.*

गल. गलः सर्जरसे कण्ठे, मे, वि. गलः कण्ठे सर्जरसे, हे.

गवाक्ष. गवाक्षो प्लवगावृक्षयां गवाक्षो जालके कपौ, वि, मे. गवाक्षो जालके कपौ। गवाक्षी त्विन्द्रवारुण्याम्, हे.

गवादनी. गवादनीन्द्रवारुण्यां गवां घासादनाश्रये, मे, वि. गवादनीन्द्रवारुणी। घासस्थानं गवादीनाम्, हे.

गव्य. गव्यं नपुंसके ज्यायां रागद्रव्येऽप्यथ स्त्रियाम्। गोसमूहे ,,

त्रिलिङ्गन्तु गोदुग्धादौ च गोहिते, मे. गव्यं च गोहिते तथा चीरादिके गवाम्। रागद्रूयेर च गव्या तु गोकुले कथिता बुधैः, वि. गव्यं चीरादिके जरायां रागवस्तुनि गोहिते। गव्या गोवृन्दगव्यूतयो', हे. गव्यं गोहितदुग्धादौ जरायां गव्या तु गोकुले, त्रि.

गहन. गहनं कलिले त्रिषु। नपुंसकं गह्वरे स्यात् दुःखकानन-योरपि, मे. गहनं गह्वने दुःखे विपिने कलिलेऽपि च, वि. गहनं वनदुःखयोः। गह्वरे कलिले चापि, हे. गहनं गह्वरे दुःखे वने, त्रि.

गह्वर. अथ गह्वरम्। गुहागहनदम्भेषु निकुञ्जे तु पुमानयम्, मे. गह्वरस्तु गुहादम्भनिकुञ्जगहनेष्वपि, वि. गह्वरो विलदम्भयोः। कुञ्जे, हे. गुहादम्भौ गह्वरे, अ. गह्वरे हे गुहाकुञ्जे, त्रि. दम्भेऽपि गह्वरम्, श.

गाङ्ग. गाङ्गस्तु गङ्गासम्भूते त्रिषु भीष्मे गुहे पुमान्, मे. गाङ्गस्तु गङ्गासम्भूते भीष्मे शक्तिधरेऽपि च, वि. v. गाङ्गेय.

गाङ्गेय. गाङ्गेयः स्यात् पुमान् भीष्मे क्लीबं स्वर्णकसेरुणोः, मे. गाङ्गेयो जाह्नवीसुते। कसेरुस्वर्णसुस्तेषु गाङ्गेयमिति कथ्यते, वि. गाङ्गेयं स्वर्णमुस्तयोः। कसेरुण्यथ गाङ्गयो गाङ्गवत् स्कन्दभीष्मयोः, हे. कसेरुहेम्नो गाङ्गेयम्, अ. भीष्मे ना हेम्नि गाङ्गेयम्, त्रि.

गाढमुष्टि. गाढमुष्टिः कृपाणे ना कृपणे त्वभिधेयवत्, मे. स्यात् गाढमुष्टिः कृपणे कृपाणादिषु चेष्यते, वि. गाढमुष्टिस्तु कृपणे कृपाणप्रभृतावपि, हे.

गाण्डी(ण्डि)व. गाण्डीवो गाण्डिवश्चास्त्री कार्मुकेऽर्जुनकार्मुके, मे गाण्डीवं गाण्डिवं जिष्णोः कोदण्डे कार्मुकेऽपि च, वि. गाण्डीवगाण्डिवौ चापमात्रे पार्थधनुष्यपि, हे.

गातु. गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे, मे गातुः पुंस्कोकिले भृङ्गे गन्धर्वे रोषणेऽपि च, वि, हे.

गात्र. गात्रं गजाग्रजङ्घादौ क्लीवमङ्गे कलेवरे, मे. गात्रमङ्गे कले

वरे। स्वम्बेरमाग्रजङ्घाया विभागेऽपि समीरितम्, वि. गात्रमङ्गशरीरयोः। गजाग्रदेशे, हे.

गाथा. गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः, मे. गाथा वाग्भेदवृत्तयोः, वि, हे.

गाध. गाधः स्थाने च लिप्सायाम्, मे, वि. गाधः सत्रात् स्थान्लिप्सयोः, हे.

गान्धार. गान्धारः पुंसि सिन्दूरे रागदेशप्रभेदयोः, मे. गान्धारः सिन्दूरे रागदेशयोः, वि. स्वरे रागे च गान्धारः, त्रि.

गान्धिक. गान्धिको लेखकेऽपि स्यात् सुगन्धिव्यवहारिणि, मे. गान्धिकं लेखके प्राहुः सुगन्धिव्यवहारिणि, वि. गान्धिको लेखके गन्धवाणिजे, हे. गान्धिको लेखकेऽपि स्यात्, त्रि.

गायत्री. गायत्री त्रिपदादेवीच्छन्दोभित्खदिरेषु च, मे. गायत्री कथिता च्छन्दःप्रभेदे खदिरेऽपि च, वि. गायत्री खदिरे छन्दोविशेषे, हे. गायत्री खदिरे स्त्री स्यात् छन्दस्यपि षड्वरे, त्रि.

गारुड़. क्षयो गारुड़ं तु ङ्क्ते मरकतेऽपि च, मे. गारुड़ं स्यान्मरकते विषशास्त्रेऽपि गारुड़म्, वि. गारुड़ं तु मरकते विषशास्त्रे, हे.

गाल. गालः स्कन्धमलीवर्द्धोः, वि.

गालव. गालवस्तु मुनौ लोध्रे, मे. गालवो मुनिलोध्रयोः, वि, हे, त्रि.

गिर्. गीः स्त्री भाषासरस्वत्योः, मे. वचो वाक्यश्च गी र्मता, अने. v. वाच्.

गिरि. गिरिर्ना नेत्ररुग्भिदि। शक्रो गिरियके योषिद्, गौर्ये पूजेय पुनस्त्रिष, मे. गिरि गौर्यां गिरियके क्रीड़ाकन्दुकशैलयो.। नेत्रामयविशेषेऽपि पूज्ये तु गिरिरन्यवत्, वि. गिरिः पूज्येऽक्षिरुजि कन्दुके। शैले गिरियके गौर्यावपि, हे

ऽपि गिरिजा गौरीमातुलुङ्गयोश्च योषिति, मे. गिरिजं चाभ्रके स्यात् शिलाजतुसुगन्धयोः। लोहेऽपि गिरिजा गौरीमातुलिङ्गयोरद्रीरिता, वि. गिरिजमभ्रके। शिलाजतुनि लोहे च गिरिजा मातलुङ्ग्रमा, हे.

गिरिसार. गिरिसारः पुमान् लोहे वङ्गे मलयपर्वते, मे. गिरिसारो भवेल्लोहे लिङ्गे मलयपर्वते, वि गिरिसार. पुन लोहे लिङ्गे मलयपर्वते, हे.

गिरीश. गिरीशोऽद्रिपतौ वाचस्पतिशङ्करयोः पुमान्, मे. गिरीशो वाक्पतौ रुद्रे गिरीशोऽद्रिपतावपि, वि. गिरीशो वाक्पतौ हरे। अद्रिराजे, हे.

गीत. गीतं शब्दितगानयोः, मे, हे,वि. गीतन्तु शब्दिते गाने, वि.

गीति. गीतिश्छन्दसि गाने स्त्री, मे. गीतिश्छन्दसि गाने च, वि, हे.

गुच्छ(च्छ). सप्राद् गुच्छः स्तवके स्यान्मे हारभेदकलापयोः, मे, वि. गुच्छो गुच्छो हारकलापयोः, हे. गुच्छः स्तवकहारयोः, अ.

गुञ्जा. गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ, मे. गुञ्जा तु कृष्णलायां स्यात् पटहे मधुरध्वनौ, हे. गुञ्जाऽपि पटहे प्रोक्ता काकचिञ्चा कलध्वनौ, वि. गुञ्जे पटहकृष्णले, त्रि.

गुड. गुडः स्याद् गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुह्यां कथिता गुडिकायाञ्च योषिति, मे. गुडः स्याद् गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुहीगुडिकयोः, वि. गुडः कुञ्जरसन्नाहे गोलकेक्षुविकारयोः। गुडा तु गुडिकास्नुह्योः, हे. गुडो गालेघुपाकयोः, अ.

गुण गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्यादिसत्वादिसन्ध्यादावृत्तिरज्जुषु। शुक्लादावपि वध्यायाञ्च, मे. गुणो त्रासूदतन्तुषु। रज्जौ सत्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये। रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे, हे मौर्व्यां द्रव्याश्रिते सत्वशौर्यसन्ध्यादिके गुणः, अ. गुणः स्याद्रज्जुसूदयोः, त्रि. सत्वादौ रूपादौ

सर्वादौ सन्तुषु प्रयोगज्ञाः। गुणशब्दं प्रिविलिन्यां प्रयोजयन्त्यप्रधाने-ऽपि, ह. गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। शुक्ले सत्वादि-सन्ध्यादिविद्यादिहरितादिषु, वि.

गुणनिका. भवेद्गुणनिका नृत्ये शून्याङ्के पाठनिश्चितौ, मे, वि. गुणनिका तु शून्याङ्के नर्तने पाठनिश्चये, हे. शून्याङ्केऽपि गुणनिका, शा.

गुण्डक. गुण्डको मलिने धूलौ कलोक्तिस्नेहपात्रयोः मे, वि. गुण्डकः पुनः। कलोक्तौ मलिने धूलौ स्नेहपात्रे, हे.

गुत्स. गुत्स, सप्रात् स्तवके स्तम्बे हारभिद्ग्रन्थिपर्णयोः, मे. गुत्सः स्तम्बे हारभेदे स्तवके ग्रन्थिपर्णके, वि. गुत्सः स्तम्बगुलुच्छयोः। हार-भेदे ग्रन्थिपर्णे, हे. गुत्सः स्तवकहारयोः, त्रि.

गुन्द्र. गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके, मे. गुन्द्रस्तेजनके गुन्द्रा प्रियङ्गौ भद्रमुस्तके। कैवर्तीमुस्तके चापि, वि. गुन्द्रस्तु तेजने। गुन्द्रा प्रियङ्गौ कैवर्तीमुस्तके भद्रमुस्तके, हे. गुन्द्रस्तेजनके गुन्द्रा त्रिलिङ्गां भद्रमुस्तके, त्रि.

गुप्त. गुप्तं सप्राद् रक्षिते गूढे, मे. गुप्तं गूढे त्राते, हे. गुप्तं रक्षितगूढयोः, वि, त्रि.

गुप्ति. गुप्तिः स्वप्रवकरस्थाने कारागारे च रक्षणे, मे. गुप्तिः कारा-गृहे प्रोक्ता भूगर्त्ते रक्षणे यमे, वि. गुप्ति र्यमे भूगर्त्तरक्षयोः। कारायाम्, हे. गुप्तिः क्षितिबुग्नदारेऽपि, श.

गुम्फ. गुम्फः सप्राद् गुम्फने बाहोरलङ्कारे च कीर्त्तयते, वि. गुम्फो दोर्भूषणे दृब्धौ, हे. गुम्फस्तु गुम्फने बाहोरलङ्कारे च कीर्त्तयते, मे.

गुरु. गुरुस्त्रिलिङ्गयां महति दुर्जरालघुनोरपि। पुमान् निषेका-दिकारे पित्रादौ सुरमन्त्रिणि, मे. गुरु र्निषेकादिकारे पित्रादौ सुरम-न्त्रिणि। दुर्जरालघुनोः प्रोक्तो गुरु र्महति वाच्यवत्, वि. गुरु र्महत्या-ङ्गिरसे पित्रादौ धर्मदेशके। अलघौ दुर्जरे चापि, हे. गुरू गीष्पति-पित्राद्यौ, अ. गुरुस्त्रिलिङ्गयां महति दुर्जरालघुनोरपि, त्रि. गुरुः पिता

गुरुर्ज्येष्ठो गुरुः सुरपुरोहित.। दुर्भरोऽपि गुरुः प्रोक्तो गुरुः शिष्याभिषेचकः स्मृतः.

गुल. गुलः सत्रादिद्रवे पुमान्। गुली तु गुटिकारोगभिदोः स्तुत्या गुला स्मृता, मे.

गुल्म. गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः। स्तम्बे स्त्रियामामलक्यां लावम्यौषस्कमेघसस्तु, मे. गुल्मः रुक्स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे। गुल्मौ सत्रादामलक्यां लावनिकायस्कमेघसस्तु, वि. गुल्मः सैन्योपरक्षणे। रुक्सैन्यघट्टभेदेषु स्तम्बे गुल्मी पटौकसि। आमलक्यैलयो र्वन्याम्, हे. गुल्मा रुक्स्तम्बसेनाश्च, अ. गुल्मः स्तम्बे घट्टभेदे, त्रि.

गुह. गुहः षाण्मातुरे गुहा। सिंहपुच्छ्याश्च गर्त्ते च पर्वतादेश्च गह्वरे, मे. गुहः स्कन्दे गुहा पुनः। गह्वरे सिंहपुच्छ्यां च, हे. गुहा तु गह्वरे सिंहपुच्छ्यां स्कन्दे गुहो मतः, वि.

गुह्य. गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः, मे, वि गुह्यः कमठदम्भयोः। गुह्यमुपस्थे रहस्येत्र, हे. रहस्योपस्थयो र्गुह्यम्, अ.

गूढ. गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु, मे. गूढं रहःसंवृतयोः, हे. गूढं रहसि गुह्ये च संवृते पुनरन्यवत्, वि.

गृञ्जन. गृञ्जनम्। विषदिग्धपशो र्मांसे क्लीवं पुंसि रसोनके, मे. गृञ्जनस्तु रसोनके। विषदिग्धपशो र्मांसे गृञ्जनं च प्रकीर्तितम्, वि. गृञ्जनं विषदग्धस्य पशो र्मांसे रसोनके, हे. विषदिग्धपशो र्मांसे गृञ्जनं ना रसोनके, त्रि.

गृध्र. गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽर्थलुब्धके, मे. गृध्रः खगान्तरे प्रोक्तः वाच्यवच्चार्थलुब्धके, वि. गृध्रो गृध्नौ खगान्तरे, हे. गृध्रः स्याल्लोभिपक्षिणोः, त्रि.

गृष्टि. अथ गृष्टिः सकृत्सूतगवीवदरयोः स्त्रियाम्, मे. गृष्टिस्तु सकृत्सूतगवी भवेत्। वराहकान्ता च, हे. गृष्टिः धेन्वोषधीभिदोः, त्रि.

गृह. गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि, मे. गृहाः पत्नी.-

गृहे स्मृता, वि. गृहा दारेषु सद्मनि, हे. दारेषु च गृहाः, श्र.

गृहपति. भवेद् गृहपतिः पुंसि गृहस्थेऽपि च मन्त्रिणि, मे. गृहपति र्गृहस्थे स्याद् अत्याधाने च मन्त्रिणि, वि. गृहपति र्गृही मन्त्री, हे. गृही मन्त्री गृहपतिः, त्रि.

गृह्य. गृह्यं गुदे ग्रन्थिभेदे क्लीवं शाखापुरे स्त्रियाम्। गृहासक्त-मृगाद्यौ ना त्रिषु चास्वैरिपक्षयोः, मे. गृह्यं पुरीषमार्गेऽपि भवेदस्वैर-पक्षयोः। गृह्या च शाखानगरे गृह्यन्त्वकेऽप्युदीरितः, वि. गृह्यन्तु मल-वर्त्मनि। गृह्योऽस्वैरिणि पक्षे च गृहासक्तमृगाण्डजे। गृह्या तु शाखा-नगरे, हे. गृह्यमस्वैरिपक्षयोः, त्रि.

गृह्यक. गृह्यको निभृते च्छेके, मे. गृह्यकश्च्छेकनिभृतयोः, वि, त्रि.

गेय. गेयः स्याद् गातव्ये गायने त्रिषु, मे. गेयो गातव्येऽत्र गायनेऽपि च, वि. गेयौ गातव्यगायनौ, हे. गातव्यगायनौ गेयौ, त्रि.

गेष्णु. गेष्णु र्ना गायने नटे, मे. गेष्णु र्नटे गायके च, हे. गेष्णु-र्नटे गायने च, वि.

गैरिक. गैरिकं धातुकनकयोः, मे. गैरिकं कनके धातौ, त्रि. अथ गैरिकम्। स्वर्णे धातौ, हे. स्वर्णेऽपि गैरिकम्, श्र.

गो. गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी-दृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च, मे. गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः। अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौ र्मता, वि. गौरुदके दृशि। स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि, हे. स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः, श्र. स्वर्गे वज्रे च रश्मौ च बलीवर्दे च गौः पुमान्। स्त्री बाणरोहिणीदृग्दिग्वाग्भू-मिष्वप्सु भूम्नि च, त्रि. दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु। भूमौ पशौ च गोशब्दो विद्वद्भि र्दशसु स्मृतः, रु. बाणे वाचि पशौ भूमौ दिशि रश्मौ जलेऽक्षिणि। स्वर्गे मातरि वज्रेऽग्नौ सुखे सत्ये च गोध्वनिः, श्रने

गोकण्टक. गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे, मे, वि. गोकण्टको गोक्षुरके गोखुरे स्थपुटीकृते, हे.

गोकर्ण. गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे। अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ, मे. गोकर्णोऽश्वतरे सर्पे सारङ्गे प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ, वि. गोकर्णः प्रमथान्तरे। अङ्गुष्ठानामिकोन्माने मृगेऽश्वतरसर्पयोः। गोकर्णी तु मूर्विकायाम्, हे. अङ्गुष्ठानामिकोन्माने गोकर्णोऽङ्घ्रौ मृगेऽपि च, त्रि.

गोकिल. गोकिलो मुषले हले, हा. गोकिलः। मुषले लाङ्गले चापि, हे. गोकिलो मुसले हले, वि, मे.

गोकुणिक. स्याद्, गोकुणिको बलिरे पङ्कस्थगवुरपेक्षके, मे. गोकुणिकः केकरे स्यात् पङ्कस्थगवुरपेक्षके, वि, हे.

गोग्रन्थि. गोग्रन्थि र्ना करीषे स्याद्गोष्ठे गोजिह्विकौषधौ, मे, वि.

गोजागरिक. गोजगरिकमित्याहु र्मङ्गले कण्टकारके, वि. गोजागरिकं मङ्गले पुंसि स्यात् कण्टकारके, मे. स्याद्, गोजागरिकं भक्ष्यकारके मङ्गलेऽपि च, हे.

गोडुम्ब. गोडुम्बः ग्रीष्मदन्ते च गवादन्यान्तु योषिति, मे. गोडुम्बः ग्रीष्मदन्ते स्याद्, गवादन्याः फलेऽपि च, वि.

गोण्ड. गोण्ड. पामरजातौ च वृद्धनाभौ च तद्वति, मे. गोण्डः पामरजातौ च वृद्धनाभौ च वाच्यवत्, वि. गोण्डः स्याद्, वृद्धनाभिके। पामरजातौ च, हे.

गोत्र. गोत्रा भूगव्ययो र्गोत्रः शैले गोत्रं कुलाख्ययोः। सम्भावनीयबोधे च कानने क्षेत्रवर्त्मसु, मे. गोत्रं नाम्नि कुले क्षेत्रे कानने चित्तवर्त्मनोः। सम्भावनीयबोधेऽपि गोत्रः क्षोणीधरे मतः। गोसमूहभुवोर्गोत्रा, वि. गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियाम्, त्रि. गोत्रं नामाख्ययो र्गोत्रो गोत्रश्च धरणीधरः। गोत्रा वसुन्धरा ज्ञेया गोत्रञ्च प्रवरं स्मृतम्, धने. गोत्रं क्षेत्रेऽन्वये छत्रे सम्भाव्यबोधवर्त्मनोः। वने नाम्नि च

गोत्रोऽद्री गोत्रा भुवि गवाङ्कणे, हे. गोत्रन्तु नाम्नि च, श. गोत्रं नाम्नि तथान्वये, ह.

गोदन्त. गोदन्तो हरिताले स्याद् दंशिते हरितेऽपि च, वि. गोदन्तो हरिताले स्यात् सन्नद्धे दंशितेऽपि च, हे. गोदन्तो हरितालेऽपि, ह.

गोधा. गोधा तलनिहाकयोः, मे. गोधा तले निहाकायाम्, वि. गोधा प्राणिविशेषे स्यात् ज्याघातस्य च वारणे, हे. गोधा तले निहाकायाम्, त्रि.

गोधूम. गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः, मे. गोधूमो नागरङ्गे स्याद् भेषजव्रीहिभेदयोः, वि. गोधूमो भेषजे नागरङ्गव्रीहिप्रभेदयोः, हे.

गोनर्द. गोनर्दमपि कैवर्त्तीमुस्तके पुंसि सारसे, मे.

गोप. गोपो गोपालके गोष्ठाध्यक्षे पृथ्वीपतावपि। ग्रामस्याधिकृते पुंसि शारिवायौषधौ स्त्रियाम्, मे. गोपो ग्रामौघगोष्ठाधिकृतयोर्नृपे। गोपी गोपालमहिलाशारिवारक्षिकासु च, वि. गोपो भूपालवल्लवौ। ग्रामौघगोष्ठाधिकृतौ गोपी गोपालसुन्दरी। शारिवा रक्षिका, हे. गोधुग्गोष्ठपती गोपौ, श.

गोपति. गोपतिः शिवषण्डयोः। वृषभास्करयोः पुंसि, मे. गोपतिः शङ्करे षण्डे पार्थिवेऽपि विकर्त्तने, वि. गोपतिः शङ्करे षण्डे नृपतौ त्रिदशाधिपे। सहस्रकिरणे चापि, हे. षण्डः सूर्यश्च गोपतिः, त्रि.

गोपाल. गोपालो नृपगोपेशे, मे. गोपालो गोपभूपयोः वि, हे. गोपो भूपश्च गोपालौ, त्रि

गोपुर. गोपुरं द्वारि पूर्द्वारि कैवर्त्तीमुस्तकेऽपि च, मे. गोपुरन्तु पुरद्वारि द्वारमात्रे च मुस्तके, वि गोपुरं पुनः। मुस्तके द्वारि पूर्द्वारे, हे. द्वारमात्रेऽपि गोपुरम्, श. पूर्द्वारि द्वारि गोपुरम्, त्रि.

गोप्य. गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्, मे. गो

दासीसुते गोप्यो रक्षणीयेऽभिधेयवत्, वि. गोप्यौ दासेरगोप्यौ, हे. गोप्यौ गोप्यव्यपेटकौ, त्रि.

गोमिन्. गोमी शृगाले पुंसि स्यात् त्रिषु गोमतुपासके, मे. गोमी दूपासके फेरौ, वि. गोमी फेरौ गोमतुपासके, हे.

गोमुख. गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने। पुंसि मातलिपुत्रे च महादेवगणान्तरे, मे. गोमुखं वाद्यभेदे स्यात्प्रलेपने कुटिलौकसि, हे. गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने, वि. गोमुखं लेपने वाद्यभाण्डे, त्रि. गोमुखमुपलेपने, इ.

गोमेदक. गोमेदकं पीतमणौ काकोले पत्रकेऽपि च, मे, वि. गोमेदकः पीतरत्ने काकोले पत्रकेऽपि च, हे. गोमेदकश्च काकोले, श.

गोरक्ष. गोरक्षो नागरङ्गे स्याद् गवां च परिरक्षके, वि, मे. गोरक्षौ गोपनारङ्गौ, हे.

गोरक्षजम्बू. गोरक्षजम्बू गोधूमे तथा गोरक्षतण्डुले, वि. गोरक्षजम्बू गोधूमे धान्ये गोरक्षतण्डुले, हे.

गोरङ्कु. गोरङ्कुर्नग्नवन्दिनोः। खगे च, हे. गोरङ्कुः पक्षिजातौ च भवेन्नग्नकवन्दिनोः, वि. खगे नग्ने च गोरङ्कुः, त्रि. गोरङ्कुः स्यात् पुमान् पक्षिभेदे नग्नकवन्दिनोः, मे.

गोलक. गोलको विधवापुत्रे जारात् स्यान्मणिके गुडे, मे. गोलको विधवापुत्रे जाराच्च मणिके गुडे, वि. गोलकस्तु जारतो विधवासुते। अलिञ्जरे गुडे पिण्डे, हे. गोलको मणिजारजौ, त्रि.

गोल. गोला गोदावरीसख्योः कुनटीदुर्गयोः स्त्रियाम्। पत्राञ्जने मण्डले चालिञ्जरे बालखेलने, मे. गोला सखीवर्तुलयोः गोलं लद्यानुसारतः। पत्राञ्जने कुनट्यां च गोदावर्यां च मण्डले, वि. गोलः स्यात् सर्ववर्तुले। गोला पत्राञ्जने गोदावर्यां कल्याम लिञ्जरे। मण्डले च कुनट्यां च बालक्रीडनकाष्ठके, हे. मण्डले मणिके गोल गोला गोदावरी सख्योः, त्रि.

गोलोमी. गोलोमी श्वेतदूर्वायां सवाद् वचाभूतकेशयोः, मे. गोलोमी श्वेतदूर्वायां षड्ग्रन्थावारयोषितोः, वि. गोलोमी वच्योपायां षड्ग्रन्थासितदूर्वयोः, हे.

गोविन्द. गोविन्दो वासुदेवे सवाद् गवाध्यक्षे बृहस्पतौ, मे, वि. गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ, हे, गोष्ठाध्यक्षेऽपि गोविन्दः, श. गोविन्दो हरिगोरुङ्कुरौ, धने.

गोष्ठ. गोष्ठं गोस्थानके गोष्ठी सभासंलापयोः स्त्रियां, मे. गोष्ठं गोस्थानकेऽपि च। गोष्ठी सभायां संलापे,वि. गोष्ठं गोस्थानके गोष्ठी संलापे परिषद्यपि, हे.

गोष्पद. गोष्पदं गोपदश्वभ्रे गवाञ्च गतिगोचरे, मे. गोष्पदं गोखुरश्वभ्रे गवां च गतिगचरे, हे. गोष्पदं सेविते माने, श.

गोस. गोसो गन्धरसोपसोः, वि. गोसो बोलोपसोः, मे. गोसो बोलविभातयोः, रे.

गोस्तन. गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियाम्, मे. गोस्तनो हारभेदे स्यात् द्राक्षायां गोस्तनीति च, वि. गोस्तनो हारभेदे स्यात् गोस्तनी हारहूरिका, हे.

गौतम. गौतमो ना मुनौ बुद्धे रोचनीदुर्गयोः स्त्रियाम्, मे. गौतमः शाक्यसिंहे च मुनिभेदेऽथ गौतमी। रोचन्यामम्बिकायां च, वि. गौतमो गणभृद्भेदे शाक्यसिंहर्षिभेदयोः। गौतमुत्रमायां रोचन्याम्, हे.

गौर. गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्। ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः। रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषेऽपि यादसां पतियोषिति, मे. गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि। विशदे गौरन्तु श्वेतसर्षपे पद्मकेसरे। गौर्युमानग्निकोर्वीषु प्रियङ्गौ वरुणस्त्रियाम्। रजन्यां रोचनीनद्योः, हे गौरोऽरुणे सिते पीते, श. नग्नकन्योमयो गौरी गौरः स्यादुज्ज्वलेऽपि च, वि. गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्।

गौरी तु विशदे पद्मकेसरे सितसर्षपे। गौरः शशिनि गौरी तु नग्नकन्यो-मयोः स्मृता। रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च। नदीभेदेऽपि गौरी स्यात् वरुणस्य च योषिति, वि गौरी शिवप्रिया प्रोक्ता गौरी गोरोचना मता। गौरी स्यादप्रसूता स्त्री गौरी शुद्धोभयान्यया, शने.

गौरिल. गौरिलस्तु पुमान् लौहचूर्णे स्याद्, गौरसर्षपे, मे. गौरिलो लोहचूर्णे स्याद्, गौरिलो गौरसर्षपे, वि. स्याद्, गौरिलस्तु सिद्धार्थे लौह-चूर्णे, हे.

ग्रथित. ग्रथितो हतहृष्ययो.। आक्रान्ते च, हे. ग्रथितं गुम्फिताक्रान्तहिंसितेषु समीरितम्, वि. ग्रथितं गुम्फिते क्रान्ते हिंसिते च त्रिलिङ्गकम्, मे.

ग्रन्थ. ग्रन्थो ग्रन्थनाधनयोः स्याच्छास्त्राक्षरसङ्ख्ययोः, मे ग्रन्थो धने स्यात् सन्दर्भे द्वात्रिंशद्वर्णनिर्मितौ, वि ग्रन्थो गुम्फे धने शास्त्रे द्वात्रिंशद्वर्णनिर्मितौ, हे. शास्त्रद्रविणयो ग्रन्थः, श. ग्रन्थो द्वात्रिंशदक्षरी। धनञ्च ग्रन्थना चापि, त्रि. लिपिसङ्ख्यायां शास्त्रे तूभेन च ग्रन्थशब्द-मिच्छन्ति, रु.

ग्रन्थि. ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः, मे. ग्रन्थिः पर्वणि कौटिल्ये ग्रन्थिपर्णे गदान्तरे, वि. ग्रन्थिस्तु ग्रन्थिपर्णे स्याद्, गाया-रुग्भेदयोरपि, हे.

ग्रन्थिक ग्रन्थिकं पिप्पलीमूले गुग्गुलुग्रन्थिपर्णयोः। करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे, मे. ग्रन्थिकं पिप्पलीमूले ग्रन्थिको गुग्गुलद्रुमे। माद्रेये च करीरे च दैवज्ञे च प्रकीर्तितम्, वि ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे। ग्रन्थिको गुग्गुलौ दैवज्ञे माद्रेयकरीरयोः, हे. ग्रन्थिकौ पार्थदैवज्ञौ ग्रन्थिपर्णं च न द्वयोः, त्रि.

ग्रन्थिल ग्रन्थिलस्तु करीरद्रौ विकङ्कततरौ पुमान्। सग्रन्थौ त्रिषु, मे. ग्रन्थिलो ग्रन्थिसहिते करीरद्रौ विकङ्कते, वि. ग्रन्थिलो ग्रन्थि-सहिते विकङ्कतकरीरयोः, हे.

ग्रस्त. ग्रस्तं जग्धे लुप्तपदोदिते, हे. ग्रस्तं ग्रासीकृतेऽपि सत्रात् लुप्तवर्णपदोदिते, वि, मे. ग्रस्तं वाग्भेदभुक्तयोः, त्रि.

ग्रह. ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः, मे, वि. ग्रहो ग्रहणनिर्बन्धानुग्रहेषु रणोद्यमे। उपरागे पूतनादौ आदित्यादौ विधुन्तुदे, हे. निर्बन्धोपरागार्कादयो ग्रहाः, अ. ग्रहशब्दः सूर्यादिषु भूतादिष्वभिनिवेशे च, ह.

ग्रहण. ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु, मे. ग्रहणं तूपलब्धौ सत्रादादरे ग्रहणं करे। ग्रहोपरागस्वीकारवन्दिषु ग्रहणं मतम्, वि. ग्रहणं स्वीकृते वन्द्यां धीगुणे हस्त आदरे। ग्रहोपरागे मत्यायै, हे. ग्रहणं स्वीकृतौ हस्ते, त्रि.

ग्रहराज. ग्रहराजो रवौ चन्द्रे, मे. ग्रहराजो रवौ चन्द्रेऽपि, वि. ग्रहराजः शशिन्यर्के, हे.

ग्राम. ग्रामः स्वरे संवसथे, मे. ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः, वि. ग्रामो वृन्दे शब्दादिपूर्वकः। षड्जादौ संवसथे च, हे. शब्दादिपूर्वो वृन्देऽपि ग्रामः, अ. ग्रामः संवसथे स्वरे, त्रि. सङ्घातेऽपि ग्रामो भूतेन्द्रियशब्दकरणानाम्, ह.

ग्रामणी. सत्राद् ग्रामणी. प्रधानेऽधिपतौ त्रिषु नापिते पुंसि, मे. ग्रामणी भोगिके पत्यौ प्रधाने नापितेऽपि च। ग्रामणी नीलिकायाञ्च ग्रामेयीपण्ययोषितोः, वि. ग्रामणीः षुरमर्द्दिनि। प्रधाने भोगिके पत्यौ ग्रामणीः पण्ययोषिति। ग्रामेयां नीलिकायाञ्च, हे. ग्रामणी नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु, अ.

ग्राममद्गुरिका. ग्राममद्गुरिका ग्रामयुद्धे स्पृङ्गीभये स्त्रियाम्, मे. ग्राममद्गुरिका स्पृङ्गयां ग्रामयुद्धे च कोलेयते, वि. ग्राममद्गुरिका युद्धस्पृङ्गयोः, हे. स्पृङ्गयां च ग्रामयुद्धे च ग्राममद्गुरिका स्त्रियाम्, त्रि.

ग्रामीण. ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्, मे.

ग्रामीन. ग्रामीनः शुनि काके पुंसि त्रिषु सम्भूते ग्रामे, मे. ग्रामीनो

ग्रामसम्भूते ग्रामीनः पुंसि वायसे, वि.

ग्राम्य. ग्राम्यं स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिषु, मे. ग्राम्यो जनेऽन्यवद् ग्राम्यमश्लीलरतवन्धयोः, वि. ग्राम्यो ग्रामभवे जने। ग्राम्यं रतबन्धेऽश्लीले, हे.

ग्रावन्. ग्रावा तु प्रस्तरे पृथ्वीधरे पुंसि, मे. ग्रावा प्रस्तरे जलदे गिरौ, वि. ग्रावाऽश्मनि गिरौ, हे. ग्रावाणौ शैलपाषाणौ, अ. ग्रावा शैले, इ.

ग्राह. ग्राहो ग्रहेऽवहारे च, मे, वि. ग्राहो ग्रहे जलचरे, हे.

ग्राहक. ग्राहकौ घातिविहगे व्याधानाञ्च ग्रहीतरि, वि, मे. ग्राहको ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि, हे.

ग्रीवा. स्यात् तु ग्रीवा कन्धरायां तच्छिरायाञ्च योषिति, मे. ग्रीवाऽपि कन्धरायां स्यात् तच्छिरायामपीष्यते, वि. ग्रीवे शिरोधितच्छिरे, हे.

ग्रीष्म. ग्रीष्म उष्मर्तुभेदयोः, मे.

ग्लौ. ग्लौ र्धरणप्रां निशापतौ, मे.

घ. घो घण्टायां घर्घरे ना स्त्रियान्तु काञ्चिघातयोः, मे. घस्त्री शिवोत्तमो मेधा दक्षिणाङ्गुलिमूलगः। घनो घनस्तरश्चैव घकारो ह्लादिमः स्मृतः, मा.

घट. घटः समाधिभेदेभशिरःकूटकुटेषु च। घटा घटनगोष्ठीभघटनासु च योषिति, मे. घटा घटने गजसंहतौ। गोष्ठ्यां घटस्त्विभशिरःकूटे समाधिकुम्भयोः, हे. घटः समाधिभेदेभशिरःकूटकुटेषु च। घटा घटनगोष्ठीभघटनासु च इष्यते, वि. घटा गोष्ठ्याम्, इ.

घट्ट(ट)ना. घट्टना चलनावृत्त्योः, हे. घटना चलनावृत्त्योः, मे.

घन. घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्देषु दार्ढ्येषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे दृढे च, मे. घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। घनः सान्द्रे दृढे दार्ढ्ये विस्तारे लोह-

मुद्गरे। मेघमुस्तकयोश्चापि, वि. घनः सान्द्रे दृढे दार्ढ्य विस्तारे मुद्गरेऽब्दे। सङ्घे मुस्ते घनं मध्यनृत्यवाद्यप्रकारयोः, ह. घनो मेघे मूर्तिगुणे त्रिषु मूर्त्ते निरन्तरे, ऋ. अथाब्दमुस्तयोः। घनः पुंसि घनं वाद्यम्, लि. घनो मेघो घनं सान्द्रं कांस्यतालादिकं घनम्। घनं सङ्घो घनं नित्यं घनः स्यात्लोहमुद्गरः, अने.

घनरस. भवेद्घनरसः सान्द्रे निर्यासे मोरटेऽम्बुनि। कर्पूरे पीलुपर्ण्याञ्च सम्यक्सिद्धरसेऽपि च, मे. भवेद्घनरसः सान्द्रे निर्यासे मोरटेऽम्बु च। कर्पूरे पीलुपर्ण्यां च समग्रक्सिद्धरसेऽपि च, वि. घनरसोऽम्बु कर्पूरे सान्द्रे सिद्धरसे द्रवे। मोरटे पीलुपर्ण्यां च, हे.

घनसार. घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे, मे, वि, हे.

घनाघन. घनाघनो वर्षुकाब्दे मत्तघातुककुञ्जरे। शक्रे च, मे. घनाघनो घातुकमत्तदन्तिनो निरन्तरे वासववर्षुकाब्दयोः, वि. घनाघनो निरन्तरे। वासवे घातुके मत्तगजे वर्षुकवारिदे, हे. घनाघनः शक्रवर्षुकाब्दयोः, ह. शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः, श. शक्रेऽपि वर्षुके मेघे मत्तनागे घनाघनः, अने.

घर्घर. घर्घरो ना चलद्वारिध्वानोलूकनदान्तरे। स्त्री क्षुद्रघण्टावीणाया भेदे स्वरान्तरेऽपि च, मे. घर्घरस्तु चलद्वारिध्वाने घूके नदान्तरे, वि. घर्घरस्तु नदान्तरे। चलद्वारिध्वनौ घूके, हे.

घर्घरिका. अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः मे. स्मृता घर्घरिका क्षुद्रघण्टिकाभृष्टधान्ययोः। वाद्यभेदवादित्रदण्डयोरापगान्तरे, वि. घर्घरिका भृष्टधान्ये किङ्किण्यां सरिदन्तरे। वादित्रस्य च दण्डेऽपि, हे.

घर्म. घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि, वि. अथ घर्मो निदाघवत्। स्वेदाम्भस्यातपे ग्रीष्मोष्मणोः, ह. उष्णेऽपि घर्मः, श. घर्मः स्वेदातपोष्मसु, त्रि. घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि, मे.

घस्र. घस्रस्तु दिवसे हिंस्रे, मे. घस्रो दिवसहिंस्रयोः, वि.

घस्रो वासरहिंस्रयोः, हे.

घात. घातः काण्डप्रहारयोः, मे, वि.

घृणा. घृणा जुगुप्सातपयोः, मे, वि. घृणा तु स्यात्जुगुप्सायां करुणायाम्, हे. जुगुप्साकरुणे घृणे, अ. दौर्मनस्यं घृणा प्रोक्ता घृणा च करुणा मता, अने. घृणा जुगुप्सायामपि, ह.

घृणि. घृणिः पुनः। अंशुज्वालातरङ्गेषु, हे.

घृत. घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्, मे. घृतमाज्याम्बुदीप्तेषु, हे. अम्भश्च घृतमुच्यते, अ. घृतमाज्ये प्रदीप्ते च सलिले च घृतं मतम्, वि.

घृष्टि. घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुकान्तासु ना किरौ, मे. घृष्टिः स्पर्द्धाघर्षणयो र्विष्णुकान्तावराहयोः, हे. घृष्टिः स्यात् घर्षणे विष्णुक्रान्तास्पर्द्धाकिरिष्वपि, वि. शूकरे पुंसि घृष्टिः स्यात् स्पर्धाघर्षणयोः स्त्रियाम्, त्रि.

घोर. घोरः स्यादभिसारके, अने. घोरं भीमे हरे घोरः, वि. घोरो भीमे हरेऽपि च, मे. घोरो हरे दारुणे च, हे.

घोण्टा. घोण्टा तु बदरीपूगवृक्षयोरपि योषिति, मे. घोण्टा पूगबदरयोः, हे. घोण्टा तु बदरे पूगे, वि, त्रि.

घोष. घोष आभीरपल्ल्यां स्याद्गोपालाध्वनि घोषके। कांस्ये चाम्बुदनादे ना घोषा मधुरिकौषधौ, मे. घोषस्तु घोषके ध्वाने गोपालाभीरपल्लिषु। घोषा तु शतपुष्पायां घोषः कांस्येऽम्बुदध्वनौ, वि. घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु। घोषा तु शतपुष्पायाम्, हे. घोषः शब्दाभीरनिवासयोः, त्रि.

घोषयित्नु. घोषयित्नुस्तु विप्रकोकिलयोः पुमान्, मे. घोषयित्नुर्द्विजे पिके, वि. घोषयित्नुः पिके विप्रे, हे.

घ्राण. घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलिङ्गकम्, मे. घ्राणं घ्राते च नासायाम्, वि. घ्राणन्तु घ्रातघोणयोः, हे. नासिका-

प्रातयो र्ग्रीप्मस्, त्रि.

ङ. ङः पुमान् विषये ख्यातः स्पृहायां विषयस्त्र च, मे. संज्ञा को रुद्र-कान्तिश्च दचाङ्गुल्यग्रसंस्थितः। क्लीववक्त्रश्च भद्रेशो ङकारश्चानुनासिकः, मा.

च. चान्वाचयसमाहारेतरेतरसमुच्चये, अ. चान्वाचये समाहारे-ऽप्यन्योन्यार्थे समुच्चये। पक्षान्तरे तथा पादपूरणेऽप्यवधारणे, मे, वि. चान्योन्यार्थसमाहारान्वाचयेषु समुच्चये, हे. च पादपूरणे पक्षान्तरे हेतौ विनिश्चये, त्रि. चश्चण्डेशे पुमानुक्तः कच्छपे चन्द्रचौरयोः, मे. क्लौ कूर्मेश्वरो लक्ष्मी र्वामबाहादिगस्तथा। चित्तधारा चक्षुलश्च चकारः संस्मृतो बुधै, मा.

चक्र. चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भा-न्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्त्तेऽपि, मे. चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्त्र भाण्डे राष्ट्रास्त्रयोरपि। अम्भसामपि चावर्त्ते, वि. चक्रं प्रहरणे गणे। कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः। जलावर्त्ते दम्भे चक्रः कोके, हे. चक्रं राष्ट्रेऽपि, ञ. चक्रः कोके व्रजे पुंसि क्लीवं सैन्यरथाङ्गयोः। ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते, त्रि. चक्रः पक्षिविशेषश्च रथाङ्गं चक्रमायुधम्। चक्रं राजरथ्ष सङ्घश्च चक्रं व्यावर्तनं मतम्, भ्ने.

चक्रधर. अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि, मे. चक्रधरो हरौ सर्पे वाचत्रवद्ग्रामजालिनि, वि. चक्रधरो विष्णु सर्पचक्रिषु ग्रामजा-लिनि, हे. सर्पे विष्णौ चक्रधरः, त्रि.

चक्रवाट चक्रवाटः क्रियारोहे पर्यन्ते च शिखातरौ, मे, वि. चक्र-वाटस्तु पर्यन्ते क्रियारोहे शिखातरौ, हे.

चक्रवाड चक्रवाडोऽद्रिभेदे स्यात् चक्रवाडन्तु मण्डले, वि, मे. चक्रवाडं गणे चक्रवाडोऽद्रौ चक्रवालवत् हे.

चक्रवाल चक्रवालोऽद्रिभेदे स्यात् चक्रवालन्तु मण्डले, वि, मे. . .

V. चक्रवाट.

चक्राङ्ग. चक्राङ्गी कटुरोहिण्यां चक्राङ्गो मानसौकसि, मे, वि. चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी, हे.

चक्राट. चक्राटो विषवैद्येऽपि धूर्तदीनारयोरपि, मे, वि. चक्राटो धूर्तदीनारविषवैद्येत्र, हे.

चक्रिन्. चक्री जालिकभित्कोककुलालाजाहिसूचके, मे. चक्री कुलालवैकुण्ठकोकाहिग्रामजालिष, वि. चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि, हे. चक्रिणो विष्णुभुजगकुलालग्रामयाजिनः, त्रि.

चक्षुष्य चक्षुष्यः केतके पुण्डरीकसंज्ञकपादपे। कुलत्थिकासुभगयोः स्त्रियामचिह्निते‍ऽन्यवत्, मे. चक्षुष्यः केतके पुण्डरीकद्रुमे रसाञ्जने। कुलत्थिकासुभगयोश्चक्षुष्याऽचिह्निते‍ऽन्यवत्, वि. चक्षुष्यः सुभगे पुण्डरीकद्रुमे रसाञ्जने। कनकेऽचिह्निते चापि चक्षुष्या तु कुलत्थिका, हे. चक्षुष्य सुभगे चक्षुर्हिते स्त्री केतकेऽपि च, त्रि.

चङ्कुर. चङ्कुरः स्यन्दने वृक्षे, मे, हे. चङ्कुरो रथवृक्षयोः, वि.

चङ्ग. चङ्गस्तु शोभने दक्षे, मे चङ्गः शोभनदक्षयो, वि.

चञ्चल. चञ्चलोऽनिलकामिनोः। चञ्चला तु तडित्लक्ष्म्योः, हे. चञ्चला तु तडिल्लक्ष्म्योश्चञ्चलः कामुकेऽनिले, वि, मे.

चञ्चा चञ्चा तु नलनिर्माणे तृणनिर्मितपूरुषे, मे. चञ्चा नलादिनिर्माणे चञ्चा तु तृणपूरुषे, त्रि.

चञ्चु चञ्चुस्त्रोष्ठ्यां स्त्रियां पुंसि गोनाडीके व्यड्स्मके, मे. चञ्चुः पञ्चाङ्गुले त्रोष्ठ्यां गोनाडीकेऽपि पठ्यते, वि. चञ्चुः पञ्चाङ्गुले त्रोष्ठ्याम्, हे.

चटक चटकः कलविङ्के स्याच्चटका तत्स्त्रपत्ययोः, वि

चटु. चटुश्चाटौ पिचण्डे च व्रतिनामासने पुमान्, मे. चटु चाटुपिचण्डयो.। व्रत्यासने, हे देहांशे वर्णने चटुः, त्रि चटुश्चाटौ पिचण्डे व्रतिनामासनान्तरे, वि

चण्ड चण्डो ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः। चण्डी —

त्यायनीदेव्यां हिंस्राकोपनयोषितोः। चण्डा धनहरीशङ्खपुष्पयोस्त्रिष्वति-कोपने, मे. चण्डो दैत्यान्तरे तीव्रे चण्डो दासे यमस्य च। चण्डा धनहरीशङ्खपुष्पयोश्चण्डोऽतिकोपने। चण्डी कात्यायनीहिंस्राकोपनस्त्रीषु सम्मता, वि. चण्डस्तु यमदासेऽतिकोपने। तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति। चण्डा धनहरीशङ्खपुष्प्योः, हे. चण्डौषधिः खर-खण्डः, त्रि.

चण्डालिका. चण्डालिका किन्नरायामुमायामौषधीभिदि, मे, वि. चण्डालिकौषधीभिदि। कन्दरायामुमायाञ्च, हे.

चण्डि(न्द्रि)ल. चन्द्रिलः पुंसि वास्तूकशाके भर्गे च नापिते, मे. चण्डिलो नापिते ख्याते हरवास्तुकशाकयोः, वि. चण्डिलो नापिते वास्तुके रुद्रे, हे.

चतुःषष्टि. चतुषष्टिः कलासंख्याभेदयो र्बह्वृचि स्त्रियाम्, मे. चतुःषष्टि र्बह्वृचेऽपि चतुःषष्टिः कलास्वपि, वि.

चतुर. चतुरश्चातुरकवत् चक्रगण्डौ नियन्तरि। एतौ सम्राता-स्त्रुभौ नेत्रगोचरे चाटुकारिणि, वि. चतुरो नेत्रगोचरे। चाटुकारे चक्र-गण्डो अपि चातुरको यथा, हे. v. चातुर-क.

चतुष्क. चतुष्की मशकहर्यां पुष्करिण्यन्तरेऽपि च, हे, मे.

चतुष्पथ. चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणेऽपि ना, मे. चतुष्पथ-श्चतुर्मार्गे सङ्गमेऽपि द्विजेऽपि च, वि. चतुष्पथश्चतुर्मार्गसङ्गमे ब्राह्मणे-ऽपि च, हे.

चतुष्पद. चतुष्पदी तु पद्येन ना पशौ च करणान्तरे, मे. चतुष्पदः स्त्रीकरणे गवाश्वादिपशुष्वपि, वि. चतुष्पदो गवादिषु। स्त्रीणां करण-भेदे च, हे.

चत्वर. चत्वरं स्थण्डिलेऽङ्गने, मे, वि. चत्वरं स्यात् पथाश्लेषे स्थण्डिलाङ्गनयोरपि, हे. चत्वरं प्राङ्गणेऽपि च, ह.

चषाल. चषालो होमकुण्डे स्यात् पुंसि दर्भेऽपि दृश्यते, मे. च-

त्वालो होमकुण्डे सप्राट् गर्भे च, वि. चत्वालो यज्ञकुण्डकगर्भयोः, हे.

चन. चन विस्मये शाकलेय, मे.

चन्दन. चन्दनी तु नदीभिदि। चन्दनोऽस्त्री मलयजे कुङ्कुमे च नपुंसकम्, मे. चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यात् नदीभेदे तु चन्दनी, वि. चन्दनो वानरभिदि श्रीखण्डे चन्दनी नदी, हे.

चन्दिर. चन्दिरोऽनेकपे चन्द्रे, मे, वि. चन्दिरश्चन्द्रहस्तिनोः, हे.

चन्द्र. चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु, मे. चन्द्रः सुधांशुकर्पूरकाम्पिल्लस्वर्णवारिषु, वि. चन्द्रोऽम्बुकाम्ययोः। स्वर्णे सुधांशौ कर्पूरे काम्पिल्ले मेचकेऽपि च, हे. स्वर्णेऽपि भूरिचन्द्रौ द्वौ, अ. चन्द्रः शशिनि कर्पूरे, त्रि. शशाङ्कस्वर्णयोश्चन्द्रः, धने.

चन्द्रकान्त चन्द्रकान्तस्तु पुंसि स्यात् मणिभेदे च कैरवे, मे. चन्द्रकान्तोऽश्मभेदे स्यात् चन्द्रकान्तं च कैरवे, वि. चन्द्रकान्तो रत्नभेदे चन्द्रकान्तन्तु कैरवे, हे.

चन्द्रहास. चन्द्रहासो दशग्रीवकरवालेऽसिमात्रके, मे, वि. चन्द्रहासोऽसिमात्रके। दशग्रीवकृपाणे च, हे.

चन्द्रिल. v. चण्डिल.

चन्द्रोदय. चन्द्रोदयो विताने स्यात् तथा चन्द्रोदयौषधौ, वि. चन्द्रोदयो शम्बुरदयोश्चौ चन्द्रोदयौषधे, हे.

चपल. चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। नपुंसकन्तु शीघ्रे स्यात् वाच्यवत् तरले खले, मे. चपलश्चोरके खले। चणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे। मीने च चपला तु स्यात् पिप्पल्यां विद्युति स्त्रियाम्। पुंश्चल्याम्, हे. चपलः पारदे मीने चोरके प्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। चपलं चणिके शीघ्रे चपलश्चिकुरे खले, वि चपल. पारदेऽपि च। चपलाः पिप्पलीलक्ष्मीपुंश्चलीविद्युतः स्मृताः, त्रि.

चमर. चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः, मे. चमरं

चामरे प्राक्त मञ्जरीमृगभेदयोः। चमरी, वि. चमरश्चामरे दैत्ये चमरी तु मृगान्तरे, हे.

चमस. चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम्, मे.

चमू. चमूः सेनाविशेषे च सेनामात्रे च योषिति, मे. V. पृतना.

चय. चयः समूहे प्राकारमूलबन्धे समाहृतौ, मे, वि. चयः प्राकारपीठभूः। समूहोऽपि, हे.

चर. चरोऽचद्यूतभेदे च भौमे चारे तथे चले, मे. चरो द्यूतप्रभेदे स्यात् चारजङ्गमयोश्चले, वि. चरः स्याज्जङ्गमे स्पशे। चले द्यूतप्रभेदे च, हे.

चरण. चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च। भ्रमणे भक्षणे चापि नपुंसक उदाहृतः, मे. चरणं बह्वृचादौ स्यात् मूले गोत्रे पदेऽपि च। चरणं भ्रमणेऽस्त्री च चरणं रासभध्वनौ, वि. चरणो मूलगोत्रयोः। बह्वृचादौ च पादे च चरणं भ्रमणेऽदने, हे. वेदांशे बह्वृचादौ च प्रश्ने पादेऽपि चास्त्रियाम्। चरणम्, त्रि.

चराचर. चराचरं वाच्यलिङ्गमिङ्गे जगति न द्वयोः, मे. चराचरं स्याज्जगति वाच्यवत् जङ्गमेङ्गयोः, वि. चराचरं जङ्गमे स्याद् इङ्गविष्टपयोरपि, हे.

चरु. अथ चरु. पुमान् हव्यान्नभाण्डयोः, मे. चरु भाण्डे च हव्यान्ने, वि. चरु र्हव्यान्ने भाण्डे च, हे.

चर्चरीक. चर्चरीको महाकाले केशविन्यासशाकयोः, मे, वि.

चर्चा. चर्चा चिन्तास्थासकयोश्चर्चिकायान्तु योषिति, मे. चर्चा स्थासकचिन्तयोः। चर्चिकायाञ्च, वि. चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि, हे. अथ स्थासकतर्कयोः। चर्चिकायाञ्च चर्चा स्यात्, त्रि. चिन्तायामपि च स्त्री, रु.

चर्पट. चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च, मे, वि. अथ चर्पटश्चपेटे स्फारविपुले पर्पटे, हे.

चर्मन् चर्म त्वक्ती च फलके, मे. चर्म त्वचि स्मृतं, हे. चर्म सम्राड्वल्कलत्वचोः, वि.

चर्मकार. चर्मकारः पादुकृति स्त्रियां चर्मकषौषधौ, मे. चर्मकारः स्मृतः पादूकृति चर्मकषौषधे। चर्मकारी च कथिता, वि. चर्मकारः पादूकृति चर्मकार्यौषधीभिदि, हे.

चर्मण्वती. चर्मण्वती नदीभेदे कदलीपादपे स्त्रियाम्, मे. चर्मण्वती नदीभेदे कदलीपादपेऽपि च, वि. चर्मण्वती नदीभिदि। कदल्याम्, हे. चर्मण्वत्यौ नदीरम्भे, त्रि.

चर्मिन् चर्मी फलकपाणौ सम्राद् भूर्जे भृङ्गरिटावपि, मे, वि. चर्मी भूर्जे फलकिभृङ्गिणो, हे. भूर्जे फलकपाणौ च चर्मी, त्रि.

चल चला लक्ष्म्यां पुमान् कम्पे कम्पने त्वभिधेयवत्, मे. चलः कम्पे चला श्रियि, वि.

चलुक. चलुकः प्रसृतौ भाण्डभेदे चुलुकवत् पुमान्, मे. चलुकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा, हे v. चुलुक

चलन चलनं भ्रमणे कम्पे कम्पे तु वाच्यलिङ्गकम्। चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्, मे. चलनं कम्पनं कम्पे कम्प्रे चलनकम्पनौ। चलनी वस्त्रघर्घर्यां वारिभेदेऽपि च क्वचित्, वि. चलनः पादकम्पयोः। चलनं कम्पे चलनी वारिभिद्वस्त्रघर्घरी, हे. कम्प्रे ना चलनं कम्पे चलनी वस्त्रघर्घरी, त्रि

चव्य चव्यन्तु चविके क्लीबं चवायामपि योषिति, मे. चव्यं तु चविके चव्या ग्रसपर्वाग्रगन्धयोः, वि. चव्या सम्रात् चविकाग्रसपर्वणोः, हे.

चषक. चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः, मे. चषको मद्ये सरके मद्यभाजने, हे चषकन्तु सुरापात्रे मद्यमद्यप्रभेदयोः, वि. चषकं सरकेऽपि च, त्रि

चातुर चातुरो नेत्रगोचरे। चाटुकारिनियन्त्रोश्च त्रिषु दाच्ये न चातरो। चक्रगण्डे च पुंसि सम्रात् मे.

चातुरक. अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत् । गोचरे लोचनस्यापि चाटुकारे नियन्तरि, मे. v. चतुर.

चामर. चामरं चामरापि च । दण्डे च बालव्यजने, मे.

चामरपुष्प. भवेच्चामरपुष्पन्तु पूगे काशाम्रकेतके, मे. भवेत् चामरपुष्पस्तु चूते केतककाशयोः, वि.

चाम्पेय. चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे, मे, त्रि. चाम्पेयो हेम्नि किञ्जल्के चम्पके नागकेसरे, हे.

चार. चारः पियालवृक्षे स्यात् गतौ बन्धापसर्पयोः, मे, वि. चारो बन्धापसर्पयोः । गतौ पियालवृक्षे च, हे. चारो बन्धापसर्पयोः, त्रि.

चारक. चारकः पालकेऽश्वादेः स्यात् सञ्चालकबन्धयोः, मे. चारकः पालकेऽश्वादेः स्यात् सञ्चारकबन्धयोः, वि. चारकोऽश्वादिपाले स्याद् बन्धे सञ्चारकेऽपि च, हे. चारको भोजके बन्धे, त्रि.

चारु. चारु र्हस्पतौ पुंसि शोभनेऽप्यभिधेयवत्, मे.

चार्वी(र्वी). चार्वी तु शोभनाङ्गस्त्री जर्योत्स्नाधनदभार्ययोः, मे. चार्वी तु शोभनाङ्गस्त्रीः, वि.

चास. चास इक्षुपक्षिभिदोः पुमान्, मे. चास इक्षुपक्षिभिदोः, हे.

चिकुर. चिकुरश्चरलागयोः । पक्षिवृक्षभिदोः केशे गृहबभ्रौ सरीसृपे, मे. चिकुरश्चपले केशे गृहबभ्रुभुजङ्गयोः । पक्षिद्रुमभेदयोः शैले, वि. चिकुरोऽद्रौ गृहबभ्रौ केशे चञ्चलशैलयोः । पक्षिवृक्षभिदोश्चापि, हे. चिकुरो वृक्षभित्कचो, त्रि चिकुरो केशचञ्चलौ, अने.

चित. चितं छन्नं त्रिषु चिता चित्यायां संहतौ स्त्रियाम्, मे. चिताचितौ । मृतार्थदारुषु चये, हे. चितञ्छन्ने चुल्लिकायां चित्यासंहतिचित्ययोः, वि.

चिति. चितिचित्याहन्त्योः स्त्री, मे, हे. चितिः समूहे चित्यायाम्, वि. v. चिता.

चित्य चित्यं मृतकचैत्ये स्यात् चित्या मृतचितौ स्त्रियाम्, मे. चित्यं मृतकचैत्ये स्यात् चित्या मृतचितावपि, वि. चित्यं मृतकचैत्ये स्यात् चित्या मृतचितावपि, हे.

चित्र. चित्रं स्यादद्भुतालेख्यतिलकेषु विहायसि। चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। चक्षाम्रोऽङ्घिभेदेषु कर्बुरे चाभिधेयवत्, वि. चित्रं खे तिलकेऽद्भुते। आलेख्ये कर्बुरे चित्रा त्वाखुपर्णीसुभद्रयोः। गोडुम्बाप्सरसो दन्त्यां नक्षत्रोरगभेदयोः, हे. चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च। मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम्। तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि। तदयुक्तयोस्त्वन्यलिङ्गम्, मे. आलेख्याश्चर्ययोश्चित्रम्, अ. कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियाम्, त्रि.

चित्रक. चित्रकं तिलके ना तु व्याघ्रभिद्वृक्षपाठिषु, मे. चित्रकः स्यात् तरक्ष्याघ्रभेदयो र्भेषजान्तरे, वि. चित्रकस्तु चित्रकारे द्रुमौषधिविशेषयोः, हे. चित्रकं चित्रके क्लीबं व्याघ्रे रण्डी च चित्रको, त्रि. चित्रकं तिलकं प्रोक्तं चित्रकः श्वापदो मतः। चित्रको मूलशातिश्च चित्रकोऽप्यन्तको मतः, अने.

चित्रगुप्त. चित्रगुप्तस्तु पुंसि स्याद् यमे तस्य च लेखके, मे. चित्रगुप्तः कृतान्ते स्यात् लेखके चास्य सम्मतः, वि. चित्रगुप्तस्तु कृतान्ते तस्य लेखके, हे.

चित्रभानु. चित्रभानुः पुमान् वैश्वानरे चाप्यर्केऽपि च, मे. चित्रभानुः खगेऽनले, वि. चित्रभानुस्तु कृशानुमहिनेशयो, हे. सूर्याग्नी चित्रभानू, अ.

चित्ररथ अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान्, मे. चित्ररथः स्याद् गन्धर्वे रवौ विद्याधरान्तरे, वि. चित्ररथो विद्याधरे गन्धर्वसूर्ययोः, हे.

चित्राटीर चित्राटीरो विधौ भालमङ्कितं येन तत्र च। घण्टाकर्णोपहाराय चतच्छागाक्षविन्दुषु, मे चित्राटीरो विधौ भालमङ्कितं

येन तत्र च। घण्टाकर्णोपहाराय इतश्छागास्त्रविन्दुभिः, वि. चित्राटीरो घण्टाकर्णबलिश्छागास्त्रविन्दुभिः। अङ्कितभाले चन्द्रे च, हे.

चिपिट. चिपिटः खाद्यभेदे ना त्रिषु पिट्टितविस्तृते, मे. चिपिटः पुनः। पृथुकेऽपि च तते, हे. चिपिटः खाद्यभेदेऽपि चिपिटो विस्तृतेऽन्यवत्, वि.

चिरजीविन्. चिरजीवी द्विकाजयोः, मे, वि. चिरजीवी तु वायसे। अजे च, हे.

चिर(रि)ण्टी. चिरिण्टी तु सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम्, मे. चिरण्टी तु सुवासिन्यां स्याद् द्वितीयवयःस्त्रियाम्, वि. चिरण्टी तु सुवासिनी। तरुणी च, हे.

चिलिमीलिका. चिलिमीलिका तु कण्ठीभेदे खद्योतविद्युतोः, मे. चिलिमीलिका खद्योते कण्ठीभेदे तडित्यपि, हे. कण्ठालङ्कारखद्योतविद्युत्सु चिलिमीलिका, त्रि. स्याच्चिलिमीलिका कण्ठीभेदे खद्योतविद्युतोः, वि.

चिल्ल. चिल्लः पुमान् क्लिन्ननेत्रे क्लिन्नाक्षेऽप्यभिधेयवत्। आततायिनि संप्रोक्तः चिल्लो स्यात् क्षुद्रवास्तुके, मे. चिल्लः खगे स चुल्लश्च पिल्लवत् क्लिन्नलोचने। क्लिन्नाक्षिः, हे. चुल्लचिल्लौ मतौ क्लिन्ने नेत्रे क्लिन्नाक्षि पिल्लवत्। आततायिनि भवेच्चिल्लश्चिल्ली स्याद् गौडवास्तुके, वि.

चिह्न. चिह्नं लक्ष्मपताकयोः, मे, त्रि. चिह्नं ध्वजे पताकायां, वि. चिह्नमङ्के पताकायाम्, हे.

चीन. चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे, मे. चीनो मृगान्तरे तन्तुव्रीहिद्देशांशुकान्तरे, वि. चीनो देशेषतन्तुषु। व्रीहौ वस्त्रे, हे. चीनो वस्त्रव्रीहिभेदे, त्रि.

चीर. चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च। चीरी कच्छाटिकाभिल्ल्योः, वि. चीरो भिल्ल्यां नपुंसकम्। गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः, मे चीरं वाससि चूडायां गोस्तने सीसपत्रके। चीरी कच्छाटिकाभिल्ल्योः, हे.

चीरक. चीरकोऽधिक्रियालेखे पतङ्गां चीरिका मता, वि.

चीर्णपर्ण. चीर्णपर्णस्तु निम्बेऽपि खर्जूरीभूरुहे पुमान्, मे. चीर्णपर्ण-स्तु निम्बे स्यात् खर्जूरीभूरुहेऽपि च, वि. चीर्णपर्णः खर्जूरनिम्बयोः, हे. चीर्णपर्णस्तु खर्जूरपिचुमर्दयोः, लि.

चीवर. चीवरं वल्कले वस्त्रे, धने.

चुक्र चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्रीपुंस्यम्लेऽम्लवेतसे, मे. चुक्रस्त्वम्ले-ऽम्लवेतसे। चुक्री चाङ्गेरिकायां स्यात् वृक्षाम्ले चुक्रमिष्यते, वि. चु-क्रशाम्लेऽम्लवेतसे। वृक्षाम्ले चुक्री चाङ्गेर्याम्, हे.

चुम्बक चुम्बकचुम्बनपरे धूर्तायस्कान्तयोरपि। बहुग्रन्थैकदे-शज्ञे घटस्योर्ध्वावलम्बने, मे. चुम्बकः स्याद् बहुगुरुधूर्तायस्कान्तकामुके, वि. चुम्बकः कामुके धूर्ते बहुगुरुग्रन्थभेदयोः, हे.

चुलुक चुलुकः मह्तो भाण्डे भेदे चलुकवन्मतः, वि. v. चलुक.

चुल्ल. चुल्ली चितायामुद्धाने, मे. चुल्ली चितायामुद्धाने कचिद्-वायोऽप्युदीरिता, वि. चुल्ली ह्वाने च, हे v चिल्ल.

चुलकी. चुलकी शिशुमारेऽपि कुण्डीभेदे कुलान्तरे, मे, वि. चुलकी कुण्डिकाभेदे शिशुमारे कुलान्तरे, हे.

चूडा. चूडा वलभी शिखायां बाहुभूषणे, मे. चूडा शिखायां वलभी चूडा बाहुविभूषणे, वि चूडा शिखाग्रयोः। बाहुभूषावलभ्योश्च, हे चूडा शिखिशिरस्यपि, ह

चूडामणि. चूडामणिः शिरोरत्ने काकचिञ्चाफले पुमान्, मे. चूडामणिः शिरोरत्ने काकचिञ्चाफलेऽपि च, वि. चूडामणिः काकचिञ्चा-फले मूर्धमणावपि, हे

चूडाल चूडाला त्वब्दटायां स्त्री चूडावति च वाच्यवत्, मे चूडाला त्वब्दटायां स्यात् चूडावति तु वाच्यवत्, वि. चूडालश्चूडया युक्ते चूडा-लाऽपि च चक्राला, हे

चूतक चूतकः कूपकेऽप्याम्रे, मे, वि. चूतकः कूप आम्रे च, मे.

चूर्ण अथ चूर्णौ कपर्दके। चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिषु, मे चूर्णानि वासयुक्तिषु। चूर्णः चोदे क्षारभेदे, हे चूर्णं गन्धयुतावपि, त्रि चूर्णः चोदे क्षारभेदे चूर्णानि वासयुक्तिषु, वि

चूलिका चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्, मे चूलिका नाटकाङ्कर्थे। करिणः कर्णमूले च, हे चूलिका नाटकस्याङ्गे कर्णमूले च हस्तिनाम्, वि नाटकाङ्गेषु चूलिका, त्रि

चेत् चेत् कुत्सितप्रश्नयोः। यद्यात्तरेऽप्यसाकल्येऽ, मे

चेतन चेतना स विदि स्त्रियाम्। वाच्यवत् प्राणयुक्ते, मे चेतना स विदि प्रोक्ता वाच्यवत् प्राणिनि स्मृता, वि चेतनः स्यात् सहृदयमानिनोश्चेतना तु धीः, हे

चेल चेलो नोचेऽन्यवस्त्रे लमं प्रुके गर्हितेऽन्यवत्, वि चेलं गर्हितवस्त्रयोः, हे चेलोऽधमे त्रिषु। नपुंसकन्तु वसने, मे चेल वस्त्रेऽधमे त्रिषु, म

चेष्टित चेष्टितं गतिचेष्टयोः, मे

चैत्य चैत्यमायतने बुद्धबिम्बे नोद्देश्यपादपे, मे चैत्यमायतने बुद्धबिम्बे चोद्देशपादपे, वि चैत्यं जिनौकस्तद्बिम्बं चैत्यो जिनसभातरुः। उद्देशवृक्षः, हे चैत्यमायतने बुद्धबिम्बोद्देशकद्रुमयोः, त्रि चैत्यं बुद्धान्तेऽप्युक्तः देवतायतनेऽपि च, ह

चैत्र चैत्रं मृते देवकुले ना भृम्नासभेदयो, मे चैत्रं मृतकचैत्रे स्यात् चैत्रो मासाद्रिभेदयोः, वि चैत्रो मासाद्रिभेदयोः। चैत्रं मृतकचैत्रे च, हे मृते देवकुले चैत्रं ना भृम्नासभेदयो, त्रि

चोच चोचो गोते शुचौ दक्षे तथाभीष्टमनोज्ञयोः, मे, वि चोचः सुन्दरगीतयो। शुचौ, हे शुचौ दक्षे च चोचः स्यात्, त्रि

चोड चोडः प्रावरणे भूम्नि देशभेदे, मे चोडो देशविशेषे स्यात् चोडः प्रावरणान्तरे, वि चोड कञ्चुकदृश्यो, हे,

चोद्य चोद्य स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्, मे, वि.

चोदन्तु प्रश्ने प्रेर्येऽङ्ग,नेऽपि च, हे.

चोर. चोरश्चौरसुगन्धयोः, वि. V. चौर.

चोल. चोलः कूर्पासके पुमान्। नपुंसकं तु वसने, मे. चोला कूर्पासके देशे, हे.

चोलकिन्. चोलकी तु करीरे स्यान् नारङ्गे किष्कुपर्वणि, वि, मे. चोलकी नागरङ्गे च करीरे किष्कुपर्वणि, हा. चोलकी तु नागरङ्गे किष्कुपर्वकरीरयोः, हे.

चौर. चौर. पाटच्चरेऽपि स्यात् चौरपुष्पौषधावपि, मे. चौरो दस्युसुगन्धयोः, हे.

चौल. चौलं कर्मणि मुण्डने, हे.

च्युत्प. च्युत्पः पवनयुद्धयोः, वि.

छ. छाच्छादने स्त्रियां छ्याता निर्मलेऽप्यवदिष्यते, मे. एकनेत्रश्च सुपली यामकूर्परगो द्रुतिः। त्रिबिन्दुकलया चारी च्छकारः स्वेष्टकाभिधः, मा.

छगल. छगलं नीलवस्त्रे ना च्छागे स्त्री वृद्धदारके, मे. छगलश्छागे च्छगली च्छागमातरि। वृद्धदारकभेषजे च्छगलं नीलवाससि, वि. छगलश्छागे च्छगली वृद्धदारकभेषजे। छगलं तु नीलवस्त्रे, हे.

छत्र. छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलीन्ध्रयोः। नपुंसकश्चातपत्रे, मे. छत्रमातपवारणे। छत्रा मधुरिकायां स्यात् कुस्तुम्बुरुशिलीन्ध्रयोः, वि. छत्रं स्यादातपत्राणे च्छत्रा मधुरिकौषधौ। धान्याके च शिलीन्ध्रे च, हे.

छत्रभङ्ग. छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः, मे, वि. छत्रभङ्गो नृपक्षये। स्वातन्त्र्ये विधवात्वे च, हे. वैधव्ये नृपनाशे च च्छत्रभङ्गः प्रकीर्तितः, त्रि.

छद. छदः पलाशे गरुति ग्रन्थिपर्णतमालयोः, मे, वि. छदः पत्रे पतत्रे च ग्रन्थिपर्णतमालयोः, हे. पलाशे गरुति च्छदः, त्रि.

छदन. छदनं च दले पत्रे पिधाने, मे. छदनं पत्रपत्रयोः, वि. छदनं पर्णे गरुति, हे.

छद्मन्. छद्म व्याजापदेशयोः, मे. छद्म शाठ्यापदेशयोः, वि. छद्म शाठ्येऽपदेशेऽप्यतिकर्मणि, हे.

छन्द. छन्दो वशेऽप्यभिप्राये, मे, वि. छन्दो वशेऽभिप्राये च, हे. अभिप्रायवशौ छन्दौ, अ.

छन्दस्. छन्दः पद्ये च वेदे च स्वैराचाराभिलापयोः, मे, वि. छन्दः पद्येच्छयोः श्रुतौ, हे. छन्दः पद्येऽभिलापे च, अ. छन्दः पद्यश्रुतीच्छासु, त्रि.

छन्न. छन्नन्तु रहसि क्लीवं छादिते वाच्यलिङ्गवत्, मे. छन्नं रहश्छादितयोः, वि, हे.

छर्दन. छर्दनं वमने क्लीवं निम्बालम्बुषयोः पुमान्, मे. छर्दनोऽलम्बुषे निम्बे छर्दनं वमनान्तरे, वि छर्दनोऽलम्बुषे निम्बे छर्दनं वमनेऽपि च, हे. अथालम्बुषे पुमान्। निम्बेऽपि छर्दनं वान्ते, त्रि. छर्दनोऽलम्बुषे निम्बे, हा.

छल. छलं स्खलितशाठ्ययोः, मे. छलं तु स्खलिते व्याजे, वि. छलं छद्मस्खलितयोः, हे, त्रि.

छल्ली छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे, मे, वि. छल्ली सन्तानवीरुधोः। वल्कले पुष्पभेदे च, हे.

*छवि छविः शोभारुचो योषित्, मे. छविः शोभारुचो मता, वि.* छविस्तु रुचि शोभायाम्, हे

छाया. छाया सूर्यप्रियाकान्तिप्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापंक्तिषु स्त्रियाम्, मे. छाया सूर्यप्रियातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिसच्छोभापंक्तिषु स्मृता, वि. छाया पंक्तौ प्रतिमायां अर्कयोषित्यनातपे। उत्कोचे पालने कान्तौ शोभायां च तमस्यपि, हे. छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः,

ष्म कान्यनातपयोश्छाया, चने.

छित्वर. छित्वरं छेदनद्रव्ये छित्वरो धूर्तवैरिणोः, वि. छित्वरो वैरिधूर्त्तयोः। छित्वरं छेदनद्रव्ये, हे.

छिदिर. छिदिरः पावके रज्जौ करवाले परश्वधे, मे, वि. छिदिरोऽग्नौ परश्वधे। करवाले च रज्जौ च, हे.

छिदुर. छिदुरश्छेदनद्रव्ये धूर्ते वैरिणि च त्रिष, मे.

छिद्र. छिद्रं दूषणरन्ध्रयोः, मे. छिद्रं विवररन्ध्रवत्। गर्त्ते दोषे, हे. v. विवर.

छिन्न. छिन्नं छात्ते लिलिङ्ग सप्राद् गुडूच्यामपि योषिति, मे. छिन्नं भिन्ने तु वाच्यवत्। छिन्नाऽमृतायां पुंश्चल्याम्, वि. छिन्ना स्यादमृतेत्वरी। छिन्नं भिन्ने, हे.

छुप. छुपः युपस्पर्शनयोः, मे, वि.

छेक. छेको गृहाश्रितमृगपक्षिणो नागरे त्रिषु, मे. छेको विदग्धे विश्वस्तमृगनीडजयोरपि, हे. छेको विदग्धे च्छेकश्च विश्वस्तमृगपक्षिणोः, वि. छेकः पङ्क्तिवकयोः, शा. गृहासक्ते पक्षिमृगे च्छेको नागरिके त्रिषु, त्रि.

छेदन. छेदनं भिदि। कर्तने, मे. छेदनं कर्तने भेदे, वि. छेदनं कर्तने भिदि, हे.

ज. जो ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने, मे. स्थिरो जयन्तो जपजः शूली च चतुराननः। मणिबन्धगतो वामे जकारो जनकोत्तमः, मा.

जकुट. जकुटं वार्ताकुसुमे जकुटो मलये शुनि, मे जकुटस्तु वार्ताकुकुसुमे शुनि। मलये, हे जकुटो मलये ख्यातो वार्ताकुकुसुमे शुनि, वि.

जगत् जगत् स्यात् पिष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च, मे जगदाख्या पुमान् वाते विष्टपे जङ्गमेऽपि

च। जगती भुवने च्मायां छन्दोभेदे जनेऽपि च, वि. ना वाते पिष्टपे जगत्, त्रि. जगल्लोकेङ्गवायुष, हे. जगती च्छन्दसि चितौ। जम्बूवप्रे जने लोके, हे. जगतो जगति च्छन्दोविशेषेऽपि चितावपि। जगद्दिङ्गेऽपि, श्र. जगती राजप्रधानलोकेऽपि, ह.

जगल. जगलो मदनद्रुमे। मेदके पिष्टमद्ये च पुंसि धूर्तेऽभिधेयवत्, मे. जगलः पिष्टमद्ये च मेदके मदनद्रुमे। कितवे, वि. जगलो मदनद्रुमे। मेदके कितवे पिष्टमद्ये, हे.

जघन. जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि, मे. जघनं च स्त्रियाः श्रोणिपुरोभागे कटीरके, वि. जघनं कटौ। स्त्रियाः श्रोणिपुरोभागे, हे.

जघन्य. जघन्यं मेहने क्लीवं चरमे गर्हितेऽन्यवत्, मे. जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्, वि. जघन्यं शिश्ने गर्ह्येऽन्त्ये, हे. जघन्योऽन्त्योऽधमेऽपि च, श्र.

जघन्यज. जघन्यजः कनीयसि। वृषले, मे. जघन्यजोऽनुजे शूद्रे, वि, त्रि. जघन्यजोऽनुजन्मानि। शूद्रे च, हे.

जङ्गल. जङ्गलं निर्जनस्थाने त्रिलिङ्गत्रां पिशितेऽस्त्रियाम्, मे. जङ्गलो जलनिसृक्तदेशे मांसे च जङ्गलम्, वि. जङ्गलो निर्जने देशे पिशितेऽपि, हे. जङ्गलो निर्जने देशे त्रिलिङ्गः पिशितेऽस्त्रियाम्, त्रि.

जटा जटा लम्नकचे मूले मांस्यां श्रचे पुन जंटौ, मे. जटा केशविकारे मांसिमूलयोः, हे. जटा लम्नकचे मूले सचमांसिकयो जंटौ, वि. मूले लम्नकचे जटा, श्र.

जटाटङ्क. जटाटङ्को हरेऽपि च, हा.

जटायु. जटायुः पुंसि सम्पातेः कनीयसि च गुग्गुलौ, मे. जटायुर्गुग्गुलतरौ जटायु विहगान्तरे, वि. जटायु गुग्गुलौ खगे, हे.

जटायुस्. जटायु पुंसि सम्पातेः कनीयसि च गुग्गुलौ, मे.

जटिल जटिला पिप्पलीमांस्यो जंटायुक्ते त वाच्यवत, मे. जटि-

न्तु जटायुक्ते जटिला मांसिकौषधौ, वि जटिलो जटी। जटिला तु मासिकायाम्, हे

जठर जठरो न स्त्रियां कुक्षौ रद्धकर्कटयोस्त्रिषु, मे कुक्षौ रद्धे च जठरम्, वि जठरः कुक्षिरद्धयोः। कठिने च, हे जठरः कठिनेऽपि स्यात्, श

जड जडा स्त्रियाम्। शूकशिम्ब्यां हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु, मे जडो मूर्खो हिमग्रस्ते शूकशिम्ब्यां जडा मता, वि जडो मर्दे हिमाघाते जडा स्याच्छूकशिम्बिका, हे

जतुक जतुकाऽजिनपत्राया जतुकं हिङ्गुलाचयोः, मे, वि जतुकं हिङ्गुलाचयोः। जतुका चर्मचटका, हे लाचाऽपि जतुका प्रोक्ता, श

जन जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि, मे जनो लोके जगद्भेदे पृथग्जने। जनी स्नुषावनितयोः, हे जनो लोके महर्लोकात् परलोके च पामरे। जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता, वि

जनक जनक पितृभूपयोः, हे जनकः पितृराजर्ष्योः, वि जनक पितृभुजोः, मे

जनन जननी तु दयामातो र्जननं वंशजन्मनोः, मे

जनपद भवेज्जनपदो जानपदोऽपि जनदेशयोः, मे भवेज्जनपदो देशे जने जानपदोऽपि च, वि जनपदः स्यात् पुन र्जनदेशयोः, हे देशे जने जनपद, त्रि

जनि १ जन

जन्य जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। निष्पत्त्यादावभिजातेऽपि नवोढाज्ञातिभृत्ययोः। परिमाणे, मे जन्यं हट्टे परीवादे स्युगे जनके पुम। जन्य स्यात् जननीये च जन्या मातृसखीमुदोः। जन्यो वरवधूज्ञातिप्रियभृत्यहितेऽपि च, वि जन्यं स्याज्जनवादेऽपि च युद्धे हट्टे च जन्यं स्यात्।

जन्यो जामात्वत्सले। जनके जननीये च नवोढानुचरादिषु। जन्यं कोलीने युध्दे जन्यो मातृसखोसुहो:, हे.

जन्यु. अथ जन्युः स्यात् पुंसि प्राणाग्निधातृषु, मे. जन्यु: प्राणाग्निधातृषु, वि. अनुप्र: सत्राज्जन्तुमात्रे च पावके परमेष्ठिनि, हे.

जम्बाल. जम्बालः शैवले पङ्के, मे. जम्बालं शैवले पङ्के, वि. जम्बालं कर्दमे शैवलेऽपि च, हे. जम्बालौ पङ्कशैवलौ,' त्रि.

जम्बीर. जम्बीरः प्रस्थपुष्पे सत्रात् पुंसि दन्तशठद्रुमे, मे. जम्बीरं प्रस्थपुष्पाख्यशाके दन्तशठेऽपि च, वि. जम्बीरः प्रस्थपुष्पाख्यशाके दन्तशठद्रुमे, हे.

जम्बुक. जम्बुकः फेरवे नीचे पश्चिमाशापतावपि, मे. जम्बुकः श्वापदे नीचे प्रतीचीदिक्पतावपि, वि. जम्बुको वरुणे फेरौ, हे. जम्बुको क्रोष्टुवरुणौ, श.

जम्बू. जम्बूः सत्रात् पादपान्तरे। तथा सुमेरुसरिति द्वीपभेदेऽपि च स्त्रियाम्, मे. जम्बूः सुमेरुसरिति द्वीपद्रुमविशेषयोः, वि. जम्बूर्मेरुतरङ्गिण्यां द्वीपवृक्षविशेषयोः, हे.

जम्बूल. जम्बूलस्तु पुमान् जम्बूविटपे क्रकचच्छदे, मे. जम्बूलो जम्बूविटपे जम्बूलः क्रकचच्छदे, वि. जम्बूलः क्रकचच्छदे। जम्बूद्रुमे, हे.

जम्भ. जम्भो दैत्यान्तरे दन्ते जम्बीरे भक्षणेऽपि च, वि, मे. जम्भ सत्राद्दानवान्तरे। दन्तभोजनयोरंशे हनौ जम्बीरतूणयोः, हे. अथ दानवे। जम्बीरे व्यवहारे च जम्भो दन्तेऽपि चेष्यते, त्रि.

जम्भल. जम्भलः पुंसि जम्बीरे बुद्धदेवान्तरेऽपि च, मे. जम्भलो देवताभेदे जम्बीरेऽपि च जम्भलः, वि, जम्भलः। जम्बीरे देवताभेदे, हे. जम्बीरे देवभेदेऽपि जम्भलः, त्रि

जय जयो जयन्ते विजये जया दुर्गाग्निमन्थयोः। जयन्तीतिथिभेदोमासखीपथ्यासु च स्मृता, वि जयो जयन्ते विजये जयोमातृसखी तिथिः। पथ्या जयन्त्यग्निमन्थः, हे. जया जयन्तीतिथिभित्पथ्योमासखीषु च। अग्निमन्थे ना जयन्ते विजये च युधिष्ठिरे, मे.

जयन. जयनं स्यात् तुरङ्गादिसन्नाहे विजयेऽपि च, मे, वि. जयनं विजयेऽश्वादिसन्नाहे, हे.

जयन्त. जयन्ती स्त्वग्निक्षौर्योरिन्द्रपुत्रीपताकयोः। पुमान् ऐन्द्रौ हरे भीमे, मे. जयन्तायैन्द्रिगिरिशौ जयन्त्यापताकयोः। जीवन्त्यामिन्द्रपुत्र्यां च, हे. जयन्तः शङ्करेऽपि स्यात् जयन्तः पाकशासनौ। जयन्ती पादपे गौर्यामिन्द्रपुत्रीपताकयोः, वि. जयन्ती नगरी प्रोक्ता जयन्ती चटकानुजा। जयन्त्योषधिभेदः स्यात् जयन्ती शकसमाया, श्रने.

जरठ. जरठः कर्कशे पाण्डौ जरठः कठिनेऽन्यवत्, वि. जरठः कर्कशे जर्षे, हे. जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत्, मे. जरठः कठिने प्रोक्तः प्राज्ञैः परिणतेऽपि च, रु.

जरण. जरणं जीरकेऽजाजिहिङ्गुसौवर्चलेऽपि च, मे. [जरणं जीरकाजाजिहिङ्गुसौवर्चलेष्वपि, वि. जरणो रवके हिङ्गौ जीरके कृष्णजीरके, हे.

जरायु. जरायुरपि तत्पचिराजे (=जटायौ) गर्भाशये पुमान्, मे.

जर्जर. जर्जरं शैवले शक्रध्वजे त्रिषु जरातुरे, मे. जर्जरं स्याद् वासवध्वजजीर्णयोः, हे. जर्जरो वाच्यवत् जीर्णे जर्जरं वासवध्वजे, वि.

जर्जरीक. जर्जरीकं बहुच्छिद्रे जरातुरेऽपि वाच्यवत्, मे. जर्जरीकं बहुच्छिद्रे जर्जरीकं जरातुरे, वि. जर्जरीकं जरातुरे। बहुच्छिद्रेऽपि, हे.

जर्ण. जर्णश्चन्द्रे च वृक्षे च, मे, वि. जर्णो जीर्णद्रुमेन्द्वोः, हे.

जल. जलं गोकलने नीरे ह्रीवेरेऽप्यन्यवत् जड़े, मे. जलं गोकलने नीरे ह्रीवेरे च जड़ेऽन्यवत्, वि. जलं गोकलने जड़े। ह्रीवेरेऽम्बुनि, हे.

जलकरङ्क. अथो जलकरङ्कः स्यान् नालिकेरफलेऽम्बुदे। शङ्खे जललतायाञ्च वारिवाहे च कीर्त्तितः, मे. जलकरङ्कः स्यान्मेघे नारिकेरतरोः फले। शङ्खे, हे अथो जलकरङ्कः स्यान् नारिकेलफलेऽम्बुदे।

मञ्जौ जलशायां च वि. कम्बौ, जलकरङ्कः सत्रान् नारिकेलफलेऽपि च, लि.

जलकूपी. जलकूपी कूपगर्त्ते पुष्करिण्याञ्च योषिति, मे. जलकूपी कूपगर्त्ते पुष्करिण्याञ्च कथ्यते, वि, जलकूप्यन्धुगर्भके। सरस्याम्, हे.

जलगुल्म. जलगुल्मो जलावर्त्ते कच्छपे जलचत्वरे, वि, मे, धा. जलगुल्मो जलावर्त्तेऽम्बु,चत्वरे कमठे, हे.

जलज. जलजं कमले मञ्जौ, मे, हे. जलजं शङ्खपद्मयोः, वि, त्रि.

जलतापक. जलतापक इल्लिशकाकाचीभत्स्ययोश्च पुंसि स्यात्, मे. कथ्यते जलतापकः। काकाचीराजसफरमत्स्ययोः, वि.

जलद. जलदो मुस्तके मेघे, मे, हे. जलदो मुस्तकेऽम्बुदे, वि.

जलरण्ड. जलरण्डो जलावर्त्ते पयोरेण्वौ भुजङ्गमे, मे, वि. जलरण्डः पयोरेण्वौ जलावर्त्ते भुजङ्गमे, हे.

जलबिल्व. जलबिल्वः कर्कटे स्यात् पद्माक्षे जलचत्वरे, मे. जलबिल्वस्तु पद्माक्षे कर्कटे जलचत्वरे, वि. जलबिल्वस्तु कर्कटे। जलचत्वरपद्माक्षे, हे. जलबिल्वः कर्कटके पद्माक्षे जलवल्कले, धा.

जलशुचि. जलशुचिः कङ्के त्रोटिमत्स्यश्रृङ्गाटयोरपि। शिशुमारे च पुंलिङ्गः जलौकायान्तु योषिति, मे. जलशुचि जलौकसि। शृङ्गाटे शिशुमारे च कङ्के त्रोटिमतेऽपि च, वि. जलशुचिः शिशुमारे त्रोटिमत्स्ये जलौकसि। काकश्रृङ्गाटयोश्चापि, हे. जलशुचि जलौकाऽपि, धा.

जलाञ्चल. जलाञ्चलं स्रतौ वारिनिर्गमे शैवलेऽपि च, मे, वि. जलाञ्चलं तु शैवाले स्रवत्‌ जलनिर्गमे, हे.

जलाटन. जलाटनो लोहपृष्ठे जलौकायां जलाटनी, मे, वि. जलाटनः कङ्कपक्षे जलाटनी जलौकसि, हे.

जलाशय. जलाशयो जलाधारे स्त्राद्युशीरे नपुंसकम्, मे. जलाशयमुशीरे च जलाधारे जलाशयः, वि. जलाशयमुशीरे स्त्राज्जलाशयो

जलाश्रये, हे.

जलेन्द्र. जलेन्द्रः पुंसि वरुणे जम्भले च महोदधौ, मे. जलेन्द्रो वरुणेऽम्बुधौ। जम्भले च जलेन्द्रः स्यात्, वि. जलेन्द्रो जम्भलेऽम्भोधौ वरुणेऽपि च, हे.

जव. जवो वेगवति त्रिषु। पुंलिङ्गस्तु भवेद्वेगे चोड्रपुष्पे जवा स्मृता, मे. जवः स्याद् वेगवेगिनोः। जवोड्रपुष्पे, हे. जवो वेगिनि वेगे स्याद् चोड्रपुष्पे जवा मता, वि.

जवन. जवनस्तु स्याद्वेगेऽपि हये ना वेगिनि त्रिषु, मे. जवनो देशभेदे स्याद् वेगवेगाधिकाश्वयोः। जवन्योषधिभेदे स्याद् वाच्यवद् वेगिनि स्मृतः, वि. जवनो वेगिवेगयोः। वेग्यश्वे नीदति जवन्यपत्या-मोषधीभिदि, हे. जवनो देशवेगिनोः, त्रि. v. यवन.

जसुरि. जसुरिः पावके पवौ, वि.

जह्नु. जह्नुः स्यात् पुंसि राजर्षिभेदे च मधुसूदने, मे.

जाङ्गल. जाङ्गली शूकशिम्ब्यां स्त्री जाङ्गलो ना कपिञ्जले, मे. जाङ्गली शूकशिम्ब्यां स्यात् जाङ्गलस्तु कपिञ्जले। जाङ्गलः स्यात् कपिञ्जले जाङ्गली तु शूकशिम्ब्याम्, हे.

जाङ्गुल. जाङ्गुली विषविद्यायाम् जाङ्गुलं जालिनीफले, मे, वि. जाङ्गुलं जालिनीफले। जाङ्गुली विषविद्यायाम्, हे.

जात. जातं व्यक्तौघजन्मसु। क्लीवं त्रिलिङ्गमुत्पन्ने, मे. जातं व्यक्तौघजन्मसु, त्रि. जातं जातौघजन्मसु, वि. जातं जातव्रौघजनिषु, हे.

जाति. जातिः स्त्री गोत्रजन्मनोः। अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि। जातीफले च मालत्याम्, मे. जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः। जाति र्जातीफले मालत्यां चुल्लीकम्पिल्लयोरपि, वि. जातिः सामान्यगोत्रयोः। मालत्यामामलक्यां च चुल्ल्यां कम्पिल्लजन्मनोः। जातीफले च्छन्दसि च, हे. जातिः सामान्यजन्मनोः, अ. जातिश्छन्दसि मालत्यां चुल्ल्यां जातीफले कुले, त्रि. जातिः स्यात् मञ्जरआख्याने मालती

जातिरुच्यते । गोत्वादिजन्म जातिः स्त्रीजातिर्वल्लीति कथ्यते, अने.

जातु. जातु शब्दे विगर्ह्ये च कदाचिदर्थेऽपि, मे.

जात्य. कुलीनश्रेष्ठयो र्जात्यम्, ह.

जानपद. v. जनपद.

जामातृ. जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान्, मे. जामाता वल्लभे सूर्यावर्त्तेऽपि दुहितुः पतौ, वि. जामाता दुहितुः पत्यौ। सूर्यावर्त्ते वल्लभे च, हे. सूर्यावर्त्तेऽपि जामाता, त्रि.

जामि. जामिः स्वसृकुलस्त्रियोः, वि, हे, ध. जामिः कुलबालिकायां च, ह. v. यामि.

जायानुजीविन्. जायानुजीवी पुंसि स्यात् नटे च वकपक्षिणि, मे. जायानुजीवी तु नटे दुर्गताश्विनयो र्वके, वि. अथ जायानुजीविनः । वकाश्विननटदुःस्थाः, हे.

जार. जारी स्यादौषधीभेदे स्त्रियामुपपतौ पुमान्, मे. जारी स्यादोषधीभेदे जारस्तूपपतावपि, वि. जारस्तूपपतौ जार्यौषधीभिदि, हे.

जाल. जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः। जालो नीपद्रुमे जाली पाटलिकौषधी स्त्रियाम्, मे. जालं समूह आनायगवाक्षक्षारकेष्वपि, अ. जालं दम्भेऽपि, त्रि. जालं कपटेऽप्युरश्छदम्, ह. जालं गवाक्ष आनाये कोरके दम्भवृन्दयोः। जालो नीपद्रुमे जाली कोषातक्यामुदाहृता, वि. जालन्तु गवाक्षे क्षारके गणे। दम्भानाययो र्जालो नीपे जाली पटोलिका, हे.

जालक. जालकं कोरके दम्भे कुलायानाययोरपि। न पुंसि मोचकफले स्त्रियान्तु वसनान्तरे। गिरिसारजलौकायामपि स्याद् विधवास्त्रियाम् । भटानामश्मरचिताङ्गरक्षिण्यां च जालिका। जालिकश्चे वाक्यवग्रामजालिजालोपजीविनोः, मे. जालिका जालिनीफले। भटानामश्मरचिताङ्गरक्षिणश्च जालिका । गिरिसारे जलौकायामपि स्याद्वि-

धवास्त्रियाम्। जालिकः पुनरूहिष्टो ग्रामकूटे च धीवरे, वि. जालकं कोरके प्रोक्तं कुलाये जालिनीफले। आनाये दम्भभेदे च वस्त्रभेदे च जालिका, वि. जालिका वस्त्रभित् कूटच्छत्रकैवर्त्तों च जालकौ, त्रि.

जाल्म. जाल्मः पुमान् पामरे क्रूरे पुंस्यसमीक्ष्यकारिणि, मे. जाल्मः पुमान् पामरे क्रूरे जाल्मोऽसमीक्ष्यकारिणि, वि. जाल्मस्तु पामरे। असमीक्ष्यकारिणि च, हे.

जाहक. जाहको गोकुमार्जारखट्टाकाहरिङकासु च, मे, वि. गोकुं काहरिङकायाश्च जाहकश्चमिरिष्यते, श.

जिगत्नु. जिगत्नुः पुंसि जन्तौ वैश्वानरेऽपि च, मे. जिगत्नुरग्नौ जन्तौ च, वि.

जिगीषा. जिगीषा जेतुमिच्छायां व्यवसायप्रकर्षयोः, मे, वि. जिगीषा तु जयस्पृहा। व्यवसायः प्रकर्षश्च, हे.

जिन. जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु, मे. जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे, वि. जिनोऽर्हद्बुद्धविष्णुषु, हे. बुद्धे जिनो जित्वरे च, त्रि. वीतरागो जिनः प्रोक्तो जिनो नारायणः स्मृतः। कन्दर्पोऽपि जिनश्चैव जिनः सामान्यकेवली, धने.

जिष्णु. जिष्णुर्ना वासवेऽर्जुने। जित्वरे वाच्यवत्, मे. जिष्णुः शक्रे धनञ्जये। जित्वरे च, वि. जिष्णुः शक्रोऽर्जुने विष्णौ जित्वरेऽर्के वसुष्वपि, हे. जेतरीन्द्रेऽर्जुने जिष्णुः, त्रि.

जिह्म. जिह्मस्तु कुटिले मन्दे क्लीवं तगरपादपे, मे. जिह्मस्तु कुटिले मन्दे जिह्मन्तगरपादपे, वि. जिह्मः कुटिले मन्दे च जिह्मं तगरपादपे, हे. जिह्मस्तु कुटिलेऽलसे, श. जिह्मः स्यात् कुटिले मन्दे, त्रि.

जिह्मग. जिह्मगोऽहौ च मन्दगे, मे. जिह्मगो मन्दगे सर्पे, हे, वि.

जिह्वा. जिह्वा तु वाचि ज्वालारसज्ञयोः, हे

जिह्वाप. जिह्वापः शुनि मार्जारे, मे, त्रि. जिह्वापः शुनि मार्जारे व्याघ्रचित्रकयोरपि, वि. जिह्वापस्तु शुनि व्याघ्रे द्वीपिबिडालयोः, हे. जिह्वापो हपदंशे स्यादिन्द्रमत्तकामुके, शा.

जीमूत. जीमूतोऽद्रौ भृतिकरे देवताड़े पयोधरे, मे. जीमूतः स्याद्भृतिकरे शक्रेऽद्रौ घोषके घने, वि. जीमूतो वासवेऽम्बुदे। घोषकेऽद्रौ भृतिकरे, हे. जीमूतौ मेघपर्वतौ, धने. जीमूतं पर्वतेऽपि कथयन्ति, ह.

जीर. जीरस्तु जरणे खड्गे, मे. जीरः खड्गे मणिशृङ्गवेरे, वि. जीरस्त्वजाजत्रां खड्गे च, हे.

जीर्ण. जीर्णं परिपक्वपुराणयोः, मे. जीर्णं पक्वे पुराणे च, वि.

जीव. जीवः प्राणिनि हस्तौ च द्रुमभेदे बृहस्पतौ। जीवा जीवन्तिकामौर्वीवचाशिञ्जितभूमिषु। न स्त्री तु जीविते, मे. जीवः स्यात् त्रिदशाचार्ये द्रुमभेदे शरीरिणि। जीवितेऽपि च जीवा तु वचायां धनुषो गुणे। शिञ्जिते क्षितिजीवन्त्योः हन्तौ, हे. जीवोऽस्त्री जीविते पुंसि गुरुजन्त्वोः स्त्रियां गुणे, त्रि. जीवो द्रुमप्रभेदे स्यात् जीवः प्राणिनि गीष्पतौ। जीवा जीवन्तिकाभूम्यो र्मौर्वीशिञ्जितहस्तिषु। वचायामपि जीवा स्यात् जीवं जीवा च जीविते, वि.

जीवक. जीवकः प्राणके पीतशालक्षपणयोरपि। कूर्चशीर्षेऽपि पुंसि स्याद् आजीवे जीविका मता। त्रिषु सेविनि वृद्धग्राहीजीविनोराहितुण्डिके, मे. जीवकः पीतशाले स्यात् क्षपणे वृद्धिजीविनि। सेविनि प्राणकेऽप्याहितुण्डिके पादपान्तरे। आजीवे जीविकामाहुर्जीवन्त्यामपि कुत्रचित्, वि. जीवको वृद्धिजीविनि। क्षपणे प्राणके पीतसालसेवकयो र्द्रुमे। व्यालग्राहे जीविका तु जीवन्त्यां वर्तनेऽपि च, हे.

जीवञ्जीव. जीवञ्जीवश्चकोरे स्याद् द्रुमभेदेऽपि पुंस्ययम्, मे. जीवञ्जीवश्चकोरे स्याद्द्रुमपक्षिविशेषयोः, वि. जीवञ्जीवः खगान्तरे। द्रुमभेदे चकोरे च, हे.

जीवद्. जीवदो वैद्यविद्विषोः, मे, वि जीवदो रिपुवैद्ययोः। ग्रन्थिपर्णे, हे.

जीवन जीवनं वर्त्तने नीरप्राणधारणयोरपि। जीवनी जीवना चापि जीवन्तीभेदयो. क्रमात्, मे. जीवनं वर्त्तने नीरे पुत्रजीवे तु जीवनः। जीवनी जीवना चेति जीवन्तीभेदयोः क्रमात्, वि. जीवनस्तु पुत्रजीवे जीवनं वृत्तिवारिणोः। स्त्रियांजीवना तु मेदायां जीवनी तु मधुस्रवा, हे जीवनं वर्त्तनाम्भसोः, लि.

जीवन्तिका. जीवन्तिका गुडूच्याञ्च जीवाख्यशाकवन्द्यो, मे. जीवन्तिकापि जीवाख्यशाकवन्दागुडूचिषु वि.

जीवन्ती जीवन्ती जीवनीयाख्यो गुडूचीवन्द्योरपि, मे. जीवन्ती जीवनीयाख्यो गुडूचिवन्द्योरपि, वि जीवन्ती शमिवन्द्योः। जीवन्त्यां च गुडूच्यां च, हे.

जीवपुष्प. जीवपुष्पन्तु दमनके फणिज्जके, हे.

जीवातु जीवातुरस्त्रियां भक्ते जीविते जीवनौषधौ, मे. जीवातु जीविते भक्ते जीवातु जीवनौषधे, वि जीवातु जीवनौषधे। जीविते-ऽपि, हे.

जीवितेश. जीवितेशो यमे पुंसि त्रिषु स्त्रयात् जीवितेश्वरे, मे. जीवितेशो यमे कान्ते जीवाती जीविताधिपे, वि जीवितेश प्रिये यमे। जीवितस्यात्जिजीवात्वो, हे. जीवितेशो यमे नाथे, लि.

जुष्ट. जुष्टन्तु जीवतुच्छिष्टे सेविते वाच्यलिङ्गकम्, मे.

जुहुराण जुहुराणोऽपि चाध्वर्य्यावपि स्त्रयात् जातवेदसि, मे. जुहुराणोऽनलेऽध्वर्य्यौ, वि. जुहुराणोऽध्वर्युरवक्रयो, हे.

जू. जूस्तुरागमने प्रोक्ता सामान्यगमने स्त्रियाम्। जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्, मे. जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽपि च, वि, हे.

जृम्भा. जृम्भा पिकाशजृम्भणयोस्त्रिषु, मे जृम्भा जृम्भे विकाशे

ण, वि. जृम्भा जृम्भणे विकाशे, हे.

जृम्भित. जृम्भितं करणे स्त्रीणामीहास्फुटितयोरपि, मे, वि. जृम्भितं तु विचेष्टितप्रवृद्धयोः। जृम्भायां स्फुटिते चापि, हे.

जैवातृक. जैवातृकः पुमान् सोमे दीर्घायुःकृशयोस्त्रिषु, मे. जैवातृकः स्यादुग्धनीकरे। कृशायुष्मद्भेषजेषु, हे. जैवातृकः शशे चन्द्रे भैषज्यायुष्मतोरपि, वि. जैवातृकः प्रधाष्ठेऽपि, म. जैवातृकः शशे चन्द्रे दीर्घायुषि च सविषु, त्रि.

जोषम्. जोषम् सुखे प्रशंसायां तूष्णीलङ्घनयोरपि, मे, वि. जोषं सुखे स्तुतौ। मौनलङ्घनयोश्चापि, हे. तूष्णीमर्थे सुखे जोषम्, म.

ज्ञ. ज्ञो ब्रह्मबुधविद्वत्सु, मे. ज्ञो विरिञ्चे बुधे सौम्ये, वि. ज्ञः स्वराट् विचक्षणे यज्ञासने चान्द्रमसायनौ, हे.

ज्ञाति. ज्ञातिज्ञातसगोत्रयोः। पुमान्, मे. ज्ञातिः सगोत्रे पितरि, वि. ज्ञातिः पितृसगोत्रयोः, हे.

ज्ञानिन्. ज्ञानी स्यात् पुंसि दैवज्ञे ज्ञानयुक्तेऽन्यलिङ्गकः, मे.

ज्या. ज्या मातरि वसुधायां मौर्व्याम्, मे. ज्या मौर्वीमातृभूमिषु, वि. ज्या तु मातरि क्ष्मामौर्व्योः, हे. ज्या स्यान्मौर्व्यां चितायपि, त्रि.

ज्यानि. ज्यानि जीर्णे च हानौ च तटिन्यामपि योषिति, मे. ज्यानि र्जानौ स्रवन्त्यां च, वि.

ज्यायस्. ज्यायो वृद्धेऽतिप्रशस्ते, मे. ज्यायान् वृद्धे च प्रशस्ते च, वि. ज्यायान् वृद्धे प्रशस्ते च, हे. (अतिशये) वृद्धप्रशस्ययो ज्यायान्, म.

ज्येष्ठ. ज्येष्ठः श्रेष्ठे चातिवृद्धे त्रिषु मासान्तरे पुमान्। ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः, मे. ज्येष्ठः श्रेष्ठेऽतिवृद्धे च ज्येष्ठो मासान्तरेऽपि च। गृहगोधर्क्षयो ज्येष्ठा, वि. ज्येष्ठः स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयोः। ज्येष्ठा भे गृहगोधायाम्, हे. त्रिषु ज्येष्ठोऽतिप्रशस्तेऽपि, म. ज्येष्ठो मासि च वृद्धे च। ज्येष्ठा च गृहगोधिका, त्रि.

ज्योतिस्. ज्योतिरग्नौ दिवाकरे। पुमान् नपुंसकं दृष्टौ स्यान्न-क्षत्रप्रकाशयोः, मे. ज्योतिः प्रकाशे दृशि तारकासु ज्योति दिनेशान-लयोरपि स्यात्, वि. ज्योति वह्निदिनेशयोः। प्रकाशे दृशि नक्षत्रे, हे. ज्योति र्भद्योतदृष्टिषु, श. दीप्तौ दृष्टौ च तारासु ज्योतिः शब्दो निगद्यते, अन्ये चक्षुषि ज्योतिः, च.

ज्योत्स्ना. ज्योत्स्ना चन्द्रातपेऽपि स्यात् ज्योत्स्नायुक्तनिशि स्मृता। ज्योत्स्नी पटोलिकायां स्यात् ज्योत्स्नायुक्तनिशि स्त्रियाम्, मे. ज्योत्स्ना स्याज्ज्योतिःसंयुक्तनिशि चन्द्रातपेऽपि च। ज्योत्स्नी पटोली-ज्योत्स्नावन्निशोः, हे. ज्योत्स्नी पटोलिकायां स्यात् ज्योत्स्नायुक्तविभा-वरौ। ज्योत्स्ना सचन्द्रनक्षत्ररात्रौ चन्द्रातपेऽपि च, वि.

ज्वलित. ज्वलितं दग्ध उज्ज्वले, मे. ज्वलितं भास्वरे दग्धे, वि. ज्वलितौ दग्धभास्वरौ, हे.

झ. झो भवण्टीमे सुरगुरौ दैत्यराजे ध्वनावपि, मे. स्थितिः पाणौ तथाङ्गेयो वामाङ्गुलितलस्थितः। स्वस्तिकः स्यात्प्रसंज्ञश्च झकारो जान्तसंज्ञकः, मा.

झञ्झा. झञ्झा वाते सारवायौ नष्टेऽपि कीर्त्यते बुधैः। झञ्झा ध्वनिविशेषे च स्यादम्बुकणवर्षके, मे. झञ्झा ध्वनिविशेषेऽपि झञ्झाम्बुजल-वर्षणे, वि.

झर्झर. झर्झरः स्यात् कलियुगे वाद्यभाण्डे नदान्तरे, मे. झर्झ-रस्तु कलियुगे वाद्यभाण्डे नदान्तरे, वि. झर्झरो वाद्यभाण्डे कलियुगे, हे. नदभेदे वाद्ये च झर्झरः, लि.

झला. झला स्यादातपज्योर्मौ दुहितर्यपि च स्त्रियाम्, मे. झला दुहितरि स्मृता। आतपोर्मौपि सुतायां झाली क्वापि विलोक्यते, वि. झला पुत्र्यामातपोर्मौ, हे. झलाऽऽतपोर्मि र्दुहिता, लि.

झल्लरी. झल्लरी झिल्लरी च द्वे ऊढ्ये बालकुन्तले, मे. झल्लरीवत् झिल्लरी। वाद्यभेदे केशचक्रे, हे. झल्लरी झिल्लरी च द्वे ऊढ्ये बालचक्रके, वि

झप. झपा नागवलायां स्त्री तापमत्स्याटवीषु ना, मे. झपा नागवलायां सम्राट् वैसारिणि झषो मतः, वि. झषस्तु मकरे वने। मीने झषा पुनः नागवलायाम्, हे.

झाट. झाटो निकुञ्जे कान्तारे व्रणादीनाञ्च मार्जने, मे. झाटो व्रणादिसंमार्टौ कुञ्जकान्तारयोरपि, हे. झाटो निकुञ्जे कान्तारे व्रणसंमार्जनेऽपि च, वि.

झाली. V. झला.

झिञ्झिम. वनदाहेऽपि झिञ्झिमः, श.

झिम्मरी. V. भम्मरी.

झिल्लिका, झिल्लीका. झिल्लिकोद्वर्त्तनपटे स्त्रियां द्योते च झिल्लिका। आतपस्य रुचौ झिल्ल्याम्, मे. झिल्लीका झिल्लिकाऽपि च। विलेपनमले झिल्लयामातपस्य रुचि स्मृता, वि. झिल्लीका झिल्लिकावत् सत्राञ्चीर्या रुचयातपस्य च। विलेपनस्य च मले, हे.

झिल्ली. झिल्ली चीर्यातपरुचो वर्त्तयामुद्वर्त्तनांशुके, मे. झिल्ली स्यादातपरुचि वर्त्तयामुद्वर्त्तनांशुके, वि. झिल्ली उद्वर्त्तनांशुके। वर्त्तयातपरुचोश्चीर्यायाम्, हे.

झूणि. झूणिः क्रमुकभेदेऽपि दुष्टदैवश्रुतौ स्त्रियाम्, मे. झूणिः क्रमुकभेदेऽपि दुष्टदैवश्रुतावपि, वि. झूणिः क्रमुकभेदे सम्राट् दुष्टदैवश्रुतावपि, हे. झूणिः कठिनपूगयोः, वि.

ञ. ञः पुमान् सम्राट् बलीवर्दे शुक्रे वाममतावपि, मे. वामाङ्गुल्यग्रतः सिञ्जिरङ्गुष्ठौ सर्वसंज्ञकः। भासङ्गो ह्यनुनासस्य ञकारस्य निरञ्जनः, मा.

ट. टः पुमान् वामने पादे निःस्वनेऽपि क्वचिन्मतः, मे. जरा मुकुन्दः सोमेशः दक्षपादादिगोमुखः। गजाङ्कुशश्च बालेन्दुः अस्तनाद्यष्टकः स्मृतः, मा.

टगर. टगरष्टङ्कणाचारे हेलाविभ्रमगोचरे। नाऽन्यवत् केकराक्षे

स्यात्, मे टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे। वाचग्रवत् केकराक्षे तु, वि टगरष्टङ्कणे केकराक्षके, हे

टङ्क टङ्को नीलकपित्थे च खनित्रे टङ्कणे स्त्रियाम्। जङ्घायां स्त्री पुमान् कोपे कोषासिग्रावदारणे, मे टङ्को नीलकपित्थेऽसिकोषे कोपेऽश्मदारणे। मानान्तरे खनित्रे च जङ्घायां टङ्कणेऽपि च, हे टङ्क, कपित्थभेदे स्यान्मानान्तरखनित्रयोः। कोपेऽसिकोषे जङ्घायां टङ्कणे ग्रावदारणे, वि जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारणे। कपित्थे चास्त्रिया टङ्कः, त्रि टङ्कः स्यादभिमाने मस्तरघटनोपकरणेऽपि च, ह

टङ्कार टङ्कारो विस्मये पुंसि प्रसिद्धौ शिञ्जिनीध्वनौ, मे टङ्कारः शिञ्जिनीध्वनौ। विस्मये च प्रसिद्धौ च, वि टङ्कारो ज्यारवेऽद्भुते। प्रसिद्धौ च, हे मथ गुणध्वनौ। प्रसिद्धावपि टङ्कार, त्रि

टङ्ग टङ्गोऽस्त्री स्यात् खनित्रके। खड्गभेदे च जङ्घायाम्, मे टङ्गः खनित्रे जङ्घासेत्राः, हे टङ्ग, कृपाणभेदे स्यात् जङ्घायाञ्च खनित्रके, वि

टट्टरी टट्टरी स्यान्मृषावादे लम्पाटहवाद्ययोः, मे, वि टट्टरी स्वरताख्याने लम्पाटहवाद्ययोः, हे

टार टारो लङ्गतुरङ्गयोः, हे, वि, मे

टुण्टुक टुण्टुकः शोणकाल्पयोः, मे टुण्टुकावल्पशोणकौ, त्रि टुण्टुक शोणके क्रूरे, वि

ठ लाङ्गलीशो नन्दनश्च पालिनी च कमण्डलुः। दक्षजानुगतः स्थायी ठकारः स्थविरः स्मृतः, मा ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे, मे

ड नन्दो धान्ति दीरकश्च डामरो दक्षगुल्फगः। व्याघ्रपादः शुभाङ्घ्रिश्च डकारश्चामरो मतः, मा डः पुमान् वाडवाग्नौ स्यात् डाकिन्यां स्त्री निगद्यते, मे

डिङ्गर डिङ्गरो डङ्गरेऽपि च। धर्त्ते मे डिङ्गरो डङ्गरे धर्त्ते, वि

डिम्ब डिम्बो भयध्वनावण्डे पुप्फुसस्त्रीहविप्लवे, मे डिम्बः

स्यात् विप्लवनीदुरोरेरवृंदे पुपफुसे भये, वि. डिम्ब एरण्डभययो र्यिलदे सीह्नि पुपफुसे, हे. सीहविप्लवयो र्डिम्बः, वि. डिम्बं भये च कलले फुपफुसे च प्रचयते, श.

डिम्बिका. डिम्बिका जलविम्बे स्यात् सोणके कामुकस्त्रियाम्, मे.

डिम्भ. डिम्भोऽपि बालिशे बाले, मे. डिम्भो बालिशपोतयोः, वि. डिम्भो वैधेयबालयोः, हे. डिम्भौ तु शिशुबालिशौ, श.

डुलि. डुलिस्तु कमठे मुनौ, वि. ४. डुलि.

ढ. ढो ढक्कायां पुमान्‌ढुक्कः ध्वनि नसर च सारमे, मे. ऐश्वरो चार्धनारीशः नरः ग्रामान्तराकृतिः। दयपादाग्रनीमूलः कलो ढक्को ढकारकः, मा.

ण. णः पुमान् विन्दुदेवे सत्राद्भूषणे गुणवर्जिते। पानीयनिलयेऽपीति केचिद्भु विपश्चितः, मे. उमाकान्तो नरकजित् रति दंष्ट्रपदाग्रगः। निर्वाणश्चित्रगुणाकारः त्रिरेखो णः समीरितः, मा.

त. तश्चौराक्तपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित्। चपुमांस्तारणे पुण्ये कथितः शब्दवेदिभिः, मे. वामोवसलनिलय वायाढ़ो कामिका हरिः। तीव्र तरलो नीलः तकारः कीर्त्तितो बुधैः, मा.

तक्षक. तक्षकस्तु पुमान् नागराजभेदे च वर्धकौ, मे. तक्षकः फणिभेदे च वर्धकिद्रुमभेदयोः, वि. तक्षकस्त्रिषु पन्नगे। द्रुमभेदे, हे. तक्षको नागवर्धकोः, श.

तट. तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु, मे.

तड़ाग. तड़ागोऽस्त्री जलाधारविशेषे यन्त्रकूटके, मे. तड़ागस्तु जलाधारविशेषे कूटकेऽपि च, वि.

तण्डक. तण्डकः खञ्जने फेने समासप्रायवाचि च। गृहदारुतरुस्कन्धमायावङ्कलकेष्वपि, मे. तण्डकः खञ्जने फेने समासप्रायवाचि च। गृहदारौ तरुस्कन्धमायावङ्कलयोरपि, वि. तण्डकस्तु समस्तपदजातके। तरुस्कन्धे वेश्मदारुमायावङ्कलयोरपि। फेनखञ्जनयोरपि.

हे. गृहदारौ तण्डकोऽस्त्री समासप्रायवाचि च, त्रि. तण्डकः खञ्जने फेने, द्रा.

तण्डुरीण. तण्डुरीणः कीटमात्रे वर्बरे तण्डुलोदके, मे, वि. तण्डुरीणस्तु वर्बरे। तण्डुलाम्बुनि कीटे च, हे.

तण्डुल. तण्डुलः स्यात् विडङ्गे च धान्यादिनिकरे पुमान्, मे. तण्डुलाख्या विडङ्गे स्यात् धान्यादिनिकरेऽपि च, वि. तण्डुलः। विडङ्गे धान्यसारे च, हे. विडङ्गेऽपि च तण्डुलः, त्रि.

तण्डुलीय. तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः, मे, वि, हे.

तत. अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीवं वीणादिवाद्ये स्यात् पुंलिङ्गस्तु समीरणे, मे. व्याप्तविस्तृतवाद्येषु ततम्, त्रि. ततं विततवद् व्याप्ते विस्तृते वाच्यवत् मतम्। ततं वीणादिवाद्ये च पवमाने, वि. ततं वीणादिवाद्ये स्यात् ततो व्याप्तेऽनिले छयौ, हे.

ततस्. तत आदौ परिप्रश्ने कथान्तरे। आनन्तर्येत्र, वि. तत आदौ कथान्तरे। पञ्चम्यर्थे परिप्रश्ने, हे.

तत्व. तत्वं स्वरूपे परमात्मनि। स्याद् विलम्बितनृत्ते च, मे. तत्वं वाद्यभेदे स्यात् स्वरूपे परमात्मनि, वि. तत्वं परमात्मनि। वाद्यभेदे स्वरूपे च, हे. तत्वं विलम्बिते नृत्ते स्वरूपे परमात्मनि, त्रि तत्वं याथार्थ्यब्रह्मणोः, अ.

तथा.) तथाऽभ्युपगमे प्रश्नप्रतिवाक्येत्र समुच्चये। सदृशे निश्चयेऽपि स्यात्, (मे.) तथा स्यात् निश्चये प्रश्नप्रतिवाक्येत्र समुच्चये, वि, हे.

तद्दिन. तद्दिनं दिनमध्ये स्यात् तथैव प्रतिवासरे, मे. तद्दिनं दिनमध्ये स्यात् तद्दिनं प्रतिवासरे, वि तद्दिनं पुनः। दिनमध्ये प्रतिदिने, हे.

तनु. तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे, मे. तनुः काये कृशे चाल्पे विरलेऽपि च वाच्यवत्, वि. तनु र्वपुस्त्वचोः। विरले-

ऽल्पे सूक्ष्मे, हे. गुरुदेहयोरपि तनुः, श्र. विरलेऽल्पे सूक्ष्मे तनुः, त्रि.

तनूरुह. तनूरुहन्तु लोम्नि स्यात् पतत्रे च नपुंसकम्, मे. तनूरुहं गरुल्लोम्नोः, वि. तनूरुहस्तु पुत्रे गरुति लोम्नि च, हे.

तन्त्र. तन्त्रं कुटुम्बकृत्येऽत्र स्यात् सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे। श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके। इतिकर्तव्यतायाञ्च तन्त्री वीणागुणे मता। अवस्तादेहशिरयोः, मे. तन्त्रं कुटुम्बकृत्येऽत्र स्यात् कारणे च परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्तुवायेऽगदोत्तमे। तत्त्वादिसाधनोपाये श्रुतिशाखान्तरेऽपि च। इति कर्तव्यतायां च तन्त्री वीणागुणे तनौ। शिरायामवस्तायां च, वि. तन्त्रं सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः। अगदे कुटुम्बकृत्ये तन्तुवाये परिच्छदे। श्रुतिशाखान्तरे शास्त्रे करणे व्यर्थसाधके। इतिकर्तव्यतातन्त्रो-स्तन्त्री स्याद् वल्लकीगुणे। अवस्तायां च नाड्यां च शिरायां वपुषोऽपि च, हे. तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे, श्र. इतिकर्तव्यता तन्त्र-मुपायश्च हिसाधकः, त्रि. तन्त्रं शास्त्रं कुलं तन्त्रं तन्त्रं सिद्धौषधी क्रिया। तन्त्रं सुखं बलं तन्त्रं तन्त्रं पवनसाधनम्, धने. तन्त्रं तन्तुषु तन्त्रेषु सिद्धान्तपरिच्छदप्रधानेषु, ह.

तन्द्री. तन्द्री निद्राप्रमीलयोः, मे, वि, श्र. तन्द्री निद्रा प्रमीला च, हे.

तपन. तपनोऽरुष्करेऽपि स्याद् भास्करे निरयान्तरे, मे. तपनस्तरणौ तापे भल्लाते नरकान्तरे, वि. तपनो रवौ। भल्लाते नरके ग्रीष्मे, हे. तपनो नरके भानौ, त्रि.

तपस्. तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः, मे. तपश्चान्द्रायणादौ स्याद् धर्मे लोकान्तरेऽपि च। तपा माघे च शिशिरे, वि. तपः कृच्छ्रादिकर्मणि। धर्मे लोकप्रभेदे च तपाः शिशिरमाघयोः, हे. तपः कृच्छ्रादिकर्म च, श्र. अथ हिमर्तौ ना धर्मे व्रते तपः, त्रि.

तपस्य. तपस्या व्रतचर्यायां तपस्यः फाल्गुने पुमान्, मे. तपस्यः फाल्गुने पार्थे तपस्या नियमस्थितौ, हे. तपस्या व्रतचर्यायां तपस्यो नास्ति फाल्गुने, वि.

तपस्विन्. तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति । मांसिकाकटुरोहिण्योः, मे. तपस्वी तापसे चानुकम्पने च तपस्विनी । मांसिकाकटुरोहिण्यो:, वि. तपस्वी तापसे दीने, हे. तपस्विनी पुन मांसी कटुरोहिणिकाऽपि च, हे. अनुकम्प्यस्तपस्वी स्यात् तपस्वी च धृतव्रतः, धा. व्रतिशोच्यौ तपस्विनौ, त्रि. करुणाप्रतिपादने तपस्वी च, ह.

तपोधन. तपोधनस्तापसे स्यात् मुण्डीर्यां तु तपोधना, मे. तपोधनस्तापसे स्यात् मुण्डीर्यां च तपोधना, वि. तपोधना तु मुण्डीर्यां तपोधनस्तपस्विनि, हे.

तमस्. तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे, मे. तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे, वि. तमो राहौ गुणे पापे ध्वान्ते, हे. राहौ ध्वान्ते गुणे तमः, अ. तमः शोकेऽपि, त्रि.

तमाल. तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे, मे. तमालस्तिलके खड्गे तापिच्छे च त्वग्द्रुमे, वि. तमालो वरुणे पुण्ड्रेऽसौ तापिच्छे, हे. तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च, त्रि.

तमालपत्र. तमालपत्रं तापिच्छे तिलके पत्रकेऽपि च, मे, वि. तमालपत्रं तिलके तापिच्छे पत्रकेऽपि च, हे.

तमिस्र. तमिस्रं तिमिरे कोपे स्त्री तु तमस्ततौ । कृष्णपक्षनिशायां च मे. तमिस्रं तिमिरे कोपे तमिस्रा च तमस्ततौ । कृष्णपक्षनिशायां च, वि. तमिस्रं तिमिरे कोपे तमिस्रा दर्शयामिनी । तमस्ततिः, हे.

तमोघ्न. तमोघ्नः सूर्यवह्नीन्दुबुद्धशङ्करविष्णुषु, मे, वि. तमोघ्नो वह्निसूर्येन्दुबुद्धकेशवशम्भुषु, हे.

तमोनुद. तमोनुदग्नीन्द्वर्के ना, मे. तमोनुदग्नीन्द्वर्केषु, वि. तमो-

मुक्तु शशिमा तेयद्धवक्किषु, हे. चन्द्राग्न्यर्कास्तमोनुदः, श्र.

तमोऽपह. तमोऽपहः सहस्रांशुध्वगाङ्कजिनवह्निषु, मे, वि. तमोऽपहो जिने रवौ। चन्द्रेऽग्नौ, हे. अग्नीन्द्वर्कास्तमोऽपहाः, श्र.

तर, रि. तरस्तु तरणे पुंसि दशाली पेटके तरी, मे. तरि नौवि दशायां च वस्त्रादीनां च पेटके, वि. तरि दशायां वेड़ायां वस्त्रादीनां च पेटके, हे. पेटके नावि च तरी, लि.

तरणि. तरणि र्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्, मे. तरणिस्तरणे भानौ कुमार्यांपथिनौकयोः, वि. तरणिस्तरणेऽर्केंऽशौ कुमार्यांपथिनौकयोः। यष्टावब्धौ, हे. द्युमणौ तरणिः पुंसि कुमारीनौकयोः स्त्रियाम्, लि.

तरण्ड. तरण्डो वड़िशोत्तूलबद्धकाष्ठादिके प्लवे। नौकायामपि स्त्री स्यात्, मे. तरण्डो वड़िशोत्तूलावद्धवस्तुनि भेलके, वि.

तरद्. तरत् स्त्रियां प्लवेऽपि स्यात्, कारण्डे च विहङ्गमे, मे. तरत् कारण्डवे प्लवे, वि.

तरल. तरलं चञ्चले पिङ्गे भास्करेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्, मे. तरलश्च चले पिङ्गे हारमध्यमणावपि। भासुरे चाथ तरला यवागूसुरयो र्मता, वि. तरलो भास्वरे चले। हारमध्यमणौ पिङ्गे तरला मधुमक्षिका, हे. लोहे हारमणौ पुंसि यवाग्वां तरला स्त्रियाम्, लि.

तरस्. तरो बले च वेगे च, मे, वि. तरो जवे बले, हे. तरो वेगे बलेऽपि च, लि.

तरस. तरसं मांसमाख्यातं तरसं बलमुच्यते, अने.

तरस्विन्. तरस्वी शूरवेगिनोः, मे. तरस्वी वेगिशूरयोः, वि, हे. वेगिशूरौ तरस्विनौ, श्र.

तरीष. तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः, वि. तरीषः शोभनाकृतौ। भेलेऽब्धौ व्यवसाये च, हे.

नक्षस्तु जलाधारान्तरेऽपि च, वि. नक्षो जलाधारभेदे नक्षी तु वरुणस्त्रियाम्, हे.

नवीप. नवीपो ब्रह्मकन्यायां पुंसि स्वर्गे महोदधौ, मे.

ताड़. ताड़स्तु ताड़ने घोषे मुष्टिमेयतृणादिषु। ताड़ी पत्रद्रुमे च, मे. ताड़स्ताड़नघोषयोः। मुष्टिमेयतृणादौ च ताड़ी ताली दलद्रुमे, वि. ताड़ोऽस्त्री ताड़ने घोरे मुष्टिमेयतृणादिके। ताड़ी ताली दलतरौ, हे.

ताण्डव. ताण्डवोऽस्त्री तृणान्तरे। भवेदुद्धतनृतेऽपि च, मे. ताण्डवं कथितं नृत्ये तृणभेदेऽपि ताण्डवम्, वि. ताण्डवं तृणभिन्नाट्यभेदयोः, हे.

तात. तातोऽनुकम्प्ये च जनके, मे, वि. तातोऽनुकम्प्ये च पितरि, हे. तातः पित्रनुकम्प्ययोः, त्रि.

तातगु तातगुः चुल्लताते ना जनकस्य हिते त्रिषु, मे. तातगुः चुल्लताते स्याज्जनयितुर्हितेऽपि च, वि.

ताताल. तातलो रुजि पाके च लोहकूटे मनोजवे, मे.

ताप. तापः सन्तापकृच्छ्रयोः। तापी नद्यन्तरे, मे. तापोऽस्ति तापे द्वयो तापी तु सरिदन्तरे, वि. तापः सन्तापे कृच्छ्रे च तापी तु सरिदन्तरे, हे.

तामरस. अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि, मे. स्मृतं तामरसं पद्मे ताम्रकाञ्चनयोरपि, वि. तामरसन्तु पङ्कजे। ताम्रकाञ्चनयोः, हे. पद्मे स्वर्णे तामरसम्, त्रि.

तामस. तामसी निशि दुर्गायां तामसो भुजगे खले, मे, वि. निशा दुर्गा च तामसी, त्रि. तामसः सर्पखलयोस्तामसी स्यात् निशोमयोः, हे.

ताम्बूल. ताम्बूली नागवल्ल्यां स्त्री क्रमुके तु नपुंसकम्, मे. ताम्बूली नागवल्ल्यां च ताम्बूलं क्रमुकेऽपि च, वि. ताम्बूलं क्रमुकीफले। ताम्बूली नागवल्ल्यां स्यात्, हे. गुवाकेऽपि च ताम्बूलम्, त्रि.

ताम्र ताम्रं शुल्वेऽवर्णेऽपि च, मे. ताम्रं शुल्वेऽवर्णेऽप्यवत, वि.

ताम्रन्तु शुल्वे शुल्वनिभेऽपि च, हे. ताम्रं शुल्वेऽरुणे त्रिषु, त्रि.

तार. तारो वानरभिन्मुक्ताविशुद्धयोः शुद्धमौक्तिके। ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम्। स्त्री बुद्धदेवताभेदे वालिवृहस्पति-भार्ययोः। त्रिलिङ्गोऽत्युच्चशब्दे च, मे. तारो मुक्तादिसंशुद्धौ [तरणे शुद्धमौक्तिके। तारा च रजतेऽत्युच्चस्वरेऽप्यन्यवदीरितम्। कृष्णाक्षिमध्य-योस्तारा सुग्रीवगुरुयोषितोः। बुद्धदेव्यां मता तारा, वि. तारो निर्मल-मौक्तिके। मुक्ताशुद्धौ उच्चनादे नक्षत्रनेत्रमध्ययोः। तारं रूप्ये तारा बुद्धदेव्यां सुरगुरुस्त्रियाम्। सुग्रीवपत्न्याम्, हे. मुक्ताशुद्धौ च तारः स्यात् च. तारोऽत्युच्चस्वरे त्रिषु। तारिण्यादमात्रोः स्त्री न ना कृष्णाक्षिम-ध्ययोः, त्रि. तारो मुक्तागुणेऽप्युक्तः, श.

तारक. तारको दैत्यभित्कर्णधारयो र्न द्वयो र्दृशि। कनीनिकाया-मृक्षे च न पुमान् तारके त्रिषु, मे. तारकः कर्णधारे स्याद् दैत्ये च दृशि तारकम्। कनीनिकायां नक्षत्रे तारकं तारकेति च, वि. तारकः कर्णधारके। दैत्ये च तारकमुडौ नेत्रतन्मध्ययोरपि, श. दैत्ये ना कर्ण-धारे च तारकं दृशि भे न ना, त्रि.

तार्क्ष्य. तार्क्ष्यः स्यादश्वकर्णाख्यद्रुमे रथतुरङ्गयोः। तार्क्ष्यं रसा-ञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे, वि. तार्क्ष्योऽश्वसर्पयोः। गरुडाग्रजे सुपर्णे च पुंसि क्लीवं रसाञ्जने, मे. तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडा-ग्रजे। अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यन्तु रसाञ्जने, हे. तुरङ्गगरुडौ तार्क्ष्यौ, श.

ताल. तालः करतलेऽङ्गुष्ठमध्यमाभ्याञ्च सम्मिते। गीतकालक्रि-यामाने करास्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ तालो जटौ-षधौ। क्लीवन्तु हरिताले स्यात्, मे. तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते। गीतकालक्रियामाने तालः खड्गादिमुष्टिषु। द्रुमभेदे करास्फाले तालन्तु हरितालके। वाद्यभाण्डे च कांस्यस्य, वि. तालः कालक्रिया-माने हस्तमानद्रुभेदयोः। करास्फोटे करतले हरिताले त्सरावपि, हे.

तालो गीतक्रियामाने हरिताले द्रुमान्तरे, त्रि. तालः कालक्रियामानं तालः पामालमिष्यते। द्रुमभेदः स्मृतस्तालः तालः करतलध्वनिः, धने. v. ताड़.

तालपत्र. तालपत्रन्तु ताटङ्के रवडायां तालपत्रपि, मे. तालपत्रन्तु ताड़ङ्के रवडायां तालपत्रपि, वि. तालपत्रन्तु कुण्डले। सत्रात् तालपत्री रवडायाम्, हे.

तालाङ्क. तालाङ्कः करपत्रे स्यात् शाकभेदेऽचुरतायजे। महालक्षणसम्पूर्णपुरुषे पुस्तके हरे, हे.

तालीशपत्र. तालीशपत्रं भूम्यामलकीतालीशयोः स्मृतम्, मे. तालीशपत्रं तालीशे तामलक्यामपि स्मृतम्, वि. तालीशपत्रं तु तामलक्यां तालीशके क्वचित्, हे.

तावत्. तावत् मानेऽवधारणे। सम्भ्रमे च परिच्छेदे तथा कात्स्न्र्यादिकारयोः, मे. v. यावत्.

ताविष. ताविषोऽब्धिसुवर्णयोः। स्वर्गे च, हे. ताविषी चन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने, मे. ताविषः कनकेऽम्बुधौ, वि.

तिक्त. तिक्तो रसे सुगन्धे च तिक्तं पर्पटके स्मृतम्। तिक्ता तु कटुरोहिण्याम्, वि. तिक्तं सुगन्धत्रपि, त्रि. तिक्तो रससुगन्धयोः। तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम्, मे. तिक्तस्तु सुरभौ रसे। तिक्ता तु कटुरोहिण्यां तिक्तं पर्पटकौषधे, हे. v. कषाय.

तिक्तपर्वन्. तिक्तपर्वा हिलमोचीगुडूचीयष्टिषु स्त्रियाम्, मे. तिक्तपर्वा तु यष्ट्याह्वगुडूचीहिलमोचिषु, वि. तिक्तपर्वा हिलमोचीगुडूचीमधुयष्टिषु, हे, हा.

तिक्तशाक. तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे, मे. तिक्तशाकस्तु पत्रसुन्दरे। वरुणे खदिरे, हे. तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे, वि. तिक्तशाकः खदिरे वरुणद्रुमे, त्रि.

तित्तिरि तित्तिरिः पक्षिणि मुनौ, हे तित्तिरि विहगे मुनौ, वि.

तिन्तिड़ तिन्तिडी छिम्वचिञ्चयोः, मे. अथ तिन्तिडः। दैत्यभेदे तिन्तिड़ीके कालदासे महीरुहे। तिन्तिड़ी चुक्रे चिञ्चायाम्, हे तिन्तिड़ी भूरुहे कालदासे दैत्यान्तरेऽपि च। तिन्तिड़स्तिन्तिड़ी तु स्यात् चिञ्चाहचाम्लयोरपि, वि.

तिमिर. तिमिरं ध्वान्ते नेत्रामयान्तरे, मे. तिमिरं ध्वान्ते नेत्रामयेऽपि च, वि. तिमिरं तु दृष्टिरोगान्धकारयोः, हे. नाम्नेऽन्धे तिमिरं ध्वान्ते, त्रि.

तिरस्. तिरोऽन्तर्धौ तिर्यगर्थे, च, मे, वि. तिरोऽन्तर्धौ तिरश्चि च, हे.

तिर्यच् तिर्यक् तिरोऽर्थे वक्रे च विहङ्गादौ त्वनव्ययम्, मे, वि. तिर्यक् स्यात् तिरश्चीनवक्रयोः, हे

तिलक. तिलको द्रुमरोगाश्वभेदे च तिलकालके। क्लीवं सौवर्चलक्लोम्नो-र्न स्त्रियान्तु विशेषके, मे. तिलकं चित्रके भाल्ल ललामे तिलकालके। रोगविद्रुमभेदेषु क्लोम्नि सौवर्चलेऽपि च, वि. तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके। तिलकं रुचके क्लोम्नि, हे. तिलकं चित्रके क्लोम्नि ना नरो तिलकालके। तिलकोऽपि विशेषकः, त्रि. तिलको द्रुमभेदश्च तिलकं चित्रकं विदुः। तिलकं क्लोमसंज्ञा स्यात् प्रधानं तिलकं मतम्, धने. V. मोघ.

तिलपर्ण. तिलपर्णी तु सिह्लके। श्रीवासे चन्दने, हे. तैलपर्णी मलयजे श्रीवासे सिह्लकेऽपि च, मे, वि.

तिष्य. तिष्यो नक्षत्रभेदे स्यात् कलौ धात्र्याञ्च योषिति, मे, तिषत्रः पुषत्रे कलौ धात्र्यां तिष्या पुष्यवदिष्यते, वि तिष्यः पुष्यवत् कलौ भे तिष्या त्वामलकीतरौ, हे तिष्यः पुष्ये कलियुगे, अ.

तीक्ष्ण तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके। क्लीवं यथा-ग्रजे 'पुंसि तिग्मात्मत्यागिनोस्त्रिषु, मे. तीक्ष्णं सामुद्रलवणे विषलोहा-जिमुष्कके। तीक्ष्णः क्षारे च तिग्मात्मत्यागिनो वाचवद् भवेत्, वि.

तीक्ष्णं सामुद्रलवणे विषायोमरकाजिषु। आत्मत्यागिनि तिग्मे च, हे. विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु, घ. तीक्ष्णं तीव्रं समाख्यातं तीक्ष्णं लोहमुशन्ति च, धने.

तीक्ष्णगन्ध. तीक्ष्णगन्धा वचाराजिकयोः शोभाञ्जने पुमान्, मे. तीक्ष्णगन्धा वचायां च शिग्रुराजिकयोरपि, वि. तीक्ष्णगन्धा वचौषधौ। शोभाञ्जने राजिकायाम्, हे.

तीर. तीरन्तु रोधसि। पुंसि त्रपुणि, मे. तीरं तटे त्रपौ तीरम्, वि. तीरो वङ्गे तीरं पुनस्तटे, हे.

तीर्थ. तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु, मे. तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्बुस्त्रीरजःसु च विश्रुतम्, वि. तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः। ऋषिजुष्टे जले सलिलप्रपाये स्त्रीरजस्यपि। योनौ पात्रे दर्शने च, हे. निपानागमयोस्तीर्थं ऋषिजुष्टे जलेऽपि च, घ. तीर्थं तूपाययोगयोः, त्रि. योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेषु च, ह.

तीवर. तीवरो नाम्बुधौ व्याधे, मे.

तीव्र. तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः। त्रिष्वतुष्णे नितान्ते च कटौ, मे. तीव्रमतुष्णकटुकनितान्तेष्वन्यवन्मतम्। तीव्रा च कटुरोहिण्यामासुरीगण्डदूर्वयोः, वि. तीव्रं कटूष्णात्यर्थेषु तीव्रा च कटुरोहिणी। गण्डदूर्वाऽसुरी, हे. तीव्रं कटु नितान्तञ्च, त्रि.

तु. तु पादपूरणे भेदे समुच्चयेऽवधारणे। पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे, मे. तु पादपूरणे भेदे समुच्चयेऽवधारणे, वि. तु विशेषेऽवधारणे। समुच्चये पादपूर्त्तौ, हे. तु स्याद् भेदेऽवधारणे, ह.

तुङ्ग. तुङ्गो निशावर्बरयोः पुन्नागनगयोः पुमान्। उन्नते त्रिषु, मे. तुङ्गः स्यादुन्नतेऽन्यवत्। वर्बरानिशयोस्तुङ्गी, वि. तुङ्गी प्रोक्ता हरिद्रायां वर्बरायामपीष्यते। तुङ्गः पुन्नागनगयो र्बुधे स्यादुन्नतेऽ-

न्यवत्, हे. तुङ्गी पुन्नागशोच्छ्रयौ, त्रि.

तुङ्गभद्र. तुङ्गभद्रा नदीभेदे स्त्रियां पुंसि मदोत्कटे, मे. तुङ्गभद्रा नदीभेदे तुङ्गभद्रो मदोत्कटे, वि. तुङ्गभद्रो मदोत्कटे। तुङ्गभद्रा नदीभेदे, हे.

तुङ्गीश. तुङ्गीशस्तु पुमान् गौरीवल्लभे हिमदीधितौ, मे. तुङ्गीशः शङ्करे चन्द्रे वि. तुङ्गीशः शशाङ्के शशिशेखरे, हे.

तुण्डिकेरी. तुण्डिकेरी तु कार्पास्यां बिम्बिकायामपि स्त्रियाम्, मे. तुण्डीकेरी तु कार्पास्यां बिम्बिकायामपीष्यते, वि. तुण्डिकेरी तु कार्पासी बिम्बिकापि च, हे.

तुत्थ. तुत्थमञ्जनभेदे स्यात् नीलीसूक्ष्मैलयोः स्त्रियाम्, मे. तुत्थोऽग्नावञ्जने तुत्था नीलिसूक्ष्मैलयोरपि, वि. तुत्थोऽग्नौ तुत्थमञ्जने। तुत्था नीलत्यां सूक्ष्मैलायाम्, हे.

तुमुल. तुमुलः कलिद्रुमे ना क्लीवन्तु रणसङ्कुले, मे. तुमुलः कलिद्रुमे स्यात् तुमुलं रणसङ्कुले, वि. तुमुलं रणसङ्कुले। तुमुलो विभीतकद्रौ, हे.

तुम्बरी. तुम्बरी कुक्कुरस्त्रियाम्। धन्याकेऽपि, मे. तुम्बरी सरमाद्ययोः, वि. धन्याके तुम्बरी शुन्याम्, त्रि. तुम्बरी धान्यकं शुनी, हे.

तुर (ङ्ग) ग. तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः, मे. तुरगी त्वश्वगन्धायां तुरगो वाजिचित्तयोः, हे. तुरङ्गी चाश्वगन्धायां तुरङ्गश्चित्तवाजिनोः, वि.

तुरायण. तुरायणः समः यज्ञः क्रियाहीनस्तुरायणः, धने.

तुरुष्क. तुरुष्कः सिह्लके म्लेच्छजातौ देशान्तरेऽपि च, मे. तुरुष्कः सिह्लके म्लेच्छजातौ श्रीवासकेऽपि च, वि. अथ तुरुष्कस्तु देशे श्रीवाससिह्लयोः, हे. तुरुष्क सिह्लके देशे, त्रि.

तुल. तुला सादृश्यमानयोः। गृहाणां दारुबन्धाय पीठिकायामपीष्यते। राशौ पलशते भाण्डे, मे. तुला पलशते राशौ भाण्डे

साहश्यमानयोः। गृहाणां दारुबन्धाय पीठिकायामपीष्यते, वि. तुला माने पलशते साहश्ये राशिभाण्डयोः। गृहाणां दारुबन्धाय पीठ्याम्, हे. तुलासाहश्ययोस्तुला, त्रि.

तुलाकोटि. तुलाकोटि र्मानभेदेऽवुदे स्यान् नूपुरेऽपि च, हे.

तुलाधार. तुलाधारस्तुलाराशौ पुंसि वाणिजके त्रिषु, मे. तुलाधारस्तुलाराशौ भवेद् वाणिजकेऽपि च, वि. तुलाधारस्तुलागुणे। वाणिजे, हे.

तुवर. तुवरस्तु कषाये स्यात् काद्यशाढ्श्योस्तुयर्यपि, मे.

तुष. तुषा धान्यत्वगक्षद्रुोः, मे. तुषो धान्यत्वचि ख्यातो विभीतकतरावपि, वि. तुषस्तु धान्यत्वचि विभीतके, हे.

तुषार. तुषारस्तु शीकरे शीतले हिमे, मे. तुषारः शीकरे हिमे, त्रि. तुषारः पट्टपाषाणस्तुषारः शीत उच्यते, अने. तुषारो हिमदेशयोः। शीकरे हिमभेदे, हे. तुषारो हिमभेदे च शीकरेऽपि हिमेऽपि च, वि.

तूण. तूणी नील्यां निषङ्गे ना, मे. तूणी नील्यां तूणो निषङ्गके, वि. तूणी नीलीनिषङ्गयोः, हे.

तूल. तूलं तुल्ये पिचौ। ब्रह्मदारुणि, हे. ब्रह्मदारौ पिचौ तूलम्, त्रि. तूलः पिचौ भवेत् तूलं ब्रह्मदारुविहायसोः, वि. तूलं स्याद् ब्रह्मदारुणि। आकाशेऽथ पिचौ न स्त्री, मे.

तूलिका. तूलिका कूर्चिकायाञ्च शय्योपकरणेऽपि च, मे. तूलिका कथिताऽऽलेख्यकूर्चिकातूलशय्ययोः, वि. तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी, हे.

तूवर. तूवरोऽश्मश्रुपुरुषे शौढ़ाश्रृङ्गे दपेऽपि च। पुरुषव्यञ्जनतरके स्यात् कषायरसेऽपि च, मे तूवरोऽश्मश्रुपुरुषे शौढ़ाश्रृङ्गानडुह्यपि, हे. तूवरोऽश्मश्रुपुरुषे शौढ़ाश्रृङ्गदपेऽपि च, वि. तूवरो निर्विषाणो गौः निःश्मश्रुस्तूवरः पुमान्, अने.

तूस तूसं रेणौ च विख्यातः जटायां च नपुंसकम्, मे.

तृणगोधा. तृणगोधा चित्रकोले सकलासेऽपि योषिति, मे. तृण-गोधा चित्रकोले सकलासे च लघ्यते, वि. सकलासे चित्रकोले तृणगो-धाध्वनिं विदुः, हा.

तृणता. तृणता धनुषि तृणत्वे, मे. तृणताऽपि तृणत्वे स्यात् तृणता कार्मुकेऽपि च, वि. चापे तृणत्वे तृणता, ति. तृणता तृणत्वे कार्मुकेऽपि च, हे.

तृणशून्य. तृणशून्यं मल्लिकायां त्रिषु स्यात् केतकीफले, मे. तृणशून्यं मल्लिकायां केतकीमात्रिजिनः फले, हे. तृणशून्यं मल्लिकायां केत-कत्राश्च फले मतम्, वि.

तृष्. तृट् लिप्सायामुदन्यायां स्मरपुत्र्यामपि स्त्रियाम्, मे. तृट् तृष्णावत् तर्षवच्च भवेल् लिप्सापिपासयोः, हे.

तर्षा. तृषा लिप्सातर्षयोः स्त्रियाम्, मे.

तृष्णा. तृष्णा स्यात् तर्षलिप्सयोः, मे. तृष्णा लिप्सापिपासयोः, वि. तृष्णे स्पृहापिपासे द्वे, अ. पिपासालोभयोस्तृष्णा, अने. V. तृष्.

तेजन. तेजनः पुंसि वंशे स्यात् तेजनी पीलुपर्ण्यपि, मे.

तेजस्. तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः, मे. तेजो धाम्नि पराक्रमे। प्रभावरेतसोश्च, वि. तेजस्त्विट् रेतसो बले। नवनीते प्रभावेऽग्नौ, हे. तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि, अ.

तेमन. तेमनं त्वार्द्रीकरणे व्यञ्जनेऽपि च, मे. तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिकान्तरे, वि. तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिकाद्यपि, हे.

तैवन. अथ तैवनं केलिकानने। मोलायाम्, को.

तैतिल. तैतिलो गण्डके पुंसि क्लीबन्तु करणान्तरे, मे. तैतिलो गण्डके प्रोक्तस्तैतिलं करणान्तरे, वि. तैतिलं करणान्तरे। तैतिलो गण्डकपशौ, हे.

तोक्म. तोक्मं कर्णमले तोक्मो हरिते च हरिद्यवे, वि. तोक्मं कर्णमले तोक्मः सम्राट् हरितहरिद्यवे, हे. तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे, त्रि, मे.

तोत्र. तोत्रं वेणुके प्रतोदे, हे. तोत्रं तु प्रतने वेणुकेऽपि च, मे, वि. तोत्रे प्रजनवैणुके, त्रि.

तोदन. तोदनं व्यथने तोत्रे, मे, वि, हे.

तोयद. तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्, मे. तोयदं तु घृते प्रोक्तं तोयदं मुस्तकाब्दयोः, वि.

तोयधर. अथ तोयधरो मुस्तासुनिषण्णौषधीघने, मे. भवेत् तोयधरो मेघे सुनिषण्णौषधेऽपि च, वि. तोयधरो जलधरे सुनिषण्णाख्यभेषजे, हे.

तैलपर्णी. v. तिलपर्णी.

त्याग. त्यागो वर्जनदानयोः, वि, हे. त्यागो दाने च वर्जने, मे. v. विसर्ग.

त्यागिन्. त्यागी दातरि शूरे, मे. शूरे दातरि च त्यागी, त्रि.

त्रपा. त्रपा लज्जाकुलटयोः, मे, वि, हे.

त्रपु. त्रपु सीसकरङ्गयोः, हे, मे.

त्रयी त्रयी त्रिवेद्यां त्रितये. न ना, मे. त्रयी त्रिवेद्यां त्रितये पुरन्ध्र्यां सुमतावपि, वि, हे. त्रिवेद्यां त्रितये त्रयी, त्रि.

त्राण. त्राणा तु त्रायमाणायां रक्षणे रक्षिते त्रिषु, मे. त्राणा तु त्रायमाणायां रक्षिते रक्षणेऽपि च, वि. त्राणं त्राते रक्षणे च त्रायमाणौषधावपि, हे. त्राणं रक्षितरक्षयोः, त्रि.

त्रायमाण. त्रायमाणा वार्षिके स्त्री रक्ष्यमाणेऽभिधेयवत्, मे.

त्रास. त्रासो भये मणे दोषे, मे. त्रासो भीममणिदोषयोः, वि. त्रासो भये मणिदोषे, हे. मणिदोषे दरे त्रासः, त्रि. मणिदोषेऽपि त्रासः, ह. .

त्रिक. त्रिकं कूपस्य नेमौ स्यात् त्रिकं पृष्ठाधरे त्रये, मे, वि.

त्रिका कूपस्य नेमौ स्यात् त्रिकं पृष्ठाधरत्रये, हे. प्राण्यङ्गे त्रितये त्रिकम्। कूपाङ्गे स्त्री, त्रि.

त्रिकूट. त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरे, मे. त्रिकूटं सिन्धुलवणे त्रिकूटस्तु सुवेलके, हे.

त्रिगर्त. त्रिगर्तो गणितान्तरे। देशेऽपि ना घुघुरिकाकामुकाङ्गनयोः स्त्रियाम्, मे. त्रिगर्तः स्याज्जनपदे त्रिगर्तो गणितान्तरे। भवेद् घुघुरिकायान्तु त्रिगर्ता कामुकस्त्रियाम्, वि. त्रिगर्तो गणिते देशे त्रिगर्ता कामुकस्त्रियाम्। घुघुर्याम्, हे.

त्रिदिव. त्रिदिवा सरिदन्तरे। पुंसि स्वर्गे, मे. त्रिदिवस्त्रिदशावासे त्रिदिवा सरिदन्तरे, त्रि. त्रिदिवं सुखे। स्वर्गे च त्रिदिवा नद्याम्, हे.

त्रिपुट. त्रिपुटा मल्लिकायाञ्च सूक्ष्मैलात्रिवृतोः स्त्रियाम्। सतीनके च तीरे च त्रिपुटः समुदाहृतः, वि, मे. त्रिपुटौ तीरसतीनौ त्रिपुटा त्रिवृदीपभौ। सूक्ष्मैलायां मल्लिकायाम्, हे.

त्रिवर्ग. त्रिवर्गो धर्मकामार्थे त्रिफलायां कटुत्रिके। वृद्धिस्थानक्षये सत्त्वरजस्तमसि चेष्यते, मे, वि.

त्रिवर्णक. त्रिवर्णकं गोक्षुरके त्रिफलायां कटुत्रिके, मे, वि. त्रिवर्णकस्तु गोक्षुरेऽस्य त्रिवर्णकम्। व्यूषणं त्रिफला, हे.

त्रिशङ्कु. त्रिशङ्कुर्ना राजभेदे शलभे टपदंशके, मे. त्रिशङ्कुः शलभे नृपे। मार्जारे, हे. त्रिशङ्कुः शलभे राजविशेषे टपदंशके, वि.

त्रिशिख. त्रिशिखो राक्षसे क्लीबं त्रिशूले मकुटान्तरे, मे. त्रिशिखं शेखरे विद्यास्त्रिशिखो राक्षसान्तरे, वि. त्रिशिखो रक्षस्त्रिशिखं स्यात् किरीटत्रिशूलयोः, हे. त्रिशिखं स्यात् त्रिशूलेऽपि, त्रि.

त्रिस्रोतस्. त्रिस्रोता जह्नुकन्यायां स्रोतस्त्वन्तरे स्त्रियाम्, मे. त्रिस्रोता जह्नुकन्यायां त्रिस्रोताः सरिदन्तरे, वि. त्रिस्रोता जाह्नवीसिन्धुभिदोः, हे.

त्रुटि. त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः, मे. त्रुटिः संशयलेशयोः। सूक्ष्मैलायां कालमाने, हे. सप्रात् त्रुटिः संशये लेशे सूक्ष्मैलाकालमानयोः, वि. सूक्ष्मैलायां त्रुटि. स्त्री सप्रात् कालेऽल्पे संशयेऽपि सा, ध.

त्रेता. त्रेता युगेऽग्नित्रितये, मे, वि, हे. त्रेता त्वग्नित्रये युगे, अ. हवनीयादिषु त्रिषु त्रेता, ह.

त्रोटि. त्रोटिः स्त्री कटफले चञ्च्वां खगे मीनान्तरेऽपि च, मे. त्रोटिः सप्रात् कटफले चञ्च्वां खगमीनविशेषयोः, वि. त्रोटिश्चञ्च्वां खगान्तरे। मीनकटफलयोः, हे.

त्र्यङ्कट. त्र्यङ्कटं शिक्यभेदेऽपि धौताञ्जन्यास्तु न द्वयोः, मे. त्र्यङ्कटो धौताञ्जन्यां शिक्यभिदीश्वरे, हे. त्र्यङ्कटं शिक्यभेदेऽपि धौताञ्जन्यामपि स्मृतम्, वि.

त्र्यम्बक. त्र्यम्बकस्ताम्रधातुः सप्रात् त्र्यम्बकश्च महेश्वरः, अने.

त्वक्पत्र. त्वक्पत्रं तु वराङ्गके। स्त्री कारव्यां च, मे. त्वक्पत्रं तु वराङ्गके। त्वक्पत्रीति च कारव्याम्, वि.

त्वच. त्वक् स्त्री चर्मणि वल्के च गुड़त्वचि विशेषतः, मे. त्वक् चर्मवल्कयोस्त्वचे, वि. त्वक् वल्कले चर्मणि च, हे. त्वक् स्त्री चर्मगुड़त्वचोः, त्रि.

त्वष्टृ. त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि, मे. त्वष्टा शिल्पिनि देवानां तथा वर्धकिसूर्ययोः, वि. देवशिल्पिन्यपि त्वष्टा, अ.

त्विष. त्विट् कान्तौ वाचि रुचौ स्त्रियाम्, मे. त्विट् कान्तौ व्यवसाये च जिगीषायां रुचौ गिरि, वि. त्विट् शोभायां जिगीषायां व्यवसाये रुचौ गिरि, हे. त्विट् शोभाऽपि, ध.

थ. थं रक्षणे मङ्गले च साध्वसे च नपुंसकम्। शिलोच्चये पुमानेव क्वचित् भयरक्षके, मे. दण्डीशो वरदः कृष्णो वामजानुगतः स्मरः। शौरिश्चापि विशालाक्षः थकारः परिकीर्तितः, मा.

द. दः पुमानचले दत्ते स्त्रियां शोधनदानयोः। छेदोपतापरक्षासु पुमांस्तु दातरि स्मृतः, मे. सवश्रोऽत्रीशो ह्लादिनी च वामगुल्फगतस्तथा। शूली कुवेरो दाता च दकारो धादिमः स्मृतः, मा.

दंश. दंशः कीटविशेषस्य वर्मदंशनयोः पुमान्, मे. दंशः स्यात् खण्डने दोषे दंशो मर्मणि कीर्त्तितः। सर्पक्षतेऽपि सन्नाहवनमक्षिकयोरपि, वि. दंशो वर्मणि मर्मणि। दोषे वनमक्षिकायां खण्डने भुजगक्षते, हे. दंशः संहननेऽपि च। सर्पक्षते, त्रि.

दंशन. दंशनं दंशवर्मयोः, मे, वि. दंशनं वर्मदंशयोः, हे.

दंशित. दंशितमपि जातदंशेऽपि स्यात्। कवचाचिते, मे. दंशितस्तु दष्टवर्मितयोरपि, वि. दंशितो वर्मिते दष्टे, हे.

दक्ष. दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ। मुनिभेदे हरवृषे द्रुमभेदे स्त्रियां भुवि, मे. दक्षः पटौ हरवृषे ताम्रचूडे प्रजापतौ। मुनिभेदे द्रुमे वह्नौ दक्षो दक्षा भुवि स्मृता, वि. दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ। द्रुमे दक्षा तु मेदिन्याम्, हे. दक्षः प्रजापतौ ताम्रचूडे हरवृषे पटौ, त्रि मुनिकुक्कुटयो र्दक्षः, ह.

दक्षिण. दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु। अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्, मे. दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु। वाचवद्दक्षिणाऽवाची यज्ञदानप्रतिष्ठयोः, वि दक्षिणस्तु परच्छन्दानुवर्त्तिनि। दक्षोऽपसव्येत्र सरलेऽपाचीनेऽप्यथ दक्षिणा। दिक् प्रतिष्ठा यज्ञदानम्, हे. दक्षिणा दिशि दाने च दक्षिणः सरलेऽपि च, त्रि.

दग्ध. दग्धं प्लुष्टेऽन्यलिङ्गं स्यात् स्थितार्कदिशि च स्त्रियाम्, मे. दग्धं प्लुष्टेऽन्यवद्दग्धा स्थितार्कदिशि दर्शिता, वि.

दण्ड. दण्डोऽस्त्री लगुडे पुमान्। व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि। सैन्ये कालमानभेदे चण्डांशोः पारिपार्श्विके। दमे यमेऽभिमाने च, मे दण्डो यमे मानभेदे लगुडे दमसैन्ययोः। व्यूहभेदे

प्रकाण्डेऽस्त्रे कोणमत्स्यानयोरपि। अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके, वि. दण्डः सैन्ये दमे यमे। मानव्यूहग्रहभेदेष्वस्त्रेऽर्कानुचरे मथि। प्रकाण्डे लगुड़े कोणे चतुर्थोपायगर्वयोः, हे. दण्डोऽस्त्री लगुड़ेऽपि स्यात्, श. दण्डौ सैन्यार्कपार्श्वगौ, त्रि. दण्डो दमने सैन्ये, ह.

दण्डधार. दण्डधारः पुमान् स्यूनाथे प्रेताधिपेऽपि च, मे. दण्डधारो यमे भूपे, वि. दण्डधारो यमे राज्ञि, हे.

दण्डयात्रा. दण्डयात्रा दिग्विजये संयानवरयात्रयोः, मे, वि. दण्डयात्रा तु दिग्जये। संयाने वरयात्रायाम्, हे. दिग्जये वरयात्रायां दण्डयात्रां विदुर्बुधाः, ध्रा.

दण्डयाम. दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे, वि, मे. दण्डयामस्तु दिवसे कुम्भजे यमे, हे.

दण्डार. दण्डारो वहने मत्तवारणे भ्रयन्त्रके। कुम्भकारस्य चक्रे च, मे, हे. दण्डारः भ्रयन्त्रके। कुलालचक्रे वहने दण्डारो मत्तवारणे, वि. कुलालचक्रे वहने दण्डारः भ्रयन्त्रके, ध्रा.

दण्डिन्. दण्डी यमे द्वाःस्थदण्डयोः, हे.

दत्त. दत्तं विश्राणितेऽविते, वि. दत्तं विश्राणितेऽच्चिते, मे. विसृष्टे रचिते दत्तम्, त्रि.

दधि. दधि गोरसभेदे स्यात् तथा श्रीवासवासयोः, हे. दधि क्षीरोत्तरावस्थाभावे श्रीवासवासयोः, वि, मे.

दन्त. दन्तोऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्, मे. दन्तौ दशनसानुनोः। दन्त्यौषधाम्, हे. दन्तो निकुञ्जे दशने दन्तः सानुनि कथ्यते। दन्ती स्यादौषधीभेदे, वि. दशने शैलस्थङ्गे च दन्तः स्यादौषधौ स्त्रियाम्, त्रि.

दन्तधावन. दन्तधावनः खदिरे दन्तशुद्धौ नपुंसकम्, मे.

दन्तशठ. स्याद्दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके। नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्याञ्च योषिति, मे. दन्तशठः स्याज्जम्बीरे क-

पित्थे कर्मरङ्गके। नागरङ्गेऽपि चाङ्गेर्यां स्मृता दन्तशठा बुधैः, वि. दन्तशठः पुनः। जम्बीरे नागरङ्गे च कर्मरङ्गकपित्थयोः, हे. अम्ललोणयां दन्तशठा ना जम्बीरकपित्थयोः, त्रि.

दन्तुर. दन्तुरस्तून्नतरदे तथोन्नतनते त्रिषु, मे. दन्तुरं वाच्य- वद्दिग्रात् विषमोन्नतदन्तयोः, वि. दन्तुरः उन्नतदन्ते विषमे, हे.

दन्दशूक. दन्दशूकस्तु पुंलिङ्गो राक्षसे च सरीसृपे, मे. दन्द- शूकोऽहिरक्षसोः, वि. दन्दशूकस्तु फणिरक्षसोः, हे.

दम. दमस्तु दमथे दण्डे कर्दमे दमने पुमान्, मे. दमः स्यात् दमथे दण्डे कर्दमे दमनेऽपि च, वि. दमः स्यात् कर्दमे दण्डे दमने दमथेऽपि च, हे. दमो दमथदण्डयोः, त्रि.

दमथ. दमथस्तु पुमान् दण्डे दमे च परिकीर्त्तितः, मे. दम- थो दमदण्डयोः, वि. दमथो दमके दण्डे, हे.

दमन. दमनः पुष्पधीरयोः, मे. दमनः कुसुमे वीरे, वि. दमनो वीरपुष्पयोः, हे.

दम्भ. दम्भस्तु कैतवे कल्के, मे, वि. दम्भः कल्के कैतवे च, हे. दम्भः कैतवकल्कयोः, त्रि.

दया. दया हिंसानुकम्पयोः, अने.

दर. दरोऽस्त्री साध्वसे गर्त्ते कन्दरे तु दरी स्मृता। दराव्ययं मनागर्थे, मे. दरः साध्वसगर्त्तयोः। कन्दरे तु दरीमाङ्करीपदर्थे दरा- व्ययम्, वि. दरः स्यात् भयगर्त्तयोः। दरी तु कन्दरे, हे. दरोऽस्त्रि- यां भये श्वभ्रे, अ. दरं छिद्रं दरो भयम्, अने.

दरद्. दरत् स्त्रियां प्रपातेऽपि भयपर्वतयोरपि, मे. दरत् प्रपा- तात्द्रिभये, वि.

दर्दुर. दर्दुरः पर्वते पुंसि लिप्सीपङ्कभाजने, मे. दर्दुरस्तु गि- रावौषदू, भग्नवस्तुनि वाच्यवत्, वि. दर्दुरः स्यात् दैत्यङ्कम्ने गिरावपि,

दर्दुर. दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा च-ण्डिकायां स्त्राद् ग्रामजाले नपुंसकम् मे. दर्दुरस्तोयदे भेके वाद्यभा-ण्डाद्रिभेदयोः। दर्दुरा चण्डिकायाञ्च ग्रामजाले तु दर्दुरम्, वि. द-र्दुरो भेकमेघयोः। वाद्यभेदे शैलभेदे दर्दुरं ग्रामजालके। दर्दुरोमा, हे. वाद्यमेघौ च दर्दुरौ, त्रि.

दर्प. दर्पः कस्तूरिकायामप्यहङ्कारे, मे. दर्पोऽहङ्कारकस्तूर्योः, वि. दर्पो स्त्रगमदे गर्वे, हे.

दर्भ. दर्भः ग्रन्थे कुशेऽपि च, हे.

दर्वी. (र्वी) दर्वी स्त्रियां खजाकायां फणायामुरगस्य च, मे. दर्वी भवेत् खजाकायां फणायामुरगस्य च, वि. दर्वी फणातर्द्वोः, हे.

दर्श. दर्शस्तु सङ्गमे सूर्यचन्द्रयोरवलोकने। पक्षान्ते वैदिक-विधौ दर्शश्च समुदाहृतः, वि. दर्शः सूर्येन्दुसङ्गमे। पक्षान्तेऽथौ दर्शने च, हे. दर्शस्तु स्त्रादमावस्या यागभेदावलोकने, मे.

दर्शक. दर्शकः स्यात् प्रतीहारे दर्शयितृप्रवीणयोः, मे, वि. दर्शको दर्शयितरि प्रतीहारप्रवीणयोः, हे.

दर्शन. दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु। शास्त्रदर्पणयोश्च, मे, वि. दर्शनं दर्पणे धर्मोपलब्धौ बुद्धिशास्त्रयोः। स्वप्नलोचनयोश्चापि, हे. दर्शनं वर्मसुकुरचक्षुःशास्त्रोपलब्धिषु, त्रि.

दल. दलमुत्सेधखण्डयोः। शस्त्रीच्छदेऽप्यवद्रव्ये पत्रेऽपि, मे. दलं शस्त्रीच्छदोत्सेधावद्रव्येषु खण्डपर्णयोः, वि. दलं शस्त्रीच्छदेऽर्द्ध-पर्णयोः। उत्सेधावयवस्तुनि च, हे.

दलाढ़क. दलाढ़कः स्वयंजाततिले पृश्निकायाञ्च गैरिके। फेनखात-कयोर्नागकेशरे च महत्तरे, मे. दलाढ़कस्तु कुन्दे स्यात् करिकर्णशिरी-षयोः। स्वयंजाततिले फेने खातके नागकेसरे। वातत्यायां पृश्निका-याञ्च गैरिके च महत्तरे, वि. दलाढ़कोऽरण्यतिले गैरिके नागकेसरे। कुन्दे महत्तरे फेने करिकर्णशिरीषयोः।..वातत्यायां खातके पृश्न्याम्,

हे. दश्वर्गा कुन्द्रे दलाढ़क, त्रि.

दलामल. दलामलं मरुवके दमनेऽपि नपुंसकम्, मे. दलामलं दमनके तथा मरुवकेऽपि च, वि. दलामलं पुन र्दमनके मरुवकेऽपि च, हे.

दव. दवदावौ तु वनवह्नौ वनेऽप्युभौ, मे. दवो दाव इति ख्यातः वनाग्निवनयोरपि, वि. दवदावौ वनानले। वने, हे. दवदावौ वनारण्यवह्नी, अ. वनारण्यानलौ दावौ, अने. काननेऽपि दवदावौ, ह.

दशन. दशनः शिखरे दन्ते कवचे तु नपुंसकम्, मे. दशनः कवचे दन्ते दशनः शिखरेऽपि च, वि.

दशनोच्छिष्ट. दशनोच्छिष्टः पुंसि स्यात् निश्वासेऽधरचुम्बयोः, मे. अथ स्याद्दशनोच्छिष्टो निश्वासेऽधरचुम्बयोः, वि. दशनोच्छिष्टो निःश्वासे चुम्बने दन्तवाससि, हे. निश्वासो दशनोच्छिष्टः चुम्बे दन्तच्छदेऽपि च, त्रि.

दशपुर. विदु र्दशपुरं देशे मुस्तायां पत्तनेऽपि च, वि. दशपुरं पत्तने स्यात् मुस्तायां नीष्टदन्तरे, हे. अथो दशपुरं देशे पुरेऽपि स्यात् नपुंसकम्, कि.

दशमीस्थ दशमीस्थो नष्टवीर्ये स्थविरेऽप्यन्यलिङ्गकः, मे. दशमीस्थं नष्टवीजे स्थविरेऽपि प्रचक्षते, वि. दशमीस्थः स्थविरे स्यात् क्षीणरागे क्षताशने, हे. दशमीस्थौ क्षीणरागवृद्धौ, अ.

दशा. दशाऽवस्थादीपवर्त्त्यो र्वस्त्रान्ते भूम्नि योषिति, मे. दशा वर्त्तावस्थायां वस्त्रान्ते स्त्र दृशा अपि, वि. दशा वर्त्तावस्थायां दशास्तु वसनाञ्चले, हे. दशाऽवस्थानेकविधाऽपि, अ. कर्मविपाकेऽपि दशा गतिः स्मृते, ह.

दस्र. दस्रस्तु यजमाने स्याद् अपि चौरे हुताशने, मे, वि. दस्रस्तु हव्यवाहे सप्राद् यजमाने मलिम्लुचे, हे.

दस्युर. दस्युश्चौरे पुंसि रिपौ, मे. दस्युः स्तेने च शत्रौ च, वि. दस्युः प्रत्यर्थिचौरयोः, हे. दस्युः तस्करवैरिणौ, त्रि.

दस्र. दस्रः खरेऽश्विनीसुते, मे. दस्रः खरो दस्रौ रवेः सुतौ, हे. दस्रः खरे चाश्विनयोः, वि.

दहन. दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते, मे. दहनश्चित्रके वह्नौ भल्लाते दुष्टचेष्टिते, वि. दहनो दुष्टचेष्टिते। भल्लाते चित्रकेऽग्नौ च, हे.

दहर. दहरो मूषिकायाश्च स्वल्पे भ्रातरि बालके, मे, वि. दहरो मूषिकास्वल्पभ्रात्रो र्डिम्बे च, हे.

दाक्षायणी. दाक्षायणी त्वपर्णायामश्विन्यादुडुषु स्त्रियाम्, मे. दाक्षायणीत्यपर्णायां रोहिण्यां तारकासु च, वि. दाक्षायण्युमायाश्च भेषु च। रोहिण्याश्च, हे.

दाक्षिणात्य. दाक्षिणात्यो नारिकेरे त्रिषु दक्षिणदिग्भवे, मे.

दाड़िम. दाड़िमस्तु त्रिलिङ्गः स्यादेलायां करके त्रिषु, मे. दाड़िमः करकैलयोः, वि, हे.

दाढ़ा. दाढ़ा दंष्ट्राभिलाषयोः, वि, हे.

दात्यूह. दात्यूहस्तु पुमान् कालकण्ठचातकपक्षिणोः मे. दात्यूहः कालकण्ठे स्याद् दात्यूहश्चातकेऽपि च, वि. दात्यूहः कालकण्ठके। चातकेऽपि, हे. दात्यूहश्चातकेऽपि च, त्रि.

दान. दानं गजमदे त्यागे पालनच्छेदशुद्धिषु, मे, वि. दानं मतङ्गजमदे रक्षणच्छेदशुद्धिषु। वित्राणनेऽपि, हे. दानं गजमदे त्यागे खण्डने रक्षणेऽपि च, त्रि.

दान्तु. दान्तु दातरि विक्रान्ते, मे, वि.

दान्त. दान्तस्तु दमितेऽपि स्यात् तपःक्लेशसहे त्रिषु, मे.

दाय. दायः सोल्लुण्ठभाषणे। विभक्तव्यपितृद्रव्ये तथा हरण-दानयोः, मे. दायो दाने यौतुकादिधने सोल्लुण्ठभाषणे। विभक्तव्यपितृद्रव्ये दायमाहुर्मनीषिणः, वि. दायो दाने यौतुकादिधने सोल्लुण्ठ-भाषणे। विभक्तव्यपितृद्रव्ये, हे. दाने विशेषतश्चौ दायो भागार्हपितृ-रिक्थे च, त्रि.

दायाद- दायादस्तु भवेत् पुंसि सपिण्डे तनयेऽपि च, मे. दायादो ज्ञातिपुत्रयोः, वि. दायादौ सुतसपिण्डौ, हे: दायादौ सुतबान्धवौ, श्र. दायादो बान्धवः प्रोक्तो दायादस्तनयो मतः, धने. दायादस्तु कसपिण्डयोः, रु.

दारक. दारको बालकेऽपि स्याद् भेदके त्वभिधेयवत्, मे. दारको भेदकेऽपत्ये, वि. दारको भेदके पुत्रे, हे.

दारद. दारदो विषभेदे स्यात् पारदे हिङ्गुले पुमान्, मे. दारदो विषभेदे स्याद् हिङ्गुले पारदेऽपि च, वि. दारदो विषभेदे स्यात् पारदे हिङ्गुलेऽपि च, हे.

दारु. दारु स्यात् पित्तले काष्ठे देवदारौ नपुंसकम्, मे. दारु स्याद्देवदारु च, त्रि. दारु काष्ठं निगद्यते, धने.

दारुण. दारुणो रसभेदे ना त्रिषु तु स्याद् भयावहे, मे.

दार्वी (र्वी). दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ, मे. दार्वी दारुहरिद्रायां देवदारुहरिद्रयोः, वि. दार्वी स्याद्देवदारुणि। हरिद्राद्वितये चापि, हे.

दाव. v. दव.

दास. दासी वाच्याभुजिष्ययोः। दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे, मे. दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि। दासी वेश्या च भिण्ट्यां च, वि. दासो धीवरभृत्ययोः। वृषले दानपात्रे च दासी भिण्ट्यपि चेट्यपि, हे. दासो विज्ञातार्थचेट्योः। भिण्ट्यां च दासी, त्रि.

दासेर. दासेरो दासिकापत्ये त्रिषु पुंसि क्रमेलके, मे. दासेरो दासिकापुत्रे दासेरः स्यात् क्रमेलके, वि. दासेर उष्ट्रे चेटे च, हे. दासीसुतोष्ट्रौ दासेरौ, त्रि.

दासेरक. दासेरकस्तु करभे दासीपुत्रे च धीवरे, मे. दासेरः स्यात् करभे दासीपुत्रे च धीवरे, वि. उष्ट्रे दासीसुते चैव दासेरक... स्मृतः, श. ... अर-

दिगम्बर. दिगम्बरः सप्रात् क्षपणे नग्ने तमसि शङ्करे, मे, वि. दिगम्बरस्तु शङ्करे। अन्धकारे क्षपणके सप्राद्दम्बरहितेऽपि च, हे. दिगम्बरोऽन्धकारे च, त्रि.

दिग्ध. दिग्धो विषाक्तवाणे सप्रात् पुंसि लिप्तेऽन्यलिङ्गक, मे. दिग्धं विषाक्तवाणे सप्राद्, दिग्धो लिप्तार्थकेऽन्यवत्, वि. दिग्धो लिप्ते विषाक्ते पौ प्रवृद्धस्नेहयोरपि, हे. दिग्धं लिप्ते विषाक्ते च, त्रि.

दिति. दिति दैत्यजनन्याञ्च खण्डनेऽपि च योषिति, मे. दिति-दैत्यमातरि खण्डने, हे. दितिः सप्रात् खण्डनेऽपि च, वि. दितौ खण्डनदैत्याम्बे, त्रि.

दिव्. द्यौः स्वर्गे च गगने, मे. द्यौः स्वर्गनभसोः, हे.

दिव. दिवं स्वर्गेऽन्तरीक्षे च, वि. दिवं खे त्रिदिवे वने, हे. दिवं क्लीवं तयोः स्मृतम्, मे. v. दिव्.

दिवाभीत. दिवाभीतः कुम्भिले सप्राद्, उलूके कुमुदाकरे, मे, वि. दिवाभीतः काकरिपौ कुम्भिले कुमुदाकरे, हे. दिवाभीत उलूके सप्रात् कुम्भिले कुमुदाकरे, त्रि.

दिवौ (वो) कस्. दिवोकाश्च दिवौकाश्च पुंसि देवे च चातके, मे. दिवौकश्चातके सुरे, वि. दिवौकसौ। चातकस्त्रिदशश्चापि, हे. सारङ्गाश्च दिवौकसः, श.

दिव्य. दिव्यं लवङ्गे धात्र्यां स्त्री वल्लौ दिविभवे त्रिषु, मे. दिव्यं लवङ्गके दिव्यं वल्लौ दिविभवेऽन्यवत्। आमलक्यां स्मृता दिव्या, वि. दिव्यं मरुगुलवङ्गयोः। द्युभवे दिव्याऽमलक्याम्, हे.

दिव्यचक्षुस्. दिव्यचक्षुः सुगन्धस्य भेदे नाऽन्धे सुलोचने, मे. दिव्यचक्षुः सुगन्धस्य भेदेऽन्धे च सुलोचने, वि. दिव्यचक्षुस्त्वन्धे सुलोचने। सुगन्धभेदे, हे.

दिष्ट. दिष्टं दैवे पुमान् काले, मे. दिष्टं दैवे दिष्टस्त्वनेहसि, हे. दिष्टं दैवे पुं काले सप्रादिष्टः, वि. दिष्टं दैवेऽपि न द्वयोः, श.

दिष्टः कालोपदिष्टयोः, त्रि. दिष्टं दैवेऽपि कीर्तितम्, हा.

दिष्टि. दिष्टि सुंत्परिमाणयोः । स्त्रियाम्, मे. दिष्टिरानन्दे माने च, हे. दिष्टिः परीमाणमुदोः, वि. परिमाणमुदो र्दिष्टिः, त्रि.

दिष्ट्या. दिष्ट्या हर्षे मङ्गले च, मे.

दीदिवि. दीदिवि र्ना धिषणेऽन्ने तदस्त्रियाम्, मे. दीदिवि र्धिषणान्नयोः, वि.

दीन. दीना स्त्री मूषिकस्त्रियाम् । वाचप्रवद्दुर्गते भीते, मे. दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्, वि. मूषिकाऽपि भवेद् दीना, हा.

दीप. दीपः प्रदीपोत्तरीये लतायां लोचमस्तके, मे.

दीपक. दीपकं वागलङ्कारे वाचप्रवद्दीप्तिकारके, मे. दीपकं वागलङ्कारे दीपको दीप्तिकारके, वि. दीपकं स्यादलङ्कृतिः । दीपकौ दीप्तिकृद्दीपौ, हे.

दीप्त. दीप्तं निर्भासिते दग्धे ज्वलिते, मे. दीप्तं निर्भासिते दग्धे, हे. दीप्तं निर्भासिते दग्धे वदन्ति ज्वलितेऽपि च, वि.

दीप्यक. दीप्यकश्चाजमोदायां यवानीबर्हिचूडयोः, मे. दीप्यकश्चाजमोदे स्याद् यवानीबर्हिचूडयोः, वि. दीप्यकं त्वजमोदके । मयूरशिखायवान्योः, हे. यवान्यामपि दीप्यकः, अ.

दीर्घाध्वग. दीर्घाध्वगः पुमानुष्ट्रे लेख्यहारे तु भेद्यवत्, मे. दीर्घाध्वगः क्रमेलके लेखकारे तु भेद्यवत्, वि. दीर्घाध्वगः क्रमेलके । लेखहारे मङ्गनागे वात्स्यायनसुरेभयोः, हे. दीर्घाध्वगः स्यादुष्ट्रेऽपि, त्रि.

दीर्घायुस्. दीर्घायुः शाल्मलीवृक्षे वायसे जीवकद्रुमे । मार्कण्डेये च पुंसि स्यात् चिरजीविनि वाचप्रवत्, मे. दीर्घायुश्चट्यिः काकश्च शाल्मलिः, त्रि. दीर्घायुः शाल्मलौ काके मार्कण्डेयेऽतिजीविनि, त्रि. दीर्घायु र्जीवके द्विके । मार्कण्डेये शाल्मलितरौ, हे.

दीर्ण. दीर्णं विदारिते भीते, मे. दीर्णं दारितभीतयोः, वि.

दुःस्पर्श. दुःस्पर्शो धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु । खर-

स्पर्शे, मे. दुःस्पर्शाख्या खरस्पर्शे कण्टकार्य्यां च यासके, वि.

दुःस्थ. दुःस्थः स्याद्दुर्गते मूर्खे दुःखेन तिष्ठति त्रिषु, मे. दुःस्थः स्याद्दुर्गते मूर्खे, वि. दुःस्थो दुर्गतमूर्खयोः, हे.

दुकूल. दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे, मे. दुकूलं तु क्षौमे सूक्ष्मांशुकेऽपि च, वि. दुकूलं सूक्ष्मवाससि। क्षौमवस्त्रे, हे. दुकूलं सूक्ष्मवस्त्रेऽपि च, त्रि.

दुग्ध. दुग्धं प्रपूरिते क्षीरे दुग्धौ क्षीराविकौषधौ, मे. दुग्धं प्रपूरिते क्षीरे, वि. दुग्धं क्षीरे पूरिते च, हे. दुग्धं क्षीरे प्रपूरिते, त्रि.

दुग्धतालीय. दुग्धतालीयमित्येतद् दुग्धाग्रक्षीरफेनयोः, मे. दुग्धतालीयमित्येतद् दुग्धाग्रे दुग्धफेनके, वि. दुग्धतालीयं दुग्धाग्रदुग्धफेनयोः, हे.

दुन्दुभि. दुन्दुभिः पुमान्। वरुणे दैत्यभेर्य्योश्च स्त्रयक्षविन्दुत्रिकद्वये, मे. दुन्दुभि र्दितिजे भेर्य्यामक्षविन्दुत्रिकद्वये, वि. दुन्दुभिस्तु भेर्य्यां दितिसुते विषे। अक्षविन्दुत्रिकद्वन्द्वे, हे. स्याद् भेर्य्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभि. स्त्रियाम्, अ. दुन्दुभि र्दैत्यभेदेऽपि, त्रि. द्वन्द्वे दुन्दुभिरक्षे तु दुन्दुभिः स्यात्त्रयानकः, अने.

दुर् दु र्निषेधे च दुष्टे च, मे. दुः स्यात् कष्टनिषेधयोः, वि.

दुरोदर. दुरोदरं द्यूतभेदे द्यूतकृत्पणयोः पुमान्, मे. दुरोदरः पुन र्द्यूते द्यूतकारे पणेऽपि च, हे. दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्, अ. पणेऽक्षे कितवे द्यूते दुरोदर इति स्मृतः, अने.

दुर्गति. दुर्गति र्नरके नैःस्वे स्त्री, मे. दुर्गति र्नरके नैःस्वे, वि, त्रि. दुर्गतिः। नरके निःस्वतायाञ्च, हे.

दुर्ग. दुर्गोमानोल्योः स्त्री दुर्गमे त्रिषु, मे. दुर्गं भवेद्दुर्गमे तु दुर्गा स्यान्नीलिकोमयो, हे. दुर्गः स्याद् दुर्गमे दुर्गा गौरीनीलिकयोरपि, वि.

दुर्जात. दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्, मे. दुर्जातं

व्यसने प्रोक्तमसम्यग्जातवस्तुनि, वि. दुर्जातं व्यसनासम्यग्जातयोः, हे. दुर्जातं व्यसनेऽपि च, त्रि.

दुर्द्दर. दुर्द्दरः पुंसि नरकान्तरे स्यात् ऋषभौषधौ, मे. दुर्द्दरं वाचवत् दुःखधार्य्ये स्यादृषभौषधे। दुर्द्दरः, वि. दुर्द्दरस्त्वृषभौषधौ। दुःखधार्य्ये, हे.

दुर्नामन्. दुर्नामाऽख्यातिशदजदीर्घकोशिकयोरपि, वि. दुर्नाम क्लीवमर्शसि। स्याद्दीर्घकोशिकायां स्त्री, मे. दुर्नाम पुनरर्शसि। दुर्नामा दीर्घकोशी स्यात्, हे.

दुर्मुख दुर्मुखः कपिभिन्नागभिद्रो नां मुखरे त्रिषु, मे. दुर्मुखो नागराजेऽपि मुखरे वानराख्ययोः, वि. दुर्मुखो मुखरे नागराजे वाजिनि वानरे, हे. सर्पेऽपि दुर्मुखः, त्रि.

दुर्लभ. दुर्लभस्त्रिषु दुष्प्रापेऽत्र कच्छूरे, मे. दुर्लभः कच्छूरे प्रेयो दुष्प्रापे वल्लभेऽपि च, वि. दुर्लभः कच्छूरे प्रिये। दुष्प्रापे, हे. दुर्लभः कच्छूरे काम्ये, त्रि.

दुर्वर्ण. दुर्वर्णं त्रिष्वसद्वर्णे क्लीवमैलेयरूप्ययोः, मे. दुर्वर्णश्च कुवर्णे स्याद् वालुके रजतेऽपि च, वि. अथ दुर्वर्णं कलधौतकुवर्णयोः, हे. दुर्वर्णं रजतेऽपि स्यात्, त्रि.

दुर्विध. दुर्विधो वाच्यलिङ्गः स्याद् दुर्गतेऽपि खलेऽपि च, मे. दुर्विधो दुर्गते खले, वि. दुर्विधो दुर्जने निःस्वे, हे. दुर्विधो खलदुर्गतौ, त्रि.

दुलि. दुलिः स्त्रियां कमठ्यां ना मुनौ, मे. v. डुलि.

दुष्कक्ष. दुष्कक्षो गन्धकुष्ठ्यां स्यात् विहाराद्यवकाशके, मे, वि.

दुठ्. दुठं स्याद् दुर्बलेऽधमे, वि.

दूत्य. दूत्यं दूतस्वभावे च भावे कर्मण्यपि स्मृतम्, मे.

दूषिका. दूषिका तूलिकायाञ्च मले स्याल्लोचनस्य च, मे, दूषिका तूलिका स्मृता। नयनस्य मलेऽपि स्यात्, हे

दूष्य दूष्यं त्रिषु दूषणीये क्लीवं वस्त्रे च तम्बृहे, मे. दूष्यन्तु

दूष्यणीये सत्राद्, दूष्यं वस्त्रे च तन्नृ,हे, वि. दूष्यं वाससि तन्नृ,हे। दूष्य-णीये, हे. निन्द्ये वस्त्रगृहे दूष्यम्, त्रि.

दृम्भू. दृम्भूः स्त्री सर्पवज्रयोः, मे. दृम्भूः पन्नगवज्रयोः, वि. दृम्भूः पवौ भास्करे च, हे.

दृढ़. दृढं स्थूले नितान्ते च प्रगाढ़े बलवत्यपि, मे. दृढ़ः स्थूले भृशे शक्ते प्रगाढ़ेऽपि दृढ़ो मतः, वि. दृढ़ः शक्ते भृशे स्थूले, हे. शक्त-स्थूलौ त्रिषु दृढ़ौ, अ.

दृति. दृतिश्चर्मपुटे मत्स्ये ना, मे. दृतिश्चर्मपुटे भषे, वि.

दृश्. दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीचके, मे. दृग् दर्शने लोचने च दृग् बुद्धौ वीचकेऽपि च, वि. दृग् द्रष्टरि दर्शनेऽक्ष्णि, हे. दृग् ज्ञाने ज्ञातरि त्रिषु, अ. ज्ञाने च लोचने दर्शने च दृक्, त्रि.

दृशान. दृशानं ज्योतिषि प्रोक्तं दृशानश्च विरोचने, वि. दृशानं ज्योतिषि क्लीवं पुंलिङ्गः सत्राडिरोचने, मे.

दृषद्. दृषद् निष्पेषणशिलापट्टमसारयोरपि, मे. दृषद् पेषण-पट्टे सत्राद् दृषद् पाषाणमात्रके, वि. दृषद् पाषाणमात्रके। निष्पेषणार्थ-पट्टे सत्रात्, हे.

दृषद्वती. दृषद्वती नदीभेदे कात्यायन्यामपि स्त्रियाम्, मे.

दृष्टान्त. दृष्टान्त उदाहृतौ। शास्त्रे च मरणे, मे. दृष्टान्तः स्यादुदाहृतौ। शास्त्रे, हे. दृष्टान्तावुभौ शास्त्रनिदर्शने, अ.

दृष्टि. दृष्टि. स्त्रियां बुद्धौ लोचने दर्शनेऽपि च, मे. दृष्टि र्ज्ञानेऽक्ष्णि दर्शने, हे. दृष्टि र्धीर्दर्शनाक्षिषु, वि. दृष्टिरक्ष्णि तथा मतौ, अने.

देव. देवो मेघे सुरे राज्ञि स्यात्पुंसकमिन्द्रिये। देवी कृताभि-षेकायां तेजनीपृक्कयोरपि, मे. देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये। देवी भट्टारिकायाञ्च तेजनीस्पृक्कयोरपि, वि. देवं हृषीके देवस्तु नृपतौ तोयदे सुरे। देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि, हे. मेघे राज्ञि सुरे देवः, त्रि. पर्जन्ये राज्ञि गीर्वाणे व्यवहर्तरि ,भर्तरि। मूर्खे बले

जिगीषौ च देवोक्ति र्नरि कुठिनि, अने,

देवताड़. देवताड़ः शैंहिकेये जीमूते च हुताशने, मे. देवताड़स्तु घोषके। सैंहिकेयग्रहे चापि देवताड़ो हुताशने, वि. देवताड़ो घोषकेऽग्नौ राहौ, हे.

देवन. देवनं व्यवहारे स्यात् जिगीषाक्रीड़योरपि। देवनोऽक्षेषु पुंसि स्यात्, मे. देवनं व्यवहारे स्यात् जिगीषाक्रीड़योरपि। अक्षेषु देवनः प्रोक्त, वि. देवनोऽक्षेऽथ देवनम्। व्यवहारे जिगीषायां क्रीड़ायाम्, हे. क्रीड़ादावपि देवनम्, अ. क्रीड़ादौ देवनं नाऽक्षे, त्रि.

देवमणि. अथ देवमणि र्भर्गेऽश्वावर्त्ते कौस्तुभेऽपि च, मे. देवमणिः शिवेऽश्वस्य कण्ठावर्त्ते च कौस्तुभे, वि. देवमणि विष्णुवक्षोमणौ हरे। अश्वस्य कण्ठावर्त्ते च, हे.

देवयु. देवयु र्वाच्यलिङ्गस्तु धार्मिके लोकयात्रिके, मे. देवयुर्धार्मिके ख्यातो देवयु र्लोकयात्रिके, वि.

देवहच. देवहचः सप्तपर्णे मन्दारादिषु गुग्गुलौ, मे, वि. देवहचो मन्दारादौ गुग्गुलौ विषमच्छदे, हे.

देवसहा. भवेद् देवसहाभिख्या क्षुते दण्डोत्पलौषधे, वि.

देवसेना. देवसेना तु वज्रिणः। सुतायामपि सेनायां देवतानाञ्च योषिति, मे. देवसेनेन्द्रवाहिन्यां सेनायाञ्च दिवौकसाम्, वि. देवसेनेन्द्रकन्यायां सैन्ये त्रिविपदामपि, हे.

देष्ण,. देष्ण, दातरि दुर्गमे, मे, वि, हे.

देहयात्रा. देहयात्रा यमपुरीगमने भोजनेऽपि च, मे. हे. देहयात्रा भोजने स्यात् कृतान्तागमनेऽपि च, वि. देहयात्राऽशने मृतौ, त्रि.

दैत्य. दैत्योऽसुरे सुरायान्तु दैत्या चण्डौषधावपि, मे, वि. दैत्योऽसुरे मुरौषधौ, हे.

दैत्यारि. दैत्यारिः पुंसि सामान्यदेवे च गरुड़ध्वजे, मे. दैत्यारिस्त्रिदशे विष्णौ, वि.

दैवज्ञ. दैवज्ञो गणके पुमान्। दैवज्ञे गणिकायां स्त्री, मे. दैवज्ञो गणकेऽपि च, वि.

दोग्धृ. दोग्धाऽर्थोपजीविकवौ वत्सगोपालयोः पुमान्, मे. दोग्धा गोपालके वत्से कवौ अर्थोपजीविनि, वि. दोग्धा गोपालवत्सयोः। अर्थोपजीविनि कवौ, हे. दोग्धा गोपे कवौ वत्से, त्रि.

दोला. दोला नील्यां यानान्तरेऽपि च, मे. दोला यानान्तरे नील्याम्, वि.

दोष(षा). दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च, मे, वि. दोषा रात्रौ च सन्मुखे, मे. दोषा रात्रिमुखे रात्रौ कलाऽनव्ययमव्ययौ, वि. दोषा निशि निशामुखे, हे.

दोषज्ञ. दोषज्ञः प्राज्ञवैद्ययोः, हे.

दोहदलक्षण. दोहदलक्षणमुक्तं वयःसन्धौ च गर्भे च, मे. दोहद-लक्षणं गर्भे सञ्जात् सन्धौ यौवनस्य च, हे. दोहदलक्षणं गर्भे वयः-सङ्गे च दृश्यते, त्रि.

दौर्वीण. दौर्वीणं खटपर्णे स्याद् दूर्वायाः सुरसेऽपि च, मे, वि. दौर्वीणं खटपर्णं स्याद्धरितालीरसेऽपि च, हे.

द्युत. द्युत क्षीवमक्षि गमने च। ना ज्वलने, मे. द्युतरग्नौ दि-वसेऽपि स्यात्, वि. द्युत दिने वह्नौ, हे.

द्युति. द्युतिः स्त्री रश्मिशोभयोः, मे. द्युतिश्च शोभादीधि-त्योः, हे.

द्युम्न. द्युम्नं वित्ते बलेऽपि च, मे. द्युम्नं वित्ते पराक्रमे, वि. द्युम्नं द्रविणवद्धनौजसोः, हे. द्युम्नं बले धने, त्रि.

द्युवन्. द्युवा त्वभिनये भानौ, वि.

द्यो द्यौस्त्रिदशालयत्रिदशवर्त्मनो र्योषिति, मे. द्यौः स्वर्ग-सुरवर्त्मनोः, वि. द्यौश्च स्वर्गे विहायसि, हे.

द्रव. द्रवः मद्रावनर्मणोः। .. रसेऽपि, मे. द्रवः मद्रावरसयो-

र्गतौ नर्मणि विद्रवे, वि द्रवो विद्रवनर्मणोः। प्रद्रावे रसगतप्रोत्व, हे.

द्रवन्ती. स्रवन्ती च द्रवन्त्यपि। नद्यामोषधिभेदे च, हे. V. स्रवन्ती.

द्रविण द्रविणं न द्वयो र्वित्ते काञ्चने च पराक्रमे, मे. द्रविणं काञ्चने वित्ते द्रविणञ्च पराक्रमे, वि. द्रविणन्तु वलं धनम्, श. V. द्रविण.

द्रव्य द्रव्यं सग्रात् पित्तले वित्ते पृथ्व्यादौ च विलेपने। क्लीवे च भेषजे भवेन्न द्रुविकारे च वाच्यवत्, मे. द्रव्यं स्याद् द्रविणे भवेन्न पृथिव्यादौ च पित्तले। भेषजे चापि विनये जतुद्रुमविकारयोः, वि. द्रव्यं भवेन्न धने पृथ्व्यादौ जतुद्रुमविकारयोः। विनये भेषजे वीर्यग्रां, हे. द्रव्यं भवेन्न गुणाश्रये, श. भेषजे द्रुविकारे च द्रव्यं भवेन्न च पित्तले, त्रि.

द्रावक. द्रावको ग्रावभेदे सग्राद् विदग्धे चोपकेऽपि च, मे. द्रावकस्तु शिलाभेदे सग्राद् चोपकविदग्धयोः, हे. द्रावकस्तु शिलाभेदे विदग्धे चोपकेऽपि च, वि.

द्राविड. द्राविडो देशभिव्जाते वङ्कग्रामिद्वेधसुख्ययोः, मे. द्राविडः सग्राज्जानपदे वेधसुख्यकसङ्क्रयोः, वि.

द्रुघण द्रुघणो मुद्गरेऽपि सग्राद् द्रुहिणे च परश्वधे, मे, वि. द्रुघणः परशु वेधसोः। मुद्गरेऽपि, हे.

द्रुण. द्रुणं चापेऽलिनि द्रुणः। द्रुणवल्ल द्रोणीकच्छप्योः, मे. द्रुणं चापे च खड्गे च द्रुणो वृश्चिकभृङ्गयो। द्रुणो कच्छपिकायाञ्च जलद्रोण्यामुदाहृता, वि. द्रुणः सग्राद् वृश्चिके भृङ्गे द्रुणं चापकृपाणयोः। द्रुणी कूर्म्यां जलद्रोण्याम्, हे. द्रुणोऽलिः कच्छपी द्रुणी, त्रि.

द्रुत. द्रुतं त्रिषु। शीघ्रे विलीने विद्राणे, मे. द्रुतं शीघ्रविलीनयोः, हे, त्रि द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवत्, वि.

द्रुम. द्रुमो महीरुहे पारिजाते किम्पुरुषेश्वरे, मे. द्रुमस्तरौ पारिजाते द्रुमः किम्पुरुषेश्वरे, वि. द्रुमस्तु पादपे पारिजाते किम्पुरुषेश्वरे, हे. द्रुमो यक्षेश्वरे वृक्षे, त्रि द्रुमो वृक्षे च शैलेय. श्रने.

द्रू. द्रूः स्वर्णे कामरूपिणि, वि द्रू कामरूपिणि स्वर्णे, हे.

द्रोण. द्रोणोऽस्त्रियामाढ़के स्यादाढ़कानां चतुष्टये। पुमान् छपीपतौ दग्धकाके स्त्री नौरुदन्तरे। तथा काष्ठाम्बुवाहिन्यां गवाद-न्यामपीष्यते, मे. द्रोण छपीपतौ कृष्णकाके स्यादाढ़केऽपि च। आढ़-कानां चतुष्के च द्रोणी स्यान्नौरुदन्तरे। द्रोणी काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ, वि. द्रोणः पार्थगुरौ काके माने द्रोणी तु नौदति। नौभेदे शैलभेदे च, हे. अथ द्रोण. काकेऽपि, अ. काठा गादेऽम्बुवाहिन्यां शैलसन्धौ च योषिति। द्रोणी न स्त्री मानभेदे द्रोणः काकः छपीपतौ, त्रि. द्रोणः सप्रात् कौरवाचार्ये द्रोणः काक इतीरितः। द्रोणो गिरिविशेषश्च द्रोणः स्याच्चतुराढ़क, अने.

द्रोहाट. द्रोहाटः कथितो गाथाप्रभेदे स्वगलुब्धके। वैड़ालव्रतिके च, मे, वि. द्रोहाटो स्वगलुब्धके। चतुष्पदीप्रभेदे च विड़ालव्रतिकेऽपि च, हे.

द्वन्द्व द्वन्द्वं रहस्येऽत्र कलहे तथा मिथुनयुग्मयोः, मे. द्वन्द्वो रहस्ये कलहे द्वन्द्वं मिथुनयुग्मयोः, वि. द्वन्द्वः चे द्वन्द्वमाहवे। रहस्येऽत्र मिथुने युग्मे, हे. द्वन्द्वं कलहयुग्मयोः, अ

द्वापर. द्वापरः संशये युगे, मे, वि, हे. द्वापरौ युगसंशयौ, श सन्देहेऽपि द्वापरमाहुः, ध.

द्वार द्वारं निर्गमनेऽपि स्याद् अभ्युपाये, मे. द्वारं पुन निर्ग-मनेऽभ्युपाये, वि द्वारं निर्गमेऽभ्युपाये, हे. उपाये निर्गमे द्वारम्, त्रि.

द्विक द्विकः स्यात् काककोकयोः, मे, हे. द्विकः काके च कोके च, वि द्विकौ काकचक्रवाकौ, त्रि

द्विज द्विजः सप्राद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना। द्विजा भार्ग्यां रेणौ च, मे द्विजा विप्रेऽण्डजे दन्ते भाण्डीरेणुकयो द्विजा, वि द्विजो विप्रक्षत्रियौ वैश्येऽत्र दन्ते विहङ्गमे। द्विजा भार्गीरेणुकयोः, हे दन्ताविप्राण्डजा द्विजाः, अ दन्तविप्रौ तथा द्विज, अने.

द्विजन्मन्. द्विजन्मा दशने विप्रे, मे, वि. द्विजन्मानौ रदविप्रौ, हे. द्विजन्मा दन्तविप्रयोः, त्रि.

द्विजाति. द्विजाति र्विप्राण्डजयोश्च पुंलिङ्गः, मे. द्विजातिरण्डजे विप्रे, वि. द्विजाति र्ब्राह्मणेऽण्डजे, हे.

द्विजराज. द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति, मे. द्विजराजः शशधरे सुपर्णेऽनन्तभोगिनि, वि. द्विजराजस्तु शशाङ्के गरुडेऽपि च, हे. हंसेऽग्नौ गरुडे चन्द्रे द्विजराज इति ध्वनिः, धने.

द्विजिह्व. (ह्व) द्विजिह्वस्तु खले सर्पे, मे. द्विजिह्वो भुजगे खले, वि. द्विजिह्वः खलसर्पयोः, हे. द्विजिह्वौ सर्पसूचकौ, अ. द्विजिह्वः सूचको ज्ञेयो द्विजिह्वस्तु भुजङ्गमः, धने. दृष्टिविषे सूचके च द्विजिह्वः परिकीर्त्तितः, हा.

द्वितीय. द्वितीया तिथिभित्पत्न्योः पूरणे द्वयके त्रिषु, मे. द्वितीया तिथिभित्पत्न्योः पूरणत्रामपि च द्वयोः, वि. द्वितीया तिथिगेहिन्यो-र्द्वितीयः पूरणे द्वये, हे. द्वितीया तिथिभित्पत्न्योः, त्रि. सपत्न्यामपि द्वितीया, ह.

द्वीपवत्. द्वीपवान् सिन्धुनद्यो र्द्वीपवत्यापगाभुवोः, मे, वि.

द्वैमातुर. द्वैमातुरो जरासन्धवारणाननयोः पुमान्, मे. द्वैमातुरो जरासन्धवारणाननयो र्मतः, वि.

ध. धो ना धर्मे कुवेरे च क्लीवं तु वसुनि स्मृतम्। धो धा च ब्रह्मणि ख्यातो धा तु स्याद् धारकेऽपि च, मे. मीनेशः सात्वतः प्रीति र्वामपादाङ्गुलीगतः। धनेशो धरणीशश्च धकारो दान्तिमः स्मृतः, मा.

धट. धटो दिव्यतुलायां स्याद् धटी चीरे च वाससः, मे. धटी खण्डे च वाससः। परीक्षार्थतुलायां च धटः सूरिभिरिष्यते, वि.

धन. धनं तु गोधने वित्ते, मे. धनं गोधनवित्तयोः, वि. धनं वित्ते गोधने च स्यात्, हे.

धनञ्जय. धनञ्जयोऽर्ज्जुने वह्निनागदिग्देहमारुते, मे. धनञ्जयोऽर्ज्जुने वह्नौ ककुभे देहमारुते। नागान्तरे च, वि. धनञ्जयो नागभेदे ककुभे देहमारुते। पार्थेऽग्नौ, हे. पार्थेऽग्नौ च धनञ्जयः, त्रि.

धनद. धनदस्तु कुवेरे स्यात् पुंलिङ्गो दातरि त्रिषु, मे. धनदो दातरि श्रीदे, वि धनदो दातृयक्षयोः, हे.

धनिक धनिका सा,,नार्यां ना धन्याके त्रिषु साधुधनिनोश्च, मे धनिकः साधुधन्याकधवेषु धनिका स्त्रियाम्, वि. धनिको धान्यके धवे। धनाढ्येऽत्र धनिका वध्वाम्, हे.

धनु धनु' पुमान् पियालद्रौ राशिभेदे शरासने, मे. धनुसंज्ञा पियालद्रौ राशिभेदे शरासने, वि. धनुशब्दः पियालद्रौ राशिभेदे धनुष्यपि, हे.

धनुस्. धनुः पियाले ना न स्त्री राशिभेदे शरासने। धनुर्धरे त्रिषु, मे. धनुः पियालद्रुमराशिभेदयोः शरासने चापि धनुर्धनुर्धरे, वि. धनुः शरासने राशौ पियालद्रौ धनुर्धरे, हे.

धन्य. धन्या धात्र्यामलक्योः स्याद् धन्यं पुण्यवति त्रिषु, मे. धन्यो धनवति स्मृत'। धन्या धान्यामलक्योश्च, वि. धन्यः पुण्ययुते धन्यामलक्यासुपमातरि, हे.

धन्वन् धन्वा तु मरुदेशे ना क्लीवं चापे स्थलेऽपि च, मे. धन्वा जाङ्गलदेशे स्याद् धन्व चापे स्थलेऽपि च, वि. धन्व स्थलचापयोः, हे. धन्वा मरौ धन्व चापे, त्रि

धन्विन् धन्वी धनुर्धरेऽपि स्यादर्ज्जुने ककुभद्रुमे, मे. धन्वी धनुर्धरे पार्थे विदग्धे ककुभद्रुमे, वि. धन्वी पार्थे च्छेके ककुभचापिनोः, हे

धमन धमनो नाऽनले भस्त्राध्मापकक्रूरयोस्त्रिषु। धमनी तु शिराहट्टविलासिन्योश्च योषिति, मे. धमनोऽप्यनले भस्त्राध्मापकक्रूरयोः स्मृता। धमनी तु हरिद्रायां कन्धराशिरयोरपि, वि धमनोऽनले। क्रूरे भस्त्राध्मापके च धमनी कन्धरा शिरा। हरिद्रा च, हे.

धर. धरो गिरौ। कार्पासतूलके कूर्मराजे वसुन्तरेऽपि च। धरा विश्वम्भरायाञ्च स्त्री गर्भाशयमेदसोः, मे. धरस्तु शैले कार्पासतूलके कमठाधिपे। धरा मेदसि भूम्यां च स्त्रीणां गर्भाशयेऽपि च, वि. धरः कूर्माधिपे गिरौ। कार्पासतूलेऽथ धरा मेदोभूमिजरायुषु, हे. धरा पृथ्वी धरा धारा धरः शैलो धरा वृतिः, अने. (धरो धूर्ते च पर्वते, अने.) धरा पृथ्वी धरो गिरिः, त्रि.

धरण. धरणं मानभेदेऽपि धारणे धरणी भुवि, मे, वि. धरणं धारणे मानविशेषे धरणी भुवि, हे.

धराधर. धराधरो हरौ शैले, मे. धराधरः स्मार्ङ्गति चक्रपाणौ, वि धराधरः। कृष्णोऽद्रौ च, हे. हरिशैलौ धराधरौ, त्रि.

धरुण. धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि, मे, वि.

धर्म. धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ। अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे, मे. धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ। उपमायामहिंसायां चापे चोपनिषद्यपि, वि. धर्मो यमोपमापुण्य-स्वभावाचारधन्वसु। सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि। धर्मं दानादिके, हे. धर्मोऽहिंसोपमायोगोपनिषत्सु धनुष्यपि, त्रि.

धर्मण. धर्मणस्तु पुमान् वृक्षभेदसर्पभेदयोः, मे. धर्मणोऽहिद्रु-भेदयोः, वि.

धर्मराज. धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्, मे. धर्मराजो यमे बुद्धे धर्मराजो युधिष्ठिरे, वि. धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे, हे. धर्मराजौ जिनयमौ, अ.

धर्षण. धर्षणं स्यात् परिभवे रतेऽसत्यां तु धर्षणी, मे, वि. धर्षणं रतेऽभिभवे धर्षणी त्वभिसारिका, हे. असतो स्याद् धर्षणी च धर्षणा निकृतौ रते, त्रि.

धव. धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेऽपि च, मे. धवः पत्यौ नरे धूर्ते वृक्षभेदेऽपि कीर्तितः, वि. धवो धूर्ते नरे पत्यौ द्रुभेदे, हे. पति-

शाखिनरा धवाः, श. धवो धूर्तेऽपि, त्रि. धवः पति र्धवो मर्त्यो द्रुमजाति-र्धवो मतः, शने.

धवल. धवला गवि। स्यश्रेष्ठे पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे, मे. धवलः सुन्दरे सिते। महोक्षे चाय धवली सौरभेय्या-सुदीरिता, वि. धवलो महोक्षे सुन्दरे सिते। धवली गौः, हे. धवला गवि ना श्रेष्ठे शुक्लसुन्दरयोस्त्रिषु, त्रि.

धातु. धातु र्नेन्द्रियेषु च। शब्दयोनिमहाभूततद्गुणेषु रसा-दिषु। मनःशिलादौ श्लेष्मादौ विशेषाद् गैरिकेऽस्थ्नि च, मे. धातु-रसादौ श्लेष्मादौ भ्वादिग्रावविकारयोः। महाभूतेषु लोकेषु शब्दादावि-न्द्रियेऽस्थनि, हे. धातुः स्यादश्मविकृतौ विषयेष्विन्द्रियेषु च। भुवादि-रसरक्तादिश्लेष्मादिवसुधादिषु। वर्त्तते धातुशब्दोऽयं विशेषादस्ति गैरि-के, वि. श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृ-तिः शब्दयोनिश्च धातवः, श. वातादिमस्रति धातु र्धातु र्रसादिकः। क्रियाभावः स्मृतो धातु र्धातुः शैलोपलोद्भवः, शने. पृथिव्यादिषु भूतेषु शरीरेषु रसादिषु। लोहेषु च स्मृतो धातुः स्वभावे गैरिकादि-षु, रु. राशौ च धातुः, त्रि.

धातृ. धाता हिरण्यगर्भे ना पालके त्रिषु, मे. धात्री जनन्या-मलकीवसुमत्युपमातृषु, मे. धाता हिरण्यगर्भ स्यात् पालके त्वभि-धेयवत्, वि. धात्री जनन्यामलकीवसुमत्युपमातृषु, वि. धात्री भुव्युप-मातरि। आमलक्यां जनन्यां च, हे. धाता वेधस पालके, हे. धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि, श. धात्री भुव्यामलक्यां च, त्रि. धातकी प्रोच्यते धात्री धात्री चामलकी तथा। धात्री वसुन्धरा ज्ञेया धात्री स्यात् स्तनदायिनी, शने.

धाना. धाना भ्रष्टयवेऽपि च। धान्याकेऽभिनवोद्भिन्ने, मे. धाना भ्रष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि, वि. धाना भ्रष्टयवेऽङ्कुरे धान्याके चूर्ण-

धान्य  धान्यं व्रीहिषु धान्याके, मे, वि  धान्यं तु व्रीहौ धान्याके, हे

धामन्  धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः, मे, वि धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयो., हे  गृहदेहत्विट्प्रभावा धामानि, अ  प्रभावे तेजसि स्थाने धामशब्दो निगद्यते, अने

धामार्गव  धामार्गवस्तु पुंसि स्याद् अपामार्गे च घोषके, मे. धामार्गवस्त्वपामार्गे देवदालग्रामपि स्मृत, वि  धामार्गवस्तु घोषके। अपामार्गेऽपि, हे

धार  धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके। घटादिच्छिद्रसन्तत्योः प्रपाते स्याद् द्रवस्य च। खड्गादेर्निशितमुखे धारो ग्रावान्तरेऽप्युणे, मे  धारा सैन्याग्रमस्कन्धसन्तत्योः पतनान्तरे। द्रवद्रव्यप्रपातेऽपि तुरङ्गगतिपञ्चके। खड्गादीनां च निशितमुखे धाराऽपि कीर्त्यते। धारः क्वचिद्घनासारवर्षणे स्याहणेऽपि च, वि  धारो जलधरासारवर्षणे स्याहणेऽपि च। धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ। जलादिपाते सन्तत्याम्, हे  धारा हरिद्राखगतिनिशाब्दस्तिराजिन, लि.

धारण  धारणी नाडिकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि। धारणाङ्गे च योगस्य न पुंसि स्याद् विधारणे, मे  धारणी नाडिकायां स्याद् बुद्धोक्तमन्त्रभिद्यपि, वि  बुद्धमन्त्रे नाडिकायां धारणी, लि

धाराङ्कुर  धाराङ्कुरस्तु नासीरे शीकरेऽपि घनोपले, मे, वि. धाराङ्कुरः शीकरे स्यान् नासीरे जलदोपले, हे  धाराङ्कुरो वायुफले नासीरे शीकरेऽपि च, हा

धाराङ्ग  धाराङ्गोऽसौ च तीर्थे च, मे. धाराङ्गः खड्गतीर्थयोः, वि  धाराङ्गस्तीर्थखड्गयो, हे

धाराट  धाराटश्चातकाश्वगोः, मे, वि  धाराटश्चातकेऽश्वे च, हे  धाराटौ चातकहयौ, लि  धाराटश्चातके वाहे, हा

धाराधर  धाराधरोऽसिमेघयोः, मे  धाराधरस्तोयधरे कृपाणे, वि .धाराधरस्तु पयोदकरवालयोः, हे  धाराधरौ खड्गमेघौ, लि.

धार्तराष्ट्र. धार्तराष्ट्रोऽसितास्राङ्घ्रिहंसे कौरवसर्पयोः, मे. धार्तराष्ट्रोऽसितास्राङ्घ्रिहंसकौरवभोगिषु, वि. धार्तराष्ट्रः कौरवेऽहौ कृष्णास्राङ्घ्रसितच्छदे, हे.

धावन. धावनं गमने शुद्धौ पृश्निपर्ण्यां तु योषिति, मे. धावनं प्रगमे शुद्धौ पृश्निपर्ण्यां तु धावनी, वि. धावनं तु गतौ शौचे, हे. धावनं गतिशौचयोः, वि. धावनं शोधनं प्रोक्तं धावनं शीघ्रवर्तनम्, धने.

धिक्. धिग् भर्त्सने च निन्दायाम्, मे. धिग् भर्त्सननिन्दयोः, वि, हे. धिङ् निर्भर्त्सननिन्दयोः, श.

धिषण. धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति, मे. धिषणस्त्रिदशाचार्ये धिषणा धियि सम्मता, वि. धिषणस्त्रिदशाचार्यो धिषणा तु मनीषिका, हे.

धिष्ण्य. धिष्ण्यं स्थानाग्निसद्मसु। शक्रावहेऽपि, मे. धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्रौ च पावके, वि. धिष्ण्यं स्थानोडुवेश्मसु। बले धिष्ण्योऽग्नौ, हे. धिष्ण्यं स्थाने गृहे भेऽग्नौ, श. तारास्वग्नौ गृहे स्थाने धिष्ण्यमाहुर्मनीषिणः, धने.

धी. धी र्ज्ञाने ध्यानभेदेऽपि, मे.

धीदा. धीदा पुत्रीमनीषयोः, मे धीदा कन्यामनीषयोः, वि, हे.

धीमत्. धीमान् पण्डिते च बृहस्पतौ, मे. धीमान् वाचस्पतौ धीरे, वि.

धीर. धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे। स्त्रियां श्रवणतुल्यायाम्, मे. धीरो ज्ञे धैर्यसंयुते। स्वैरे धीरं तु कुङ्कुमे, हे. धीरः पण्डितमन्दयोः। धीरं च कुङ्कुमम्, वि. धीरौ सात्विकधीमन्तौ, धने.

धीवर. धीवरो लुब्धके बुधे, वि.

धुत. त्यक्तो धुतम्। त्यक्ते विधूते, मे. धुतं त्यक्ते विधूते च, वि. धुतं तर्क्ते कम्पिते च, हे.

धुन्धुमार. धुन्धुमारः शक्रगोपे गृहधूमे यदालिके, मे, वि. धुन्धुमारः शक्रगोपे गृहधूमे गृहालिके, शा. धुन्धुमारो गृहधूमे नृपभेदे न्द्रगोपयोः। यदालिके, हे.

धुर. धूर्यानमुखभारयोः, हे.

धुरन्धर. धुरन्धरो धवद्रौ ना वाच्यलिङ्गस्तु धूर्वहे, मे. धुरन्धरो धवतरौ धूर्वहेऽपि धुरन्धरः, वि. धुरन्धरो धुर्ये धवद्रुमे, हे.

धू. धूः स्मृता धुनने स्त्रियाम्, मे.

धूत. धूतं तु कम्पिते भर्त्सिते त्रिषु, मे. धूतौ कम्पितभर्त्सितौ, हे. धूतं कम्पितभर्त्सिते, वि.

धूमकेतन. स्याद् धूमकेतनः पुंसि केतुग्रहहुताशयोः, मे. धूमकेतनमिच्छन्ति हुताशग्रहभेदयोः, वि. धूमकेतनोऽनले। ग्रहभेदे च, हे.

धूमकेतु. स्याद् धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्, मे. धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः, वि. धूमकेतू वह्न्युत्पातौ, हे. अग्न्युत्पातौ धूमकेतू, अ.

धूर्त. धूर्तं तु खण्डलवणे धुस्तूरे ना विटे त्रिषु, मे. धूर्तः स्यात् खण्डलवणे खलधुस्तूरयोरपि, वि. धूर्तं तु खण्डलवणे धूर्तौ धत्तूरमायिनोः, हे.

धूलि. धूलिः संख्यान्तरे रेणौ, वि.

धूलिकदम्ब. धूलिकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे, मे, वि. धूलिकदम्बस्तिनिशे नीपे वरुणपादपे, हे.

धूसर. धूसरो किन्नरीभेदे ना खरे त्रिषु पाण्डुरे, मे. धूसरः पाण्डुरे खरे, वि. धूसरस्तु रासभे स्तोकपाण्डुरे, हे.

धृतराष्ट्र. धृतराष्ट्रः सुराज्ञि स्यात् नागचक्रियभेदयोः। धृतराष्ट्री हंसपद्याम्, मे. धृतराष्ट्रः सुराज्ञि स्यात् पक्षिचक्रियभेदयोः। धृतराष्ट्री हंसपद्याम्, वि. धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे। धृतराष्ट्री हंसपद्याम्, हे.

धृति. धृति र्नेष्टौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे, मे. धृति-र्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु, वि. धृति र्योगविशेषे स्यात् धारणा-धैर्ययोः सुखे। सन्तोषाध्वरयोश्चापि, हे. धृति र्धारणधैर्ययोः, अ. धृति-स्तुष्टौ क्रतावपि, त्रि.

धेन. धेनौ नद्यां नदे पुमान्, मे. धेनः समुद्रे नद्यां तु धेनी, वि. धेनः समुद्रे धेना तु नद्यां स्याद्भारतीभिदि, हे.

धेनु. धेनु र्गोमात्रके दोग्ध्र्यां गवि, हे. पयस्विन्यर्जुनी धेनु-र्धेनुः कुञ्जरकामिनी। अग्निपुत्री मता धेनु र्धेनु र्दक्षिः शुभङ्करी, अने.

धेनुक. स्याद् धेनुका करिण्यां धेनावपि ना तु दानवविशेषे, मे. धेनुका धेनुरित्यपि, हे. धेनुका तु करेण्वां च, अ. हस्तिन्यां धेनुका, ह.

धैनुक. धैनुकं करणे स्त्रीणां धेनूनामपि संहतौ, मे, वि. धै-नुकं धेनुसंहत्यां करणेऽपि च योषिताम्, हे.

धौम्र. धौम्रं धूम्रत्व ईरितम्। तथा वास्तुस्थानभेदे, मे.

ध्याम. ध्यामं दमनके गन्धतृणेऽथ श्यामले त्रिषु, मे. ध्यामो दमनके गन्धतृणे, वि.

ध्रुव. ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे। वसुयोग-भिदोः पुंसि क्लीवं निश्चिततर्कयोः। स्त्री मूर्वाशाटयोः शालपर्ण्यां गीति-स्नुग्भेदयोः स्त्रियां। सन्तते शाश्वते च, मे. ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ। ध्रुवा मूर्वाशालपर्ण्यो र्गीतिस्नुग्भेदयोरपि। ध्रुवन्तु निश्चले तर्के निश्चिते शाश्वतेऽव्ययत्, वि. ध्रुवो वटे। वसुयोगभिदोः शम्भौ शङ्कावुत्तानपादजे। स्थिरे नित्ये निश्चिते च ध्रुवं नेऽजस्रतर्कयोः। ध्रुवा मूर्वाशालपर्ण्योः स्नुग्भेदे गीतभिद्यपि, हे. ध्रुवो भभेदे क्लीवं तु निश्चिते शाश्वते त्रिषु. अ. ध्रुवो वटे स्मरारौ च गीतिस्नुग्भेदयो र्ध्रुवा, त्रि. ध्रुवौ नक्षत्रनियतौ, अने.

ध्वज. ध्वजः स्यात् शौण्डिके पुमान्। न स्त्रियां तु पताकायां

खट्वाङ्गे मेढ्रचिह्नयो, मे. ध्वजं चिह्ने पताकायां ध्वजः शौण्डिकशेफसोः। -खट्वाङ्गे च, वि. ध्वज. पूर्वदिशो गृहे। शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च, हे. चिह्नशेफपताकासु खट्वाङ्गेऽपि ध्वजोऽस्त्रियाम्, त्रि.

ध्वजिन्. ध्वजी तु दृथिवीधरे। रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयोः, मे. ध्वजी शैले रथे विप्रे भुजङ्गमतुरङ्गयोः, वि.

ध्वनिनाला. ध्वनिनाला तु वीणायां वेणुकाहलयोरपि, मे. ध्वनिनाला स्मृता वेणौ काहलावीणयोरपि, वि. ध्वनिनाला तु वल्लक्यां वेणुकाहलयोरपि, हे. काहलावेणुवीणासु ध्वनिनालाध्वनिं विदुः, श्रा.

ध्वाङ्क्ष. ध्वाङ्क्षो मत्स्यशात्खगे काके तक्षके भिक्षुकेऽपि च। ध्वाङ्क्षी कक्कोलिकायाम्, मे. ध्वाङ्क्षस्तु काकबकयोस्तक्षके भिक्षुके गृहे। ध्वाङ्क्षी कक्कोलिकायां स्यात्, वि ध्वाङ्क्षः काके बकेऽर्थिनि। गृहे ध्वाङ्क्षी तु काकोलस्याम्, हे. काकमत्स्यशात्खगौ ध्वाङ्क्षौ, श्र. ध्वाङ्क्षः काको बको ध्वाङ्क्षः, भने. बके ध्वाङ्क्षः, ह.

न. न. पुमान् सुगते बन्धे हिरण्डे प्रस्तुतेऽपि च, मे. न स्यान्निषेधोपमयोः, मे. शौरी मेषे खरो दीर्घो वामपादाङ्गुलीगतः। नटो नटी नो नादी च नकारश्चानुनासिकः, मा नेता नश्च समाख्यातस्तरणौ नः प्रकीर्तितः। नकारः संगते दृष्टो स्तुतौ दृष्टे प्रकीर्तितः, ए ए नञ्

नकिर् नकि निषेधोपमयोः, मे.

नकुल. नकुलौ कुक्कुटीमांस्यो. पशुपाण्डवयोः पुमान्, मे. नकुलौ कुक्कुटीमांस्यो नकुलः पाण्डवे पशौ, वि नकुलस्तु पाण्डवप्राणिभेदयोः। नकुली कुक्कुटीमांस्योः, हे

नक्षत्रनेमि. नक्षत्रनेमिस्तक्ष रेवत्यां ना ध्रुवे चन्द्रे, मे नक्षत्रनेमिः शीतांशौ रेवत्यां च ध्रुवे क्वचित्, वि नक्षत्रनेमि. शीतांशुरेवत्यौत्तानपादिषु, हे.

नख. नखो स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्, मे. नख.

करवहे पराडे गन्धद्रव्ये नखं नखी, वि. नखं पुन गन्धद्रव्ये नखः करज-परादयोः, हे. नखं शुक्तौ करवहे, त्रि.

नग. नगः शैलो नगो द्रुमः, अने. V. अग.

नगौकस्. नगौकाः पुंसि शरभे पक्षिपञ्चास्ययोरपि, मे. V. अगौकस्.

नग्न. नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि, मे. नग्नोऽपि च क्षपणके विवस्त्रे चाभिधेयवत्, वि. नग्नो विवाससि। मागधे च क्षपणके, हे. नग्नौ क्षपणवन्दिनौ, त्रि.

नग्निका. नग्निकापि कुमार्य्यां स्यात् पुमान् क्षपणवन्दिनोः, मे. नग्निकाऽऋतुकन्यायां नग्नको जिनवन्दिनोः, हे. नग्निका तु कुमार्य्यां स्यादथ क्षपणवन्दिनोः। नग्नकः, वि.

नञ्. नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः, मे, वि. नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः। व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि, हे. नञभावे निगद्यते। तद्विरुद्धे तदन्ये च निषेधेऽपि च दृश्यते। सादृश्ये चेषदर्थे च, त्रि.

नट. नटी नलद्यौषधे स्त्री स्यात् शैलूषाशोकयोः पुमान्, मे. नटी च्छविलासिन्यां शोनके न के नटः, वि. नटौ भरतकासुकौ, त्रि.

नत. नतं तगरपादां स्यात् क्लीवं कुटिलनम्रयोः। त्रिषु, मे. नत-स्तगरनम्रयोः, हे. नतं स्याद्वाचय्रवन्नम्रे नतस्तगरपादपे, वि.

नदी. नदी सरिति शोणादौ ना, मे. नदः समुद्रे निनदे नदी तु सरिति स्मृता, वि. नदो ह्रदेऽब्धौ निनदे, हे.

नदीकान्त. नदीकान्तः समुद्रे स्यात् दृष्णले सिन्धुवारके। नदी-कान्ता स्त्रियां जम्ब्वां काकजङ्घौषधावपि, मे. नदीकान्तः समुद्रे स्यात् सिन्धुवारेऽपि दिश्यते। नदीकान्ता स्मृता जम्बूकाकजङ्घालतासु च, वि. नदीकान्तो निर्गुण्डीनिचुलादिषु। नदीकान्ता लताजम्बूकाकजङ्घौषधे-ऽपि च, हे.: जम्ब्वां स्त्री ना नदीकान्तः सिन्धुवारेऽज्जलाब्धिषु, त्रि.

नड्ड नड्डो वहे तयोहृसे, मे नड्डस्तुहृस्तनड्डयो, वि

ननु ननुशब्दो विनिग्रहे। ननु प्रश्ने परस्तावधिकारे च सम्भ्रमे। आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञावधारणे, मे ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे। आमन्त्रणे चापि ननु, वि नन्वान्ये परिप्रश्ने प्रत्युक्तावधारणे। वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि, रे ननु प्रश्नेऽवधारणे, ह प्रश्नावधारणाऽनुज्ञानुनयामन्त्रणे ननु, श

ननुच ननुच प्रश्नदुष्टोक्त्योः, मे, वि ननुच प्रश्ने दुष्टोक्तौ, हे

नन्द नन्दा स्यादलिञ्जरे। गौर्यां तिथिविशेषे स्त्री निधिराणभिदोः पुमान्, मे नन्दा मणिकसम्पदोः, वि नन्दा सम्पदलिञ्जरे। तिथिभेदे च, हे

नन्दक नन्दको हरिखड्गे च हर्षके कुलपालके, मे नन्दको हरिखड्गे सराहर्षके कुलपालके, वि नन्दकः कुलपालके। हर्षके हरिखड्गे च, हे

नन्दन नन्दनं वासवोद्याने नन्दनो हर्षके सुते, मे, वि नन्दनम्। इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि, हे अथ नन्दनम्। देवोद्याने सुते पुंसि, वि नन्दनः सज्जनः पुत्रो नन्दनं स्वर्गवाटिका, धने

नन्दि नन्दिर्द्यूतवाक्य आनन्दे स्त्री नन्दिकेश्वरे पुमान्, मे नन्दिरानन्दने द्यूते प्रतीहारे हरस्य च, वि नन्दिस्तु प्रतीहारे पिनाकिनः। आनन्दने च द्यूते च, हे

नन्दिघोष नन्दिघोषोऽर्जुनरथे घोषे वन्दिजनस्य च, मे, वि नन्दिघोषो वन्दिघोषे स्यन्दने च किरीटिनः, हे

नन्दिन् नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे। नन्दिगुप्मायां गङ्गाया ननान्दृधेनुभेदयोः, मे नन्दी हरप्रतीहारे गर्दभाण्डे वटद्रुमे। नन्दिनी तु ननन्दायां धेन्वां सुरसरित्यपि, वि नन्दी गिरिशदेविणि। गर्दभाण्डे वटे, हे

नन्दिवर्द्धन सखान्नन्दिवर्द्धनो भर्गे पक्षान्ते तनयेऽपि च, मे.

नन्द्यावर्त्त. नन्द्यावर्त्तः पुमान् वेश्मप्रभेदे तगरद्रुमे, मे. नन्द्यावर्त्तः स्मृतो वेश्मप्रभेदे तगरद्रुमे, वि. नन्द्यावर्त्तो गृहान्तरे। तगरे, हे. ४. शोच.

नभस्. नभः क्लीवं व्योम्नि पुमान् घने। प्राणश्रावणवर्षासु विसतन्तौ पतद्ग्रहे, मे. नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे। प्राणे घ्राणालस्कन्ते च वर्षासु च नभाः स्मृतः, वि. नभो व्योम्नि नभा प्राणे विसतन्तौ पतद्ग्रहे। माऽपि श्रावणे, हे. नभः खं श्रावणे नभाः, श.

नभश्चमस. स्यान्नभश्चमसश्चन्द्रे चित्रापूपेन्द्रजालयोः, मे, वि. नभश्चमसश्चन्द्रमाययोः। चित्रापूपे, हे.

नभश्चर. नभश्चरा विहङ्गमे। विद्याधरे घने वाते, मे. नभश्चरो घने वाते विद्याधरविहङ्गयोः, वि. नभश्चरः खगेऽब्दे। विद्याधरे समीरे च, हे. नभश्चरौ पक्षिदेवौ, त्रि.

नभस. नभसस्तु नदीपतौ। गगणे ऋतुभेदे च, हे.

नमुचि. नमुचिस्तु पुमान् दैत्यभेदे कुसुमकार्मुके, मे. नमुचिः स्मरदैत्ययोः, वि. नमुचि र्दितिजे कामे, हे. नमुचि र्दितिजस्मरे, त्रि.

नय. नया नीतिद्यूतविशेषयोः, मे. नयो नीतौ द्यूतभेदे, वि. नयः स्यान्नैगमादिषु। नीतिद्यूतभिदोः, हे.

नर. नरोऽजे मनुजेऽर्जुने। क्लीवन्तु रामकर्पूरे, मे. नरन्तु रामकर्पूरे नरोऽजे मानवेऽर्जुने, वि. नरो मर्त्त्येऽर्जुनेऽच्युते। नरन्तु रामकर्पूरे, हे. नरोऽजे मानवेऽर्जुने, त्रि.

नरक. नरकः पुंसि निरयदेवारातिप्रभेदयोः, मे. नरकौ दैत्यनिरयौ, हे. नरको निरये दैत्ये, वि, त्रि.

नरङ्ग. नरङ्गस्तु वरण्डके। मेहने न द्वयोश्च, मे. नरङ्गं तु वरण्डके। शेफे नरङ्गमप्याहुः, वि. नरङ्गः शेफे वरण्डे, हे.

नरेन्द्र. नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम, मे. नरेन्द्रो

वार्त्तिके राज्ञि विपवैद्ये च कथ्यते, वि. नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च, हे. नरेन्द्रो राजिके राज्ञि विषवैद्येऽपि दृश्यते, ति. नरेन्द्रो नृपवाचकौ, श.

नर्त्तक. नर्त्तकः केलके पोटगलचारणयो नटे। नर्त्तकी लासिकायाञ्च करेणुमपि योषिति, मे. नर्त्तकः केलके नटे। द्विपे पोटगले चापि नर्त्तकी लासिका द्विपी, हे. नर्त्तकी लासिकायाञ्च करेणुमपि नर्त्तकी। नर्त्तकः खेलके पोटगलचारणयो नटे, वि.

नर्मठ. नर्मठश्चुके पिङ्गे, मे, वि. नर्मठौ पिङ्गचूचुकौ, हे. नर्मठं चूचुके पिङ्गे, श.

नर्मद. नर्मदः केलिसचिवे नर्मदा सरिदन्तरे, मे, वि. नर्मदा रेवानर्मलयोः, हे.

नर्मरा. नर्मरा तु दरीभाण्डमुग्लानिष्फलासु च, मे, वि.

नल. नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि क्लुनल्याञ्च क्रमेण क्लीवयोषिति, मे. नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। नली मनःशिलायान्तु नलिने तु नलं मतम्, वि. नलो राज्ञि कपौ नड़े। पितृदेवे नलन्तु स्यात् पद्मं नली मनःशिला, हे.

नलद. नलदं स्यात् पुष्परसोशीरमांसीषु न द्वयोः, मे. नलदं स्मृतात् पुष्परसे मांसिकोशीरयोरपि, वि. नलदा मांसत्रां नलदमुशीरमकरन्दयोः, हे.

नलिन. नलिनी पद्मिनीव्योमनिम्नगाकमलाकरे। नपुंसकं नीलिकायां न पुंसि सरसीरुहे, मे. नलिनी पद्मिनीपद्मव्योमसिन्धुसरोवरे। नलिकायाञ्च नलिनी नलिनं कमले चले, वि. नलिनं नलिकातोयाम्बुजेषु नलिनी पुनः। पद्माकरे गङ्गाब्जिन्योः, हे. खगङ्गायां नलिनी, त्रि.

नव. नवं नवेऽत्र पुमान् स्तुतौ, मे. नवं नवेऽत्र भवे विदुः, वि. नवो नवेऽत्र स्तुतौ, हे.

नवफलिका. नवफलिका स्त्री नवेत्र नवजातरजोऽङ्गनायाञ्च, मे. स्यान्नवफलिका नवेत्र नवजातरजःस्त्रियाम्, वि. नवफलिका तु नवे नवरजःस्त्रियाम्, हे. नवफलिका नवरजमत्रपि, वि.

नवाह. नवाहः सत्रान्तवर्द्दिने नवाहः प्रतिपत्तिथौ, वि. नवाहस्त्वाद्यतिथौ नववासरे, हे.

नह. प्रत्यारम्भे नहः प्रोक्तः, ह.

नहुष. नहुषो नागभेदे स्यात् सोमवंशनृपेऽपि च, मे. नहुषो राज्ञि भुजगे, वि. नहुषो राजविशेषे नागभिद्यपि, हे.

नाक नाकस्तु त्रिदिवेऽम्बरे, मे. नाकः स्वः खे, हे. नाकः स्वर्गान्तरीक्षयोः, वि. आकाशे त्रिदिवे नाक, ध. कथ्यतेऽम्बरे नाकः, ह.

नाकुली. नाकुली कुक्कुटीकन्दे रास्नायां चविके स्त्रियाम्, मे. नाकुली कुक्कुटीकन्दे नाकुली चव्यरास्नयोः, वि. नाकुली चव्यरास्नयोः। कुक्कुटीकन्दे, हे.

नाग नागं नपुंसके रङ्गे सीसके करणान्तरे। नागः पन्नगमातङ्गक्रूराचारिषु तोयदे। नागकेशरपुन्नागनागदन्तकमुस्तके। देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरे स्थितः, मे. नागन्तु सीसके रङ्गे क्लीवञ्च करणान्तरे। नागः पन्नगमातङ्गक्रूराचारिषु तोयदे। नागकेसरपुन्नागे नागदन्तकमुस्तके। देहानिलप्रभेदेऽथ श्रेष्ठे स्यादुत्तरस्थितः, वि. नागं रङ्गे सीसपत्रे क्लीवञ्च करणान्तरे। नागो मतङ्गजे सर्पे पुन्नागे नागकेसरे। क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः, हे गजेऽपि नागमातङ्गौ, अ. नागः श्रेष्ठभसर्पेषु क्लीवं सीसकरङ्गयोः, वि नागो द्रुमविशेषे स्यात् नागौ वारणपन्नगौ, अने कुञ्जरे नागः, ह

नागदन्त नागदन्तो हिपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपि स्त्रियाम्, मे नागदन्तो हिपरदे गृहान्निर्गतदारुणि। नागदन्ती तु कुम्भायां श्रीहस्तिन्यामपीष्यते, वि नाग-

नादेयी. नादेयी नागरङ्गे स्यात् जयायामम्बुवेतसे। भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठेऽपि च योषिति, मे. नादेयी नागरङ्गे स्यात् जयायां जलवेतसे। भूमिजम्ब्वां जवायाञ्च व्यङ्गुष्ठे च समीच्यते, वि, नादेयी जलवानीरे भूजम्बूनागरङ्गयोः। व्यङ्गुष्ठे च जपायाञ्च, हे.

नाना. नानाशब्दो विनार्थेऽपि तथाऽनेकोभयार्थयोः, मे, वि. नाना विनोभयानेकार्थेषु, हे. अनेकार्थे भवेन्नाना, ह.

नाभि. नाभि र्मुख्यनृपे चक्रमध्यचत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे, मे. नाभिः प्रधाननृपणे चक्रे चक्रान्तस्थमवर्त्तिनोः। नाभिः प्रधाने कस्तूरीमदे च क्वचिदीरितः, वि. नाभिः चक्रप्रधानयोः। चक्रमध्ये मृगमदे प्राणप्रङ्गे मुख्यराज्ञि च, हे. चत्रियेऽपि च नाभि र्ना, अ. मुख्यराट्चत्रयोः पुंसि नाभिः प्राण्यङ्के द्वयोः। चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे, त्रि. चादिष्टः चत्रियो नाभि र्नाभिश्चक्रस्य पिण्डिका। कुटुम्बस्याश्रयो नाभि र्नाभिर्निम्नोदरी तथा, अने.

नाभील. नाभील वड्वणे नार्य्याः स्त्रकग्भाण्डयोरपि, मे. नाभील कृत्तमस्त्रियाः। वड्वणे नाभिगर्भाण्डे, हे. नाभील नाभिगर्भाण्डे वड्वणे चोन्नमस्त्रियाम्, वि.

नाम. नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते, मे. नाम प्राकाश्यसम्भाव्यकुत्साभ्युपगमेषु च, वि. नाम प्राकाश्यकुत्सयोः। सम्भाव्याभ्युपगमयोरलीके विस्मये क्रुधि, हे. नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने, अ.

नायक. नायको नेतरि श्रेष्ठे हारमध्यमणावपि, मे, वि. नायको मणिभिन्नेत्प्रधानेषु, हे

नार. नारस्तर्णकनीरयोः, मे, वि. नारं मुण्ड्रां नारौघे च, त्रि.

नारकीट. नारकीटोऽश्मकीटे स्यात् स्वदत्ताशाविहन्तरि, मे, वि.

नारङ्ग. नारङ्गः पिप्पलीरसे। यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि च, मे. नारङ्गं पिप्पलीरसे। नागरङ्गे विटे जन्तौ यमजेऽपि प्रकीर्त्तितम्, वि. नारङ्गो विटजन्मिनोः। कणारसे नागरङ्गे, हे.

नाराच. नाराचः पक्षिकायां ना लोहवाणाम्बुहस्तिनोः, मे. नाराचो लोहवाणे स्यान्नाराचो जलहस्तिनि। नाराचः पक्षिकायाञ्च, वि. नाराचो लोहसायके। जलेभे नाराचः पत्रपाम्, हे.

नारायण. नारायणोऽच्युतेऽभीरुगौर्यस्त्री नारायणी मता, मे. नारायणोऽच्युतेऽभीरुगौर्यस्त्री नारायणी विदुः, वि. नारायणस्तु केशवे। नारायणी शतावर्य्युमा श्रीः, हे.

नाल. नाला दण्डे सरोजस्य नाली शाककलम्बके, वि. नाला न ना पद्मदण्डे नाली शाककडम्बके, मे. नालं काण्डे मृणाले च नाली शाके कडम्बके, हे.

नालिका. अथ नालिका। नाले काले सुषिरन्ध्रे विवरे वेणुभाजने, हे

नालीक. नालीकं शरशल्याद्यं ब्जखण्डे नपुंसकम्, मे. नालीकोऽङ्के शरे शल्ये नालीकं पद्मवर्द्धने, हे नालीकं शरखण्डेऽब्जे नालीकः शरशलयोः, वि. नालीकौ पद्मनाराचौ, त्रि.

नाश. नाशः पलायनेऽपि स्यान्निधनानुपलम्भयोः, मे. नाशः पलायने प्रोक्तो निधनानुपलम्भयोः, वि नाशः पलायने ध्वस्तौ परिभ्रंशावदर्शने, हे. नाशः पलायने ध्वस्तौ, त्रि.

नासा. नासा तु नासिकायाञ्च द्वारोर्द्धदारुणि स्त्रियाम्, मे. नासा तु नासिकायां स्यात् नासा द्वारोर्द्धदारुणि, वि. नासा घोणा। द्वारोर्द्धदारुणोः, हे.

नाह. नाहस्तु बन्धने कूटे, मे नाहो बन्धनकूटयोः, वि.

नि. नि निवेशक्षेपणार्थयोः। नित्यार्थे संशयक्षेपकौशलोपरमेषु च। सान्निध्याश्रयदानेषु मोक्षान्तर्भावबन्धने। राश्यधोभावविन्यासे, मे. :नि

स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि। सन्निधानोपरमयोः संश्रया-श्रयराशिषु। मे. श्वेऽन्तर्भावेऽधोभावे बन्धने कौशलेऽपि च, हे. नि निषेध-भृशार्थाधोभावविन्यासराशिषु। आश्रये बन्धने मोचे दानकर्मणि दर्शने। अन्तर्भावे च सामीप्यकौशलोपरमेषु च। नित्यार्थे संश्रये च, वि.

निःश्रेणि. निःश्रेणिरधिरोहिण्यां खर्जूरोपादपे स्त्रियाम्, मे. निःश्रेणिस्त्वधिरोहिण्यां खर्जूरोपादपेऽपि च, वि. निःश्रेणिरधिरोहिण्यां खर्जूरोपादपेऽपि, हे.

निःश्रेयस. निःश्रेयसन्तु कल्याणमोक्षयोः शङ्करे पुमान्, मे. निःश्रेयसन्तु कल्याणे चन्द्रचूडापवर्गयोः, वि. निःश्रेयसन्तु कल्याणमोक्षयोः, हे.

निःसरण. अथ निःसरणं स्यादुपायमोक्षेषु निर्गमे, मे. निःसरणं स्यान्मरणोपायनिर्याणमुक्तिषु, वि. निःसरणं मृतौ। उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च, हे.

निकर. निकरो निवहे सारे न्यायदेयधने निधौ, मे. निकरो निवहे सारे न्यायदेयधनान्तरे, वि. निकरः सारसङ्घयोः। न्यायदातव्य-वित्ते च, हे.

निकष. निकषः शाणफलके निकषा यातुमातरि, मे, हे. निकषाऽ-न्तिकमध्ययोः, मे. निकषा त्वन्तिके मध्ये रक्षोऽम्बायां त्वनव्ययम्, वि.

निकाय. निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनि, मे. निकायो निलये लक्ष्ये संहतानां समु-च्चये। एकार्थभाजिनिवहे परमात्मनि चेष्यते, वि. निकायः सद्मसङ्घयोः। परमात्मनि लक्ष्ये च, हे.

निकार. निकारः स्यात् परिभवे धान्यस्योत्क्षेपणेऽपि च, मे. निकारः स्यात् परिभवे धान्यस्योत्किरणेऽपि च, वि. निकारस्तु पराभवे। धान्योत्क्षेपे, हे. धान्योत्क्षेपे निकारः स्यात्, लि.

निकुम्भ. निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधौ, मे. निकुम्भः कथितो दन्त्यां कुम्भकर्णसुतेऽपि च, वि. निकुम्भः कुम्भकर्णजे। दन्त्याद्य, हे.

निकृत. निकृतं विप्रलब्धे स्यात् नीचे विप्रकृतेऽपि च, वि, मे. निकृतं विप्रलब्धे विप्रकृतेऽधमे, हे.

निकृति निकृति र्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्, मे. निकृति र्भर्त्सने क्षेपे वदन्ति शठशाठ्ययोः, वि निकृतिः शठशाठ्ययोः। भर्त्सनेऽभिभवे क्षेपे, हे.

निगम निगमो वाणिजे पुर्य्यां कटे वेदे वणिक्पथे, मे निगमो वाणिजे पुर्य्यां कटे वेदे वणिक्पथे, वि. निगमाः पूर्वणिग्वेदनिश्चयाध्ववणिक्पथाः, हे. वणिक्पथः पुरं वेदो निगमः, अ कटे लुण्ड्राश्च निगमः, त्रि श्रुतौ निगमः, ह

निगरण अथ निगरणं क्लीवं भोजने स्यात् गले पुमान्, मे. निगरणं भोजनेऽपि गले निगरणो मतः, वि. निगरणं भोजने स्यात् निगरणः पुन र्गले, हे.

निग्रह निग्रहो भर्त्सनेऽपि स्यात् मर्य्यादायाश्च बन्धने, मे. निग्रहो भर्त्सने मोक्षो मर्य्यादायाश्च बन्धके, वि. निग्रह । बन्धके भर्त्सने सीम्नि, हे

निचुल निचुलस्तु निचोले स्यात् हिज्जलाख्यमहीरुहे, मे. निचुलो हिज्जलतरौ निचुलश्च निचोलके, वि निचुलस्त्विज्जलद्रौ निचोलके, हे

निज निजं स्वीये च नित्ये च, मे निजमात्मीयनित्ययोः, वि. निजो नित्ये स्वकीये च, हे स्वके नित्ये निजं त्रिषु, अ. नित्यं स्वञ्च निजं प्रोक्तम्, धने

नितम्ब नितम्बः स्कन्धरोधसोः। स्त्रियाः पश्चात् कटितटे कटके कटिमात्रके, मे नितम्बो रोधसि स्कन्धे गिरेरपि कटीरके, वि. नितम्बः कटिरोधसोः। स्त्रियाः पश्चात् कटे सानौ, हे

नित्य नित्यं स्यात् सन्ततेऽपि च। शाश्वते त्रिषु, मे नित्यन्तु सतते ध्रुवे, वि नित्यं सते ध्रुवे हे. नित्ये सततशाश्वते, त्रि.

निदाघ. निदाघो ग्रीष्मकाले स्यात् उष्णस्वेदाम्बुनोरपि, मे, वि. प्रस्वेदोऽपि निदाघः स्यात् निदाघो ग्रीष्म उच्यते, अने. निदाघौ स्वेदतापौ च, त्रि. ४. घर्म.

निदान. निदानं कारणे वत्सदामादिकारणत्रये, मे. निदानं कारणे रोगनिर्णये वत्सदामनि, वि. निदानं कारणे शुद्धौ तपसः फलयाचने। वत्सदाम्न्यवसाने च, हे. निदानमवसानेऽपि, श.

निर्देश. निर्देशः शासनोपान्तभाषणेषु प्रयुज्यते, वि. निर्देशः शासनेऽपि स्यात् कथनोपान्तयोरपि, मे. निर्देशः स्यादुपकण्ठे शासने परिभाषणे, हे.

निधन. निधनं स्यात् कुले नाशे, मे, वि. निधनं कुलनाशयोः, हे, अ.

निधुवन. भवेन्निधुवनं कम्पे सुरते च नपुंसकम्, मे. निधुवनं सुरते कम्पनेऽपि च, वि. निधुवनं रते कम्पे, हे.

निन्दा. निन्दा स्यादपराधेऽपि कुत्सायामपि योषिति, मे. निन्दापवादे कुत्सायाम्, वि. निन्दा कुत्सापवादयोः, हे.

निपाक. निपाकः पचने स्वेदेऽप्यसत्कर्मफलेऽपि च, वि. निपाकः पचने स्वेदासत्कर्मफलयोरपि, हे.

निभ. निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु, मे. निभो व्याजसदृक्षयोः, वि. स्यात् सदृशे व्याजे, हे. सदृशव्याजयो र्निभः, त्रि.

निमित्त. निमित्तं हेतुलक्ष्मणोः, मे, वि, हे, अ. निमित्तं हेतुचिह्नागन्तुदेवादेशपर्वसु, त्रि.

निमिष, निमेष. निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने, मे, वि. निमेषनिमिषौ नेत्रमीलने कालभिद्यपि, हे.

निम्ब. (निम्बः स्यात् पिचुमर्देऽपि तिक्तके च चिरायते, वि.)

नियति. नियति र्नियमे दैवे, मे, वि. नियती दैवसंयमौ, हे.

नियम. नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते, मे. नियमो

यन्त्रणायां सत्रात् प्रतिज्ञायाञ्च संयमे, वि. नियमः सत्रात् प्रतिज्ञायां निश्चये यन्त्रणे व्रते, हे. नियमो निश्चये व्रते। यन्त्रणावन्ध-योश्च, त्रि

नियामक. नियामकः कर्णधारे पोतवाहे नियन्तरि, मे, वि. नियामको नियन्तरि। पोतवाहे कर्णधारे, चे नौवाहे स्यान्नियामकः। सख्ये सुरौ च, त्रि.

निर्. नि निर्णयनिषेधयोः, मे. नि निश्चये कान्ताद्यर्थे नि-निःशेषनिषेधयोः, वि. नि निश्चये कान्ताद्यर्थे विशेषप्रतिषेधयोः, हे. नि निश्चयनिषेधयोः, च.

निरसन. निरसनं वधे प्रतिक्षेपे। निष्ठीवने, मे. निरसनं निरासे स्याद् वधे निष्ठीवनेऽपि च, वि. निरसनं निसूदने। निष्ठीवने निरासे च, हे.

निरस्त. निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते। सन्त्यक्ते च प्रतिहते, मे. निरस्तः प्रेषितेषौ स्यात् निष्ठ्यूते त्वरितोदिते। सन्त्यक्ते च प्रतिहते, वि. निरस्तः प्रेषितशरे सन्त्यक्ते त्वरितोदिते। निष्ठ्यूते प्रतिहते च, हे.

निराकृति निराकृतिरनाकारेऽस्वाध्याये त्रिषु वारणे। स्त्रियाम्, मे. निराकृतिः प्रतिषेधेऽप्यस्वाध्यायेऽप्यनाकृतौ, वि निराकृतिरस्वा-ध्याये निराकारनिषेधयोः, हे. अस्वाध्याये कुरूपे च प्रत्युक्तौ स्त्री निराकृतिः, त्रि.

निरामय. निरामयस्तु पुंसि स्याद् ड्डिशे त्रिषु नीरुजि, मे. निरामयोऽन्यवत् कल्ये स्याड्डिशे निरामयः, वि. निरामयस्तु स्याड्डि-डिशे गतामये, हे.

निरूपण. निरूपणं स्यादालोके विचारे च निदर्शने, मे, वि. निरूपणं विचारावलोकनयो निदर्शने, हे.

निरूढ निरूढो [illegible] मे, निरूढो

यतिभेदे स्यात् तर्कनिश्चितयोरपि, वि. निरुक्तो निगदे तर्के यति-भेदे, हे.

निरोध निरोधो नाशरोधयोः, मे, हे. निरोधो रोधनाशयोः, वि.

निर्ऋति. निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिशां पालान्तरे पुमान्, मे. निर्ऋतिः स्यादलक्ष्म्यां च दिक्पाले निरुपद्रवे, वि. निर्ऋति-र्निरुपद्रवे। अलक्ष्म्यां दिक्पतौ चापि, हे.

निर्गुण्डी. निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च, मे. निर्गुण्डी सिन्धुवारकः। नीलशेफाल्यब्जकन्दः, हे. निर्गुण्डी सिन्धु-वारके। नीलशेफालिकायाञ्च कञ्चाटे च क्वचित्, वि.

निर्ग्रन्थ. निर्ग्रन्थो नग्नकेऽपि स्यान्निःस्वबालिशयोरपि, मे, वि. निर्ग्रन्थो निःस्वमूर्खयोः। क्षपणे च, हे.

निर्ग्रन्थक. निर्ग्रन्थकः स्यात् क्षपणे निष्फलेऽप्यपरिच्छदे, मे. निर्ग्रन्थकः स्यात् क्षपणे निष्फलेऽप्यपरिग्रहे, वि.

निर्जर. निर्जरः स्यात् पुमान् देवे जरात्यक्ते च वाच्यवत्। नि-र्जरा तु गुडूच्याञ्च तालपर्ण्यामपि स्त्रियाम्, मे. निर्जरस्तु जरात्यक्ते वाच्यवन्निर्जरः सुरे। निर्जरा तु गुडूच्यां स्यात् तालपत्र्यामपि क्व-चित्, वि. निर्जरो निर्जरे सुरे। निर्जरा तु तालपत्र्यां गुडूच्यां तल-भिद्यपि, हे. गुडूच्यामपि निर्जरा, त्रि.

निर्दिष्ट. निर्दिष्टस्तु दयाशून्ये कथितो निष्प्रयोजने। परापवाद-रक्ते च वाच्यलिङ्गोऽयमिष्यते, मे. निर्दिष्टो निर्दये स्मृतः। परापवाद-संरक्ते निर्दिष्टो निष्प्रयोजने, वि निर्दिष्टो निष्प्रयोजने। निर्देऽस्य-दोषरते, हे.

निर्दर, निर्वर निर्दरं निर्भरे सारेऽन्यवत् तु कठिनेऽत्रपे, मे. निर्वर सारे निर्भरे कठिनेऽत्रपे, वि. निर्दरन्तु गतत्रपे। कठिने निर्भरे सारे, हे.

निर्देश. निर्देशः शासनेऽपि स्यात् कथनोपान्तयोरपि, मे.

निर्देश कथनाज्ञयोः, हे

निर्नर निर्नरोऽक्षोस्खे तुषाग्नौ, हे निर्नरस्तु सदृशाश्वतुरङ्गे तुषपावके, वि, मे

निर्भर्त्सन निर्भर्त्सनं खलीकारेऽलक्तकेऽपि नपुंसकम्, मे निर्भर्त्सनं खलीकारेऽलक्तके च, वि निर्भर्त्सनमलक्तके। खलीकारे, हे निर्भर्त्सनं खलीकारालक्तयोः, वि

निर्मल निर्मलं स्यात् निर्माल्येऽभ्रके च नपुंसकम्। मल-हीनेऽन्यलिङ्गञ्च, मे निर्मलं विमले विद्यात् निर्माल्याभ्रकयोरपि, वि निर्मलं विमलेऽभ्रके। निर्माल्ये च, हे

निर्माण निर्माणं निर्मितौ सारे समञ्जसे नपुंसकम्, मे नि-र्माणं निर्मितौ सारे निर्माणञ्च समञ्जसे, वि निर्माणं सारनिर्मित्योः कर्मभेदे समञ्जसे, हे

निर्मुट निर्मुटः खर्परे सूर्ये, हा v दृमुंट

निर्मुक्त निर्मुक्तस्त्यक्तसङ्गे स्यात् मुक्तकञ्चुकभोगिनि, मे, वि निर्मुक्तो मुक्तनिर्मोकभुजङ्गे निष्परिग्रहे, हे

निर्मोक निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके, मे नि-र्मोको मोचके व्योम्नि सन्नाहे सर्पकञ्चुके, वि निर्मोको व्योम्नि सन्नाहे मोचके सर्पकञ्चुके, हे

निर्याण निर्याणं वारणापाङ्गदेशे मोक्षेऽध्वनिर्गमे, मे निर्याणं वारणापाङ्गदेशे मोक्षे च निर्गमे, वि निर्याणं निर्गमे मोक्षे गजापाङ्गप्र-देशयो, हे

निर्यातन निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च, मे, च निर्यातन वैरशुद्धो दाने न्यासार्पणे मतौ, वि निर्यातन वैरशुद्धौ दाने न्याससमर्पणे, हे

निर्यूह निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके, वि, मे नि-र्यूहो द्वारि निर्यासे शेखरे नागदन्तके हे v निर्यूह

निर्वर. v. निद्दर.

निर्वाण. निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। सङ्गमेऽप्य-पवर्गे च, मे. निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। अपवर्गे च, वि. निर्वाणं मोक्षनिर्वृत्यो विश्रान्ते करिमज्जने, हे. गज मज्जने। निर्वाणं निर्वृतौ मोक्षे, त्रि.

निर्वाद. निर्वादः स्यात् लोकवादे परिनिष्ठितवादयोः, मे. निर्वादः सप्रात् परीवादे परिनिष्ठितवादयोः, वि. निर्वादस्तु लोकवादेऽपवादे, हे. निर्वादो जनवादेऽपि, अ.

निर्वासन. निर्वासनं हिंसने स्यात् नगरादेर्बहिष्कृतौ, मे. निर्वासनं हिंसने च नगरादेर्बहिष्कृतौ, वि. निर्वासनन्तु मारणे। पुरादेश्च बहिष्कारे, हे.

निर्वृति. निर्वृतिः। मोक्षे अतन्त्रौ सुखे सौख्येऽ, हे. निर्वृतिः सुस्थतायां स्यादस्तंगमनसौख्ययोः, वि. निर्वृतिः सुस्थितावस्तं-गमने च सुखे स्त्रियाम्, मे. निर्वाणे सुस्थितत्वे च निर्वृतिः, त्रि.

निर्व्यूह. द्वार्यापीड़े क्वाथरसे निर्व्यूहो नागदन्तके, अ. निर्व्यूहो निर्गतापीड़निर्यासद्वारभूमिषु, अने. v. निर्यूह.

निर्वेश. निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च, मे. निर्वेशो मूर्च्छने भोगे निर्वेशो वेतनेऽपि च, वि. निर्वेश उपभोगे स्यात् मूर्च्छने वेतनेऽपि च, हे निर्वेशो भृतिभोगयोः, अ.

निवात. निवातो दृढ़सन्नाहे वातशून्येऽपि चाश्रये, मे. निवातो दृढ़सन्नाहे वातान्ते चाश्रयेऽपि च, वि. निवातो वातरहिते दृढ़सन्नाह आश्रये, हे. निवातावाश्रयावातौ शस्त्राभेद्यश्च वर्म यत्, अ. निवात-माश्रयं विद्यादभिन्नं कवचं तथा, अने.

निवेश निवेशः पुंसि विन्यासे शिविरोद्वाहयोरपि, मे. निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तितः, वि निवेशः सैन्यविन्यासे शिविरोद्वाह-योरपि, हे.

निश्मन. निश्मनमुक्तं दृष्टौ श्रुतौ, मे. श्रुतौ दृष्टौ निश्मनम्, त्रि. निश्मनं श्रुतौ दृष्टौ, वि. v. निशामन.

निशा. निशा दारुहरिद्रायां स्यात् त्रियामाहरिद्रयोः, मे, वि. निशा रात्रौ हरिद्रायाम्, हे. निशा रात्रि र्हरिद्रा च, त्रि.

निशाचर. निशाचरस्तु रक्षसि। केरुपेचकसर्पेषु पांशुलायां निशाचरी, मे. निशाचरः पेचकाहियातुधानेषु फेरवे। निशाचरी पांशुलायाम्, वि. निशाचरस्तु राक्षसः। सर्पे घूके शृगाले च। निशाचरी तु पांशुला, हे. पांशुला च निशाचरी, त्रि.

निशान्त. निशान्तं त्रिषु शान्ते स्यात् क्लीवन्तु भवनोषसोः, मे. निशान्तं सदने शान्ते प्रभातेऽपि, हे. निशान्तः कथितः शान्ते निशान्तं भवनोषसोः, वि.

निशामन. निशामनं दर्शने स्याद् आलोचने न द्वयोः, मे. दृष्ट्यालोचे निशामनम्, वि. निश्मननिशामने। निरीक्षणश्रवणयोः, हे.

निशीथ. निशीथस्तु पुमानर्द्धरात्रे स्याद् रात्रिमात्रके, मे. निशीथोऽप्यर्द्धरात्रे स्यात् निशीथो रात्रिमात्रके, वि. निशीथस्तु रात्रिमात्रार्धरात्रयोः, हे.

निश्चारक. निश्चारकः पुरीषस्य क्षये स्वैरे समीरणे, मे, वि. निश्चारकः समीरणे। पुरीषस्य चये स्वैरे, हे.

निषङ्ग. निषङ्गः सङ्गते तूणे, मे. निषङ्गः सङ्गतूणयोः, वि, त्रि. निषङ्गस्तूणसङ्गयोः, हे.

निषद्वर. निषद्वरस्तु जम्बाले निशायान्तु निषद्वरा, मे. निषद्वरस्तु जम्बाले निशायाञ्च निषद्वरी, वि. निषद्वरः स्मरे पङ्के निषद्वरी पुनर्निशि, हे.

निषध. निषधः कठिने देशे तद्राजे पर्वतान्तरे, मे. निषधः कठिने देशे तद्राजे च नगान्तरे, वि. निषधस्तु पर्वते कठिने स्वरे। देशतद्राजयोश्चापि, हे

निषाद. निषादः स्वरभेदे स्याच्चण्डाले धीवरान्तरे, मे. निषादः श्वपचे स्वरे, वि, हे. निषादौ श्वपचस्वरौ, त्रि.

निष्क. निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, मे. निष्कः कर्षे हेमनि तत्पले। दीनारे साष्टसुवर्णशते वक्षोविभूषणे, हे. निष्कमष्टाधिकस्वर्णशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च, वि. साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री, अ. पलमण्डनयो र्निष्को निष्को दीनारकर्षयोः, भाने.

निष्कल. निष्कलस्तु कलाशून्ये नष्टवीर्ये च वाच्यवत्, मे. निष्कलस्तु नष्टवीजे कलोज्झिते, हे. निष्कलस्तु कलाशून्ये नष्टवीजे तु वाच्यवत्, वि.

निष्काषित. निष्काषितो निर्गमितेऽप्याक्षिप्ते धिक्कृतेऽपि च, मे, वि.

निष्कुट. निष्कुटस्तु गृहोद्याने क्वचित् केदारकपाटयोः, मे, वि. निष्कुटो गृहवाटिका। केदारकः कपाटश्च, हे. कपाटेऽपि च निष्कुटः। कोटरेऽपि, त्रि. गृहवाट्याञ्च निष्कुटः, श.

निष्क्रम. निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुलेऽपि च, मे, वि. निष्क्रमो दुर्गमे बुद्धिसम्पत्तौ दुष्कुलेऽपि च, हे.

निष्ठा. निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च, मे, वि. निष्ठोत्कर्षव्यवस्थयोः। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते, हे. निष्ठा निष्पत्तिनाशान्ताः, अ. निष्ठा क्लेशेऽवसाने च व्यवस्थोत्कर्षयो र्व्रते, श.

निष्ठुर. निष्ठुरः कठिनेऽलपे, शा.

निष्पाव निष्पावः शूर्पपवने राजमाषे कडङ्गरे। पवने शिम्बिकायां ना निर्विकल्पेऽन्यलिङ्गकः, मे. निष्पावः शूर्पपवने राजमाषे कडङ्गरे। पवने शिम्बिकायां च निष्पावो निर्विकल्पके, वि. निष्पाव पवने शूर्पपवने निर्विकल्पके। वल्ले कडङ्गरे शिम्बग्राम्, हे. निष्पावः शूर्पवातेऽपि, शा

निस् निर्निषेधे च निश्चये। साकल्यातीतयोः, मे नि निश्चये निषेधे च साकल्यातीतयोरपि, वि द्र. निर्

निसर्ग निसर्गो रूपसर्गयो, मे निसर्गः सर्गशीलयो, वि निसर्गः सर्गे स्वभावे, हे

निस्तरण स्यान्निस्तारणमुपाये निस्तारे तरणेऽपि च, मे निस्तरणं स्यादुपाये निस्तारे निर्गमेऽपि च, वि निस्तारणन्तु निस्तारे तरणोपाययोरपि, हे

निस्तल निस्तलं वर्त्तुले चले, मे, वि निस्तलन्तु तले हस्ते, हे

निस्तुषित अथ निस्तुषित त्यक्ते त्वग्विहीने लघूकृते, मे निस्तुषितं निस्त्वचि स्याद् वर्जिते च लघूकृते, वि निस्तुषितं वर्जिते स्याद् गतत्वचि लघूकृते, हे

निस्त्रिंश अथ निस्त्रिंश खड्गे ना निर्दये त्रिषु, मे निस्त्रिंशो निर्दये खड्गे, वि निस्त्रिंशो निर्घृणे खड्गे, हे निस्त्रिंशौ खड्गनिर्दयौ, त्रि निस्त्रिंशौ खड्गपापिष्ठौ, अने निस्त्रिंशोऽकरुणेऽपि च, हा

निह्नव निह्नव पुंसि निकृतावविश्वासापलापयोः, मे निह्नवं निकृतौ विद्याद् अविश्वासापलापयोः, वि निह्नव स्यादविश्वासेऽपलापे निकृतावपि, हे अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः, श

नीकाश नीकाशो निश्चये तुल्ये, वि, मे, हे

नीच नीचः पामरे वामनेऽपि च, मे नीचस्तु वामने पामरे स्मृतः, वि नीच पामरखर्वयोः, हे वामने पामरे नीच, त्रि

नीचैस् नीचैः स्वैरात्पयो र्नरक्, मे, वि नीचैः स्वैरात्पनीचेषु, हे

नीड नीडं स्थानकुलाययो मे नीड स्थाने कुलाये च सकारपूर्वकोऽन्तिके, वि नीडं स्थाने खगालये, हे

नीति नीति र्नयेऽपि स्यात् प्रापणेऽपि च रोपिति, मे नीतिस्तु प्रापणे नये, वि नीति र्नये प्रापणे च हे

नीभ्र. नीभ्रं नेमौ वलीके द्रौ रेवतीभे च कानने, वि. नीभ्रन्तु वलीवननेमिषु। चन्द्रे च रेवतीभे च, हे. नीभ्रं नेमौ वलीके द्रौ रेवतीभेऽपि कानने, मे. वलीकवनयो र्नीभ्रम्, त्रि.

नीप. नीपः कदम्बबन्धूकनीलाशोकद्रुमेषु च, मे. नीपो धूलिकदम्बे स्मरान् नीलाशोके च धन्विनि, वि.

नीरज. नीरजं कुष्ठपद्मयोः, मे. नीरजं कमले कुष्ठे, वि, त्रि. नीरजं पद्मकुष्ठयोः, हे.

नील. नीलन्तु नीलीरक्ते ना निधद्रिवानरान्तरे। नीली रक्तभेदनीलिन्योः, मे, नीलः स्यात् नगान्तरे। नीलः कपीश्वरे नीली दृषलाञ्छनभेदयोः, वि. नीलो वर्णे मणौ वृक्षे निधिवानरभेदयोः। नीलीपथ्यां लाञ्छने च, हे.

नीलकण्ठ. V कालकण्ठ

नीलङ्गु, नीलाङ्गु. नीलाङ्गुः स्यात् कृमौ पुंसि भ्रमरालर्यां तु योषिति, मे. नीलाङ्गुः कृमिजातिके। भ्रमरालर्यां प्रसूते च, हे. नीलङ्गुः कृमिभेदे स्याद् भ्रमरालीसुमारयोः, वि.

नीलाञ्जसा. नीलाञ्जसाऽप्सरोभेदे सरिद्भेदे च विद्युति, मे. नीलाञ्जसाऽप्सरोभेदे सरिद्भेदेऽपि विद्युति, वि. नीलाञ्जसा नदीभेदेऽप्सरोभेदे तडितपि, हे.

नीलाम्बर. नीलाम्बरः प्रलम्बघ्ने कौणपे च शनैश्चरे, मे. नीलाम्बरः प्रलम्बघ्ने कौणपे क्रूरलोचने, वि. नीलाम्बरो बलभद्रे राक्षसे क्रूरलोचने, हे.

नीलिका. नीलिका नीलिनीक्षुद्ररोगशेफालिकासु च, मे. नीलिका नीलिनीक्षुद्ररोगशेफालिकास्वपि, वि

नीवर. स्त्रान्नीवरो वणिजके वास्तव्ये च पुमानयम्, मे. स्त्रान्नीवरो वाणिजके वास्तव्येऽपि च नीवरः, वि. नीवरस्तु वास्तव्येऽपि वणिजपि, हे.

नीवी नीवी परिपणे स्त्रीणां कटीवसनबन्धने, मे नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः, वि नीवी स्त्रीकटीवस्त्रबन्धने। मूलद्रव्ये परिपणे, हे स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च, न नीवी परिपणेऽप्युक्ता, ह

नीहार नीहारो हिमशीतयोः, अने

नु नु वितर्कावमानयोः। विकल्पानुनयातीते प्रश्नेऽत्यपदेशयोः, मे नु प्रश्नेऽनुनये तीर्थे सत्राद्विकल्पवितर्कयोः, हे नु सत्रात् प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः, वि नु इच्छायां विकल्पे च, अ

नुचित् नुचित् प्रश्नवितर्कयोः, ह

नूनम् नूनन्तु निश्चिते तर्के स्मरणे वाक्यपूरणे, मे नूनं निश्चिततर्कयोः, वि नूनं तर्के निश्चिते च, हे तर्कनिश्चितयोर्नूनम्, ह नूनं तर्केऽर्थनिश्चये, अ

नृशंस पापीयांसो नृशंसाः स्युर्नृशंसा वन्दिनः स्मृताः, अने

नेत् नेद् विकल्पनिषेधयोः, मे

नेत्र नेत्र मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि मन्थान्तु नेत्री नेतरि वाच्यवत्, मे नेत्रं मन्थिगुणे वस्त्रे तरुमूले विलोचने। नेत्रं रथे च नाड्याञ्च नेत्री नेतरि वाच्यवत्, वि नेत्रं वस्त्रे मथो गुणे। मूलाविनेत्वत्, हे स्याज्जाटाग्रुतयो नेत्रम्, अ नेत्री नेतरि नेत्रञ्च गुणे मूले विलोचने, लि नेत्रं वस्त्रविशेषश्च नेत्रं चक्षुरुदाहृतम्। परिवर्त्तगुणो नेत्रो नेत्रः कनूक्रिकाश्रमः, अने नेत्रं मूले, ह

नेपथ्य नेपथ्यं स्यादलङ्कारे रङ्गजायां नपुंसकम् मे नेपथ्यं रङ्गभूमौ स्यात् नेपथ्यञ्च प्रसाधने, वि

नेम नेम कालेऽवधौ खण्डे प्राकारे कैतवेऽपि च, मे नेमः कालेऽवधौ गर्त्ते प्राकारे कैतवेऽपि च, वि नेमस्त्वर्द्धे प्राकारगर्त्तयोः। अवधौ नैतवे काले हे

नेमि नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम्, मे. नेमि-

क्षिकायां कूपरत्र चक्रान्ते तिनिसद्रुमे, वि नेमि: कूपत्रिका प्रधि:। तिनि-शोऽरिश्नेमिश्च, हे.

नैगम. नैगमं स्यादुपनिषद् वणिजो नागरेऽपि च, मे, त्रि नैगमो नयपौरोपनिषद्वतिषु वाणिजे, हे. नागरो वणिक्। नैगमौ द्वौ, ध.

नैपाली नैपाली तु नवमालीकुनटीसुवहासु च, मे. नैपाली नवमालीमन:शिलासुवहासु च, वि. नैपाली मन:शिला स्यात् सुवहा नवमालत्यपि, हे.

न्यच्(ञ्च्) न्यङ् नोचनिम्नयो:, मे न्यग् निम्ने नीचकात्स्नर्यो:, हे. न्यङ् नीचे निम्नकात्स्नर्ययो:, वि.

न्यक्ष. न्यक्ष: परशुरामे स्यात् न्यक्ष: कात्स्नर्यनिकृष्टयो:, वि. न्यक्ष: कात्स्नर्यनिकृष्टयो:। जामदग्न्येऽपि, हे न्यक्षं कात्स्नर्यनिकृष्टयो:, ध. न्यक्षं कात्स्नर्ये त्वन्येऽपि च। क्लीबेऽथ पुंसि महिषे निकृष्टे पुनरन्यवत्, मे.

न्यग्रोध. न्यग्रोधस्तु पुमान् व्यामवटयोर्वं शमीतरौ। न्यग्रोधी त्वृषचित्रायाम्, मे. न्यग्रोधो व्यामवटयो र्न्यग्रोधश्च शमीतरौ। न्यग्रोधी विषपर्णाख्य मोहनाख्यौषधावपि. वि न्यग्रोधो वटपादपे। अस्त्री व्यामे न्यग्रोधी तु मोहनाख्यौषधीभिदि। द्रवपर्ण्याम्, हे. व्यामो वटश्च न्यग्रोधौ, ध्व न्यग्रोधौ वटकामुकौ, अने

न्यङ्कु. न्यङ्कु र्मुनौ मृगे पुंसि. मे न्यङ्कु, मृगे मुनौ, हे. न्यङ्कु,-र्मृगे चरणौ, वि

न्यब्ज न्युब्जो दर्भमये स्रुचि। कर्मरङ्गफले क्लीबं कुब्जाधोमुखयोस्त्रिषु, मे. न्युब्जस्तु कर्मरङ्गे स्यान्न्यब्ज: प्रोक्त: कुशस्रुचि। अधोमुखे च कुब्जे च न्युब्जा वाच्यवदिष्यते. वि. न्युब्ज: कुब्जे कुशस्रुचि। अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरा फले. हे

न्यूङ्ख सुन्यङ्ख: सम्यङ्गनोद्भे च साम्न. षट्प्रणवेषु च, मे. न्यूङ्ख. सामविशेषस्य षडोङ्कार्येऽप्यतिप्रिये, हे न्युङ्ख: सम्यङ्मनाज्ञेऽपि साम्न. षट्प्रणवेष्वपि वि. न्यूङ्ख साम्नि मनोरमे, त्रि

न्यून. न्यूनं गर्ह्योनयोः, मे न्यूनं हीनवच्चोनगर्ह्ययोः, हे हीन-न्यूनावूनगर्ह्यौ, अ.

प. (पो ना वाताण्डपूतेषु पा पातरि च कीर्त्तितः। स्त्रियां तु रक्षणे पाने पूते पूरितके च सः, मे.) तीक्ष्णश्च लोहितः शूरो दृढ-पार्श्वश्च पार्थिवः। पश्चिमो नान्तिमः फादिः प्रकारोऽपि प्रकीर्त्तितः, मा. प कुवेरः समाख्यातः पश्चिमे च प्रकीर्त्तितः। पवने पः समाख्यातः पः स्यात् पाने च पातरि, ए

पक्ति. पक्तिः स्त्री गौरवे पाके, मे. पक्ति गौरवपाकयोः, त्रि, हे, वि.

पक्व. पक्वं परिणतेऽपि स्यात् विनाशाभिमुखे त्रिषु, मे. पक्वं परिणतार्थे स्याद् विनाशाभिमुखेऽपि च, वि पक्वं परिणते नाशाभि-मुखे, हे.

पक्ष. पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च राजकुञ्जर-पार्श्वयोः, मे. पक्षस्तु मासार्द्धे गृहसाध्ययोः। चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात् परस्थिते। पिच्छे विरोधे देहाङ्गे सहाये राजकु-ञ्जरे, हे पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः। पक्षश्च परतो वृन्दे बले सखिसहाययोः। पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे, वि. पक्षः सहायेऽपि, अ पक्षौ मासार्द्धपार्श्वे च, त्रि पक्षो गरुति मासार्द्धे पक्षशब्दो निगद्यते, धने देहावयवमासार्द्धपतत्त्रग्रहभित्तिषु। परि-ग्रहे समीपे च षट्सु पक्षो निगद्यते, ए केशे पक्षः समूहार्थे, पक्षः साध्यविरोधयोः। मलकालपतत्रेषु सहायकनिपार्श्वयो, मा.

पक्षक पक्षकम् पुमान् पार्श्वद्वारे च पार्श्वमात्रके, मे पक्षकः पार्श्वमात्रेच पक्षद्वारे च पक्षकः, वि पक्षकस्तु पार्श्वद्वारे पार्श्वमात्रेऽ-पि कथ्यते, हे

पक्षचर. स्यात् पक्षचरश्चन्द्रे यूथभ्रष्टगजेऽपि च, मे. भवेत

पञ्चचरो विधौ। यूथभ्रष्टस्यकचारिवारणेऽपि प्रकीर्त्तितः, वि. पञ्चचरो यूथभ्रष्टस्यकचारिगजे विधौ, हे. अथ निशापतौ। स्यकचरगजे यूथभ्रष्टे पञ्चचरः स्मृतः, ति.

पञ्चति. पञ्चतिश्च भवेत् पञ्चमूले च प्रतिपत्तियौ। (स्त्रियाम्), मे. पञ्चतिः पञ्चमूले सप्रात् पञ्चतिः प्रतिपत्तियौ, वि. पञ्चतिः प्रतिपत्तियौ। पञ्चमूले, हे. मूले तु पञ्चतिः पञ्चभेदयोः, अ.

पञ्चिन्. पञ्चिणी पूर्णिमायां स्याहिङ्‌ग्रां शाकिनीभिदि। आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम्, मे. पञ्चिणी पूर्णिमायां स्यात् पञ्चिणी शाकिनीभिदि। आगामिवर्तमानाहर्युक्तायां निशि पञ्चिणी, वि पञ्चिणी पूर्णिमास्यग्योः शाकिनीरात्रिभेदयोः, हे.

पञ्चन्. पञ्च सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि, मे, वि. पञ्चाक्षिलोम्नि तन्वादिसूक्ष्मांशे कुसुमच्छदे। गरुत्किञ्जल्कयोश्चापि, हे. पञ्चाक्षिलोम्नि किञ्जल्के तन्वाद्यंशेऽप्यणीयसि, अ.

पङ्क पङ्कोऽस्त्री कर्दमे पापे, मे पङ्कः कर्दमपापयोः, वि. पङ्कोऽघे कर्दमे, हे. पङ्कोऽस्त्री कर्दमांहसोः, ति.

पङ्कार. पङ्कारः शैवले चेतौ सोपाने जनकुञ्जके, मे, वि, श. पङ्कारो जलकुञ्जके। सोपाने शैवले चेतौ, हे

पङ्किल पादालिन्देऽपि पङ्किलः, श.

पंक्ति पंक्ति दशाचरच्छन्दोदशसंख्यालिपु स्त्रियाम्, मे. पंक्तिर्दशाचरच्छन्दोदशसंख्यावलीष्वपि, वि. पंक्तिश्छन्दःश्रेण्योः, हे. पंक्तिश्छन्दोऽपि दशमम्, अ श्रेणि दश च पंक्तिः सप्रात्, ति.

पञ्चगुप्त पञ्चगुप्तस्तु चार्वाकदर्शने कमठेऽपि च, वि पञ्चगुप्तस्तु चार्वाकदर्शने कमठे पुमान्, मे पञ्चगुप्तश्चार्वाकदर्शने। कमठे, हे.

पञ्चता पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति, मे, वि. पञ्चता पञ्चभावे सप्रात् पञ्चता मरणेऽपि च, हे.

पञ्चत्व. पञ्चत्वं पञ्चानां भावे प्रमाणानामत्ययेऽपि च, मे. पञ्चत्वं

निधनं स्मृतम्। पञ्चानामपि भावे च, वि. पञ्चत्वं भावे पञ्चाना माणानामत्ययेऽपि च, हे.

पञ्चदशी. पञ्चदशी त्वमावास्यापौर्णमास्योश्च योषिति, मे. भवेत् पञ्चदशी पौर्णमास्यमावास्ययोरपि, वि.

पञ्चनख. पञ्चनखो गजे कूर्मे, वि पञ्चनखस्तु कच्छपे। गजे, हे. कूर्मे पञ्चनखो गजे, त्रि.

पञ्चम. पञ्चमो रागभेदे स्यात् स्वरभेदे च पञ्चमी। पाण्डवानाञ्च पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु, मे. पञ्चमो रागभेदे स्यात् पञ्चानामपि पूरणे। पञ्चमश्चतुरे छ्टेरा पञ्चमी पाण्डवस्त्रियाम्, वि. पञ्चमो रुचिरे दक्षे पञ्चानामपिपूरणे। रागभेदे पञ्चमी तु द्रौपद्याम्, हे. पञ्चमः स्वरसंख्ययोः, त्रि.

पञ्चानन. पञ्चाननः शिवे सिंहे, मे, वि, हे.

पञ्चाली. पञ्चाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति, मे. पञ्चाली पुत्रिकागीत्योः पञ्चालो जनदेशयोः, वि. पञ्चालो नीवृदन्तरे। पञ्चाली पुत्रिकागीत्योः, हे.

पञ्चालिका पञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः, मे. पञ्चालिका भवेद् वस्त्रपुत्रिकागीतिभेदयोः, वि. पञ्चालिका वस्त्रकृतपुत्रिकागीतिभेदयोः, त्रि.

पट. पटश्चित्रपटे वस्त्रेऽस्त्री प्रियालद्रुमे पुमान्, मे. पटः पियालवृक्षे च सुचेले च पुमस्त्रतो, वि पटः पद्मपरित्राणे क्रयवस्तुप्रतिछयोः, अने.

पटल. अथ पटलं पिटके च परिच्छदे। छदिर्नेत्रगततिलके क्लीबं व्रजे पुन र्न ना, मे पटलं छदिषि व्रजे। पिटके नेत्ररोगे च तिलके च परिच्छदे, वि पटलं तिलके नेत्ररोगे च्छदिषि सञ्चये। पिटके परिवारे च, हे छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना, त्र.

पटह पटहो ना समारम्भे आनके पुंनपुंसकम. मे ——

समारम्भे आनके पटहं मतम्, वि. पटहो वाद्य आरम्भो, हे समारम्भोऽपि पटहः, ति.

पटि. पटिः स्त्री पटभेदे स्याद् गुग्गुलौ कुम्भिकाद्रुमे, मे. पटिः पटविशेषेऽपि गुग्गुलौ कुम्भिकाद्रुमे, वि

पटु. पटु दक्षे च नीरोगे चतुरेऽप्यभिधेयवत्। पटोले तु पुमान् क्षौमे च्छत्रालवणयोरपि, मे. पटुस्तीक्ष्णे नीरोगे चतुरेऽन्यवत्। पटुः पटोलपत्रेऽपि च्छत्रालवणयोः पटुः, वि. अथ पटु लवणे पटुस्तीक्ष्णपटोलयोः। स्फुटे रोगविहीने च च्छत्रायां चतुरेऽपि च, हे पटुरामयनिर्मुक्तः पटुश्चतुरतीक्ष्णयोः, श्रा.

पटोल. पटोलं वस्त्रभेदे नौषधौ ज्योत्स्नया स्तु योषिति, मे. पटोलमोषधीवस्त्रभिदो ज्योत्स्नायां पटोल्यपि, हे, वि.

पट्ट. पट्टः पेषणपाषाणे व्रणादीनाञ्च बन्धने। चतुष्पथे च राजादिशासनान्तरपीठयोः, मे, वि. पट्टी ललाटभूषायां पट्टो लाक्षाप्रसादने, वि. पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे। व्रणादिबन्धने पेषाश्मनि पट्टी ललाटिका। रोध्रः, हे. पट्टः सन्नात् फलके उपघासने, ति. व्रणसंवरणे पट्टः पट्टो भूनिहिताचन। वीरकच्चा पटः पट्टः पट्टः सगादपि चासनम्, अने.

पण. पणो वराटमाने स्यात् मूल्येऽ कार्षापणे ग्लहे। क्रयविक्रयशाकादिकाद्यूतव्यवहारे भृतौ धने, मे, वि पणः कार्षापणे ग्लहे। विक्रयशाकादिमुष्टौ वह्निमूल्ये भृतो धने। व्यवहारे च द्यावा फलतृष्टौ गण्डकार्यिभृतौ, हे पणो द्यूतादिपृत्कष्टे भृतौ मूल्ये धनेऽपि च, श. ग्लहे माने वराटानां मूल्ये कार्षापणे धने। द्यूते विक्रयशाकादेर्यन्ते मुष्टौ भृतौ पणः, श

पण्ड. पण्डः पण्डे धियि स्त्री सन्नात्, मे पण्डः पण्डे धियां पण्डा, वि. पण्डः पण्डे पण्डा बुद्धौ, हे पण्डः पण्डे मतौ स्त्रियाम्, त्रि.

पण्डित. पण्डितः सिह्लके कथो, मे, वि पण्डितः सिह्लधीमतोः, हे.

पतङ्ग. पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः, मे, शा. पतङ्गः शलभे शालिप्रभेदे विहगे रवौ, वि. पतङ्गः सूर्यपक्षिणोः । पारदे शरभे शालौ, हे. पतङ्गौ पक्षिसूर्यौ च, ध. पतङ्गः शलभे रवौ, त्रि. पतङ्गौ शलभादित्यौ, अने.

पतत्. पतन् पातुके खगे, मे. पतन् पातुकपक्षिणोः, वि.

पताका. पताका वैजयन्त्याञ्च सौभाग्यनाटकाङ्कयोः, मे. पताकाङ्के ध्वजे केतौ सौभाग्येऽत्र नाटकांशके, हे. पताका वैजयन्त्याञ्च सौभाग्येऽङ्के ध्वजेऽपि च, वि.

पति. पति र्धवे ना त्रिष्वीशे, मे. पतिः प्रभौ गतौ मूले, वि.

पत्ति. पत्ति र्ना पदगे स्त्रियाम् । गताबेकरथैकेभत्र्यश्वपञ्च-पदातिके, मे. पत्तिः पदातौ गमने वीरसैन्यप्रभेदयोः, वि. पत्तिः सेनाभित्पन्नगो गता, हे. पत्ति र्गतौ च, ध.

पत्र. पत्रन्तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः, मे. पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणाम्, वि. पत्रं यानं पक्षच्छदञ्छुरी, हे. पत्र वाहनपक्षयोः, ध. पादपाणे दले पक्षे लेख्यवस्तुनि पत्रवाक्, अने.

पत्राङ्ग. पत्राङ्गो न द्वयो र्भूर्जे पद्मके रक्तचन्दने, मे पत्राङ्गं पद्मके भूर्जे पत्राङ्गं रक्तचन्दने, वि. पत्राङ्गं रक्तचन्दने । भूर्जपद्मकयोश्चापि, हे.

पत्रिन्. पत्री श्येने पत्ररथे काण्डद्रुधिकाद्रिषु, मे. पत्री काण्डे खगे द्रुमे । रथेऽद्रौ रथिके श्येने, हे. पत्रिणौ शरपक्षिणौ, ध. श्येनाख्यो विहगः पत्री पत्रिणौ शरपक्षिणौ, शा.

पत्रोर्ण. पत्रोर्णं धौतकौशेये क्लीबं स्यात्शोणके पुमान्, मे. पत्रोर्णं धौतकौशेये पत्रोर्णः शोणकेऽपि च, वि पत्रोर्णं धौतकौशेये स्यात् पत्रोर्णस्तु शोणके, हे.

पथ्या. पथ्या स्त्री हरीतक्यां हिते त्रिषु, मे. पथ्यं हिते हरीतक्यां पथ्या, वि पथ्यं हितं पथ्या हरीतकी, हे. पथ्यं हितेऽभया पथ्या, त्रि.

पद. पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः, वि, मे. श्लोकपादेऽपि च क्लीवं पुंलिङ्गः किरणे पुनः, मे. पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः। त्राणे पादे पादचिह्ने व्यवसायापदेशयोः, हे. पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु, अ. वाक्ये शब्देऽपदेशे च, त्रि. व्यवसाये परित्राणे पदं पच्चिह्नयोरपि। वर्णस्थानापदेशेषु पदं स्यात्ताद्यशब्दयोः, शा.

पदार. पदारः पादधूलौ स्यात् पादालिन्देऽपि पुंस्ययम्, मे. पदारः पादधूलिषु। पादालिन्दे, हे, वि.

पद्धति. पद्धतिः पंक्तिवर्त्मनोः, मे, वि. पद्धतिः पथि पंक्तौ च, हे. अथ पद्धतिः पंक्तौ मार्गे च, त्रि.

पद्म. पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे। ना नागे स्त्री फञ्जिकाश्रीचारटीपद्मगीषु च, मे. पद्मः स्यात् पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे। पद्मके बिन्दुजालेऽपि पद्मा भार्गीश्रियोरपि, वि. पद्मो व्यूहे निधावब्धौ। सङ्ख्यानागयोः पद्मं भिन्नबिन्दौ, हे. पद्मोऽस्त्री बिन्दुजालेऽब्जे व्यूहे सङ्ख्यान्तरे निधौ, त्रि. पद्मा लक्ष्मी निधिः पद्मः पद्मानि गजबिन्दवः। सङ्ख्यानागविशेषौ च पद्मौ पद्मं सरोरुहम्, शा. र. कोष.

पद्मक. पद्मकं स्यात् पद्मकाष्ठबिन्दुजालकयोरपि, मे, हे. पद्मकं पद्मकाष्ठेभबिन्दुजालकयोरपि, वि.

पद्मलाञ्छन. स्यात् पद्मलाञ्छनो लोकेश्वरे ब्रह्मणि भास्करे। धनदे च स्त्रियां तारालक्ष्मीवाग्देवतासु च, मे. स्यात् पद्मलाञ्छनाभिख्या विधौ लोकेश्वरार्कयोः। धनदे च सरस्वत्यां तारालक्ष्म्योरपि स्मृता, वि. पद्मलाञ्छनो धनदे लोकेशे रविवेधसोः। पद्मलाञ्छना तारायां सरस्वत्यां श्रियामपि, हे.

पद्मिनी पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोवरे, मे. पद्मिनी स्त्रीविशेषे स्यात् सरस्यामम्बुजेऽपि च, वि पद्मिनी योषिदन्तरे। अब्जेऽब्जिन्यां सरस्यां च, हे

पद्य पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि कीर्त्तिता, मे पद्यं श्लोके स्त्री पद्या पद्य शूद्रे निगद्यते, वि पद्योऽन्त्यवर्णे स्यात् पद्यं श्लोके पद्या तु वर्त्मनि, हे

पनस पनसः कण्टकिफले कण्टके वानरान्तरे। स्त्रियां रोगप्रभेदे स्यात्, मे पनस कण्टकिफले कण्टके कपिरुग्भिदोः, वि पनसः कपिरुग्भिदोः। कण्टके कण्टकिफले, हे

पन्नग पन्नगश्चौषधीभेदे तथैव पवनाशने, मे पन्नगस्तु पद्मकाष्ठे भुजङ्गमे, हे पन्नगः पद्मकाष्ठे स्यात् पन्नगोऽपि भुजङ्गमे, त्रि

पयस् पयः स्यात् क्षीरनीरयोः, मे, वि पयः क्षीरे च नीरे च, हे पयः क्षीरं पयोऽम्बु च, अ पयः क्षीरं पयो जलम्, धने

पयस्य पयस्यन्तु पयोजातहितयो वाच्यलिङ्गकम्। दुग्धिका क्षीरकाकोल्योः स्वर्णक्षीर्यामपि स्त्रियाम्, मे पयस्या क्षीरकाकोल्यां पयोहितभवेऽन्यवत्। पयस्या दुग्धिकायाञ्च स्वर्णक्षीर्याञ्च कथ्यते, वि पयस्यन्तु पयोभवे। पयोहिते पयस्या तु काकोली दुग्धिकापि च, हे

पयस्विनी पयस्विनी नदीधेन्वोः विभावर्याञ्च योषिति, मे पयस्विनी तु गोधेन्वोः विभावर्यां पयस्विनी, वि पयस्विनी। विभावर्यां गोधेन्वाञ्च, हे

पयोधर पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि, मे पयोधर स्यात् कुचकोषकारकशेरुकाम्भोधरनारिकेले, वि पयोधर कुचे मेघे कोषकारे कशेरुणि। नारीकेरे, हे स्त्रीस्तनाब्दौ पयोधरौ, अ स्तनमेघौ पयोधरौ, धने

पर परः श्रेष्ठारिदूरान्योत्तरे क्लीबन्तु केवले, मे परः स्यादुत्तमानात्मवैरिदूरेषु केवले। परमव्ययमिच्छन्ति वि परो दूरान्यश्रेष्ठशत्रुषु। परन्तु केवले, हे दूरानात्मोत्तमाः पराः, अ परम् नियोगे क्षेपे च मे

परञ्ज परञ्जस्तैलयन्त्रे स्यात् छुरिकाफलफेनयोः, मे परञ्ज-

स्त्रैलयन्त्रके। फेने च करवाले च परञ्जः छुरिकाफले, वि. परञ्जोऽसौ तैलयन्त्रे छुरिकाफलफेनयोः, हे. खड्गधेनुफले फेने परञ्जस्तैलयन्त्रके, श.

परपुष्ट. परपुष्टः परभृते वारनार्यान्तु योषिति, मे. परपुष्टः परभृते परपुष्टा पणस्त्रियाम्, वि. परपुष्टः कलकण्ठे परपुष्टा पणाङ्गना, हे.

परम. परमं स्यादनुज्ञायामव्ययं परमः परे, मे. परमं स्यादनुज्ञानेऽप्यव्ययं परमः परे। परमः स्यात् प्रधानाद्योरोङ्कारेऽपि तयोचरते, वि. परमः परे। अग्रेसरप्रथमयोरोङ्कारे परमं पुनः। स्यादव्ययमनुज्ञायाम्, हे.

परम्पर. परम्परो मृगभेदे प्रपौत्रे तनयस्य च। परम्परा परीपाट्यां हिंसासन्तानयोरपि, मे. परम्परः प्रपौत्रादौ मृगभेदे परम्परः। परम्परा परीपाट्यां सन्तानेऽपि वधे क्वचित्, वि. परम्परः। मृगभेदे प्रपौत्रादौ परम्पराम्वये वधे। परीपाट्याम्, हे.

परवाणि परवाणिः पुमान् धर्माध्यक्षवत्सरयोरपि, मे. परवाणिः स्मृतो धर्माध्यक्षवत्सरयोरपि, वि. परवाणि धर्माध्यक्षे वर्षे, हे.

परा. परा विमोक्षप्राधान्यप्रातिलोम्येषु धर्षणे। आभिमुख्येऽत्र भृशार्थे च विक्रमे च गतौ वधे, मे, वि. पराभिमुख्ये प्राधान्ये विमोक्षप्रातिलोम्ययोः। गतिधर्षणशुग्वधात्(?) भृशार्थे विक्रमेऽपि च, हे.

पराक्र परक्रस्तु मते खड्गे, मे. पराक्रौ मतखड्गयोः, वि, त्रि.

पराक्रम पराक्रमो विक्रमे स्यात् सामर्थ्योद्योगयोरपि, मे, वि. पराक्रमम् विक्रमे। सामर्थ्ये चाभियोगे च, हे शौर्योद्योगौ पराक्रमौ, च योर्योद्योगौ पराक्रमौ, धने

पराग परागः सुमनोरेणौ धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने, मे परागश्चन्दने रेणौ गिरौ स्यातुपरागयोः। स्नानीयपुष्परजसो, हे परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि, च रजस्यपि परागः, र पुष्परेणौ परागः स्यात् स्नानीयरजसोरपि, श.

पराग: पुष्परजसि धूलिस्नानीययोरपि। गिरिप्रभेदे विख्याताद्पराग च चन्दने, वि.

पराभव. पराभवः। तिरस्कारे विनाशे च पुंसि, मे. पराभवस्तिरस्कारे विनाशे च पराभवः, वि. पराभवस्तिरस्कारे नाशे, हे

परायण. परायणमभीष्टे स्यात् तत्पराश्रययोरपि, मे, वि परायणं स्यादभीष्टे तत्पराश्रययोरपि, हे. परायणं रिपोः स्थानं तत्परश्च परायणः, धने.

परि. परि स्यात् सर्वतोभावे वर्जने व्याधिशोकयोः। इत्थम्भूताख्यानभागवीप्सालिङ्गनलक्षणे। दोषाख्याने निवसने पूजाव्याप्त्योश्च भूषणे, मे. परि स्यात् सर्वतोभावे वर्जने लक्षणादिषु। पूजालिङ्गनवीप्सासु भूषणे व्याधिशोकयोः। दोषाख्यानेऽप्युपरमे व्याप्तौ निवसनेऽपि च, वि. परि व्याधावुपरमे वर्जने लक्षणादिषु। आलिङ्गने च शोके च पूजायां दोषकीर्त्तने। भूषणे सर्वतोभावे व्याप्तौ निवसनेऽपि च, हे.

परिकम्प. परिकम्पो भये कम्पे, मे, वि

परिकर. भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः। प्रगाढ़गात्रिकाबन्धे समारम्भविवेकयोः, मे भवेत् परिकरो व्राते पर्यङ्कपरिवारयोः। प्रगाढ़गात्रिकाबन्धे विवेकारम्भयोरपि, वि. परिकर, पर्यङ्कपरिवारयोः। प्रगाढ़े गात्रिकाबन्धे विवेकारम्भयो गणे, हे. परिकरः पर्यङ्कपरिवारयोः, अ. प्रगाढ़गात्रिकाबन्धे पर्यङ्कपरिवारयो। प्रभुजाते परिकर. समूहारम्भयोरपि, शा.

परिगत. परिगतं त्रिषु प्राप्ते विस्मृतस्थानचेष्टिते, मे भवेत् परिगतं लाभे प्रयाते चेष्टितेऽपि च, वि परिगतं गते लाभचेष्टितयोर्ज्ञाते, हे. प्राप्ते ज्ञाते परिगतम्, त्रि

परिग्रह परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः। शापे, मे, वि. परिग्रहः परिजने पत्न्यां मूले च संग्रहे, हे. पत्नीपरिजनादानमूलशापाः परिग्रहाः, अ ? परिग्रहो हिजग्राहेऽथ सैन्यपृष्ठे परिग्रहः।

परिग्रहोऽनुबन्धे स्यात् पतद्ग्राहे परिग्रहः, अने. ? परिग्रहः सैन्यपृष्ठभागेऽपि, ह. परिग्रहः परिजने शपथे च परिग्रहः। परिग्रहः कलत्रे च मूलस्वीकारयोरपि, धा.

परिघ. परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः, मे. परिघो योगभेदे स्यात् मुद्गरेऽर्गलघातयोः, वि. परिघोऽस्त्रयोगभेदे परिघातेऽर्गलेऽपि च, हे. परिघः परिघातेऽस्त्रे, अ. परिघो योगभेदेऽपि, लि. परिघः परिघातः स्यात् परिघो दण्ड उच्यते, अने.

परिघात. परिघातोऽस्त्रघातयोः, वि. परिघातस्तु घातने। अस्त्रे च, हे.

परिघोष. परिघोषो निनादे स्यादवाच्ये जलदध्वनौ, मे, वि. परिघोषः स्यादवाच्ये निनादे जलदध्वनौ, हे.

परिज्मन्. परिज्मा तु पुमानिन्दौ याज्ञिके परिचारके, मे. परिज्वा (मह्ज्वा) क्रतुकर्मज्ञे याज्ञिके परिचारके, वि.

परिताप. परितापस्तु पुंसि स्याद्दुःखे च नरकान्तरे, मे.

परिधाय. परिधायो जलस्थाने परिच्छदनितम्बयोः, मे, वि. परिधायः परिकरे जलस्थाननितम्बयोः हे.

परिधि. परिधि र्ना यज्ञियद्रुशाखायामुपसूर्यके, मे. परिधिर्यज्ञियतरोः शाखायामुपसूर्यके, वि, हे, अ. शाखायामपि परिधिः, ह.

परिप्लव. परिप्लवश्चञ्चले स्यादाकुलेऽपि परिप्लवः, वि. प. पारिप्लव.

परिभाषण. परिभाषणमालापे नियमे परिभाषणम्, मे. निन्दोपालम्भवचने परिभाषणमिष्यते, वि. परिभाषणन्तु जल्पने। नियमे निन्दोपालम्भोक्तौ, हे

परिमल. स्यात् परिमलोऽभिमर्दोऽतिमनोहरगन्धयोश्चापि। सुरतोपमर्दविकसच्छरीररागादिसौरभे पुंसि, मे. परिमलो विमर्दे च स्यात् मनोहरगन्धवत्। रतोपमर्दविकसद्देहरागादिसौरभे, वि. परिमलो विमर्देऽथ हृद्यगन्धे विमर्दने, हे.

परि(री) वर्त परिवर्तो विनिमये कूर्मराजेऽपवर्तने, मे. परिवर्तो विनिमये कूर्मराजे पलायने, वि. परिवर्तस्तु कूर्मराजे पलायिते युगान्ते विनिमये च, हे. संवर्तः परिवर्तश्च त्रायने, ह.

परिवर्ह. परिवर्हो राजयोग्यद्रव्यपरिच्छदे, मे. परिवर्हस्तु राजार्ह-वस्तुन्यपि परिच्छदे, वि. परिच्छदे स्याद्धर्ऽर्थे परिवर्ह, च

परि (री) वाद. परिवादोऽपवादेऽपि वीणावादनवस्तुनि, मे. परिवादः कलङ्के स्यात् वीणावादनवस्तुनि, वि. परिवादस्तु निन्दायां वीणावादनवस्तुनि, हे.

परि (री) वाप परिवापस्तु पर्युप्तौ जलस्थाने परिच्छदे, मे, वि. परिवापो जलस्थाने पर्युप्तिपरिवारयोः, हे. परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ, च.

परि (री) वार. परिवारः परिजने खड्गकोषे परिच्छदे, मे, वि. परिवारः परिजनेऽसिकोषे, हे. स्यात्तत्क्रमे परीवारः खड्गकोषे परिच्छदे, च.

परिवेश परिवेशो वेष्टने स्यात् परिधानेऽपि पुंस्ययम्, मे. परिवेशः परिवृतौ भानोः परिधिमण्डले, वि.

परिवेष. परिवेषस्तु पुंलिङ्गः परिधौ परिवेषणे, मे. परिवेषः परिवृतौ परिधौ परिवेषणे, हे. परिवेषं विजानीयादुपसूर्यकमण्डलम्। परिवेषणमप्याहुः परिवेषं मनीषिण, धा.

परिव्याध. परिव्याधस्तु पुंसि स्यात् वेतसे च द्रुमोत्पले, मे. परिव्याधो वेतसे स्यात् परिव्याधो द्रुमोत्पले, वि. परिव्याधो द्रुमोत्पले। वेतसे, हे.

परि (री) सर. भवेत् परिसरो मृत्यौ विधावपि च पुंस्ययम्, मे. मृतः परिसरो मृत्यौ देवोपान्तप्रदेशयो, वि परिसर. प्रान्तभूदेवयो-र्मृतौ, हे.

परिस्रुत परिस्रुता स्त्री वारुण्यां स्त्रवे स्यादभिधेयवत्, मे.

परीरण. परीरणः सप्तात् कमठे दण्डे च पट्टशाटके, मे. परीरणः सप्तात् कमठे दण्डे च पटशाटके, वि.

परि(री) वाह. परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि,मे, वि.

परीष्टि. परीष्टि, परिचर्यायां प्राकाम्येऽन्यपणे स्त्रियाम्, मे. परिचर्या परीष्टिः सप्तात् परीष्टिश्च गवेषणा, श्रा.

परुष. परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्, मे. परुषं कर्बुरे रूक्षे सप्तान्निष्ठुरवचस्यपि, वि, हे. परुषः कर्बुरो रूक्षः परुषं निष्ठुरं वचः, श्रा.

परेत. परेतो वाच्यलिङ्गः सप्तान् स्तते भूतान्तरे पुमान्, मे. परेतो भूतभेदे सप्तात् परेतो वाच्यवन्मृते, वि.

पर्कटी. पर्कटी नूतनफले पूगादेः प्लक्षपादपे, मे, वि. सप्तात् पर्कटी प्लक्षतरौ पूगादे र्नूतने फले, हे. पर्कटी प्लक्षवृक्षे च पूगादेश्च नवे फले, त्रि.

पर्जन्य (पर्यन्य). सध्वानमेघः पर्जन्यः पर्जन्यो मेघवाहनः, श्रा. पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः, मे. पर्जन्यो मेघशब्दे सप्ताद् ध्वनदम्बुदशक्रयोः, वि. पर्जन्यो गर्जदम्बुदे। वासवे मेघशब्दे च, हे. पर्जन्यौ रसदब्देन्द्रौ, श्र. गर्जन्मेघेऽपि पर्यन्यः, ह.

पर्ण. पर्णं पत्रे किंशुके ना, मे. पर्णं सप्तात् किंशुके पत्ने, वि. पर्णस्त्रिपर्णे पर्णन्तु पत्ने, हे.

पर्पट. पर्पटं पिष्टभेदे सप्तात् पर्पटो भेषजान्तरे, मे पर्पटः पिष्टविकृतौ पर्पटो भेषजान्तरे, वि. पर्पटो भेषजान्तरे। सप्ताच्चैव पिष्टविकृतौ परीवापरिचर्ययोः, हे

पर्परीण. पर्परीणस्य पर्णस्य शिरायां हतकम्बले। पर्णदन्तरसेऽपि सप्तात् पर्परीणन्तु पर्वणि, मे पर्परीणन्तु पर्वणि। पर्णदन्तरसे पर्णशिरायां हतकम्बले, हे पर्परीणस्तु पर्णस्य शिरायां हतकम्बले। पर्णादन्तरसेऽपि सप्तात् पर्परीणञ्च पर्वणि, वि

पर्यस्त पर्यस्तं पतिते हते, मे, वि पर्यस्तन्तु हते स्रस्ते, हे.

पर्याप्त. पर्याप्तन्तु यथेष्टे सप्रात् तृप्तौ शक्त निवारणे, मे, वि. शक्तो निवारणे तृप्तौ पर्याप्तं समाद् यथेप्सिते, त्रि, शा. पर्याप्तं तु शक्तौ तृप्तौ निवारणे यथेष्टे, हे.

पर्याप्ति. पर्याप्तिः प्रकामप्राप्तिरक्षणे स्त्रियाम्, मे. पर्याप्तिः स्यात् प्रकामेऽपि प्राप्तौ च परिरक्षणे, वि.

पर्याय पर्यायः प्रकारेऽवसरे क्रमे, मे. पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे, वि. पर्यायोऽवसरे क्रमे। निर्माणे द्रव्यधर्मे च, हे. पर्यायोऽवसरे क्रमे, अ. पर्यायः स्यात् प्रकारेऽपि, त्रि.

पर्वत. पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले, मे. पर्वतः शैलदेवर्ष्योः, वि. पर्वतो गिरिदेवर्ष्योः, हे.

पर्वन्. पर्व क्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि, मे. पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि, वि. पर्व प्रस्तावोत्सवयो र्ग्रन्थौ च विषुवादिषु। दर्शप्रतिपत्सन्धौ च तिथिग्रन्थविशेषयोः, हे. तिथिभेदे क्षणे पर्व, अ. ग्रन्थिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि, त्रि दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि। पर्वशब्दं विजानीयाद्विषुवत्प्रभृतिष्वपि, शा.

पल पलमुन्मानमांसयोः, मे, हे. पलं चोन्मानमांसयोः, वि आमिषे पलम्, अ पलं मांसं पलं मानं पलो मूर्खः पलसुला, अने.

पलङ्कष. पलङ्कषा गोक्षुरके रास्नागुग्गुलुकिंशुके। मुण्डीरीलाक्षयोश्च स्त्री राक्षसे तु (ऽपि, वि) पलङ्कषः, मे, वि पलङ्कषो यातुधाने पलङ्कषा तु किंशुके। गोक्षुरे गुग्गुलौ लाक्षारास्नामुण्डीरिकासु च, हे.

पलल पललं तिलचूर्णे च पङ्के मांसे नपुंसकम्। ना राक्षसे, मे पललं तिलचूर्णे स्यात् पललं पङ्कमांसयोः। पललो यातुधाने स्यात्, वि पललं मांसपङ्कयोः। तिलचूर्णे पललस्तु राक्षसे, हे तिलपिष्टे.

परीरण. परीरणः सप्रात् कमठे दण्डे च पट्टशाटके, मे. परीरणः सप्रात् कमठे दण्डे च पटशाटके, वि.

परि(री)वाह. परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि,मे, वि.

परीष्टि. परीष्टि. परिचर्यायां प्राकाम्येऽन्यपेषणे स्त्रियाम्, मे. परिचर्या परीष्टिः सप्रात् परीष्टिश्च गवेषणा, शा.

परुष. परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्, मे. परुषं कर्बुरे रूक्षे सप्रान्निष्ठुरवचस्यपि, वि, हे. परुषः कर्बुरो ज्ञेयः परुषं निष्ठुरं वचः, शा.

परेत. परेतो वाच्यलिङ्गः स्यात् मृते भूतान्तरे पुमान्, मे. परेतो भूतभेदे स्यात् परेतो वाच्यवन्मृते, वि.

पर्कटी. पर्कटी नूतनफले पूगादेः प्लक्षपादपे, मे, वि. स्यात् पर्कटी प्लक्षतरौ पूगादे र्नूतने फले, हे. पर्कटी प्लक्षवृक्षे च पूगादेश्च नवे फले, वि.

पर्जन्य (पर्यन्य). सध्वानमेघः पर्जन्यः पर्जन्यो मेघवाहनः, शा. पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः, मे. पर्जन्यो मेघशब्दे स्याद् ध्वनदम्बुदशक्रयोः, वि. पर्जन्यो गर्जदम्बुदे। वासवे मेघशब्दे च, हे. पर्जन्यौ रसदब्देन्द्रौ, अ. गर्जमेघेऽपि पर्यन्यः, ह.

पर्ण. पर्णं पत्रे किंशुके ना, मे. पर्णं स्यात् किंशुके पत्रे, वि. पर्णस्त्रिपर्णे पर्णन्तु पत्रे, हे.

पर्पट. पर्पटं पिष्टभेदे स्यात् पर्पटो भेषजान्तरे, मे. पर्पटः पिष्टविकृतौ पर्पटो भेषजान्तरे, वि. पर्पटो भेषजान्तरे। स्याच्चैव पिष्टविकृतौ परीवापरिचर्ययोः, हे

पर्परीण. पर्परीणश्च पर्णस्य शिरायां छतकम्बले। पर्णदन्तरसेऽपि स्यात् पर्परीणन्तु पर्वणि, मे. पर्परीणन्तु पर्वणि। पर्णदन्तरसे पर्णशिरायां छतकम्बले, हे. पर्परीणस्तु पर्णस्य शिरायां छतकम्बले। पर्णदन्तरसेऽपि स्यात् पर्परीणश्च पर्वणि, वि.

पर्यस्त. पर्यस्तं पतिते हते, मे, वि. पर्यस्तन्तु हते स्रस्ते, हे.

पर्याप्त. पर्याप्तन्तु यथेष्टे स्यात् तृप्तौ शक्तौ निवारणे, मे, वि. शक्तौ निवारणे तृप्तौ पर्याप्तं स्याद् यथेप्सिते, वि, श. पर्याप्तं तु शक्तौ तृप्तौ निवारणे यथेष्टे, हे.

पर्याप्ति. पर्याप्तिः प्रकामप्राप्तिरक्षणे स्त्रियाम्, मे पर्याप्तिः स्यात् प्रकामेऽपि प्राप्तौ च परिरक्षणे, वि.

पर्याय पर्यायः प्रकारेऽवसरे क्रमे, मे. पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे, वि. पर्यायोऽवसरे क्रमे। निर्माणे द्रव्यधर्मे च, हे. पर्यायोऽवसरे क्रमे, श्र पर्यायः स्यात् प्रकारेऽपि, त्रि.

पर्वत. पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले, मे पर्वतः शैलदेवर्ष्योः, वि. पर्वतो गिरिदेवर्ष्योः, हे.

पर्वन्. पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि, मे पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि, वि. पर्व प्रस्तावोत्सवयो र्ग्रन्थौ च विषुवादिषु। दर्शप्रतिपत्सन्धौ च तिथिग्रन्थविशेषयोः, हे. तिथिभेदे क्षणे पर्व, श. ग्रन्थिप्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि, त्रि दर्शप्रतिपदोः सन्धौ ग्रन्थिप्रस्तावयोरपि। पर्वशब्दं विजानीयाद्विषुवत्प्रभृतिष्वपि, श्र.

पल पलमुन्मानमांसयोः, मे, हे. पलं चोन्मानमांसयोः, वि आमिषे पलम्, श पलं मांसं पलं मानं पलो मूर्खः पलस्तुला, अने.

पलङ्कष. पलङ्कषा गोक्षुरके रास्नागुग्गुलुकिंशुके। मुण्डीरीलाक्षयोश्च स्त्री राक्षसे तु (ऽपि, वि) पलङ्कषः, मे, वि पलङ्कषो यातुधाने पलङ्कषा तु किंशुके। गोक्षुरे गुग्गुलौ लाक्षारास्नामुण्डीरिकासु च, हे.

पलल. पललं तिलचूर्णे च पङ्के मांसे नपुंसकम्। ना राक्षसे, मे पललं तिलचूर्णे स्यात् पललं पङ्कमांसयोः। पललो यातुधाने स्यात्, वि पललं मांसपङ्कयोः। तिलचूर्णे पललस्तु राक्षसे, हे तिलपिष्टे

मले मांसे अम्लाले कोमलेऽप्यदनि। अथ घोरे बले मांसाः पलल परिपच्यते, अने.

पलाश. पलाशं छदने मतम्। शठीकिंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु, मे. पलाशः किंशुके शठ्यां हरिते राक्षसेऽपि च। पत्रे पलाशम्, वि. पलाशः किंशुकेऽस्त्रये। हरिते पलाशपत्रे भासने परिभाषणे, हे. इषपत्रे पलाशं स्यात् पलाशो राक्षसः स्मृतः। पलाशो हरितो वर्णः पलाशः शाश उच्यते, अने.

पलाशिन्. पलाशी द्रुमरक्षसोः, मे, वि. रक्षोद्रुमौ पलाशिनौ, त्रि.

पलिघ. पलिघः काचकलशे घटे प्राकारगोपुरे, मे, वि, हे.

पलित. पलितं शैलजे तापे केशपाके च कर्दमे, मे. पलितं शैलजे तापे पाण्डुकेशे च कर्दमे, वि. पलितं पङ्कतापयोः। पक्वकेशे केशपाके, हे. पलितं कर्दमेऽपि स्यात्, त्रि.

पल्यङ्क. पल्यङ्को मञ्चपर्यङ्कपर्यङ्कपर्यस्तिकासु च, मे, वि. पल्यङ्को मञ्चपर्यस्तयोः, हे. पर्यस्त्रामपि पल्यङ्कः, त्रि.

पल्ल(ल्लि). पल्लिरल्पग्रामकुड्योः स्त्री पल्लः स्थूलकुसूलके, मे, पल्ली कुटीग्रामकयोः पल्लः स्थूलकुसूलके, वि. पल्लिस्तु ग्रामके कुड्याम्, हे.

पल्लव. पल्लवोऽस्त्री किसलये विटपे विस्तरे बले। शृङ्गारेऽलक्तरागेऽस्त्री, मे. पल्लवः स्यात् किसलये विटपे विस्तरे बले। शृङ्गारेऽलक्तरागे च, वि. पल्लवः किसले बले। विटपे विस्तरेऽलक्तरागे शृङ्गारषिङ्गयोः, हे. पल्लवो विस्तरे पिङ्गे किसले विटपे बले, त्रि.

पल्लवित. अथ पल्लवितं लाक्षारक्ते सपल्लवे तते, मे. भवेत् पल्लवितं लाक्षारक्ते सप्रसवे तते, वि पल्लवितं सपल्लवे। लाक्षारक्ते, हे.

पवन. पवनं कुम्भकारस्य पाकस्थाने नपुंसकम्। निष्पावमरुतोः पुंसि, मे. पवनाख्या कुलालस्य पाकस्थानेऽपि मारुते। निष्पावे च, वि. पवनो वायुवत्सयोः। पवनं पुनरापाके, हे. पाकस्थाने कुलालस्य वाते च पवनः पुमान्, त्रि.

पवित्र. पवित्रं वर्षणे कुशे। ताम्रे पयसि च क्लीवं मेध्ये स्यादभिधेयवत्, मे. पवित्रं वर्षणे कुशे। पवित्रं ताम्रपयसो मेंध्ये चापि तदन्यवत्, वि. पवित्रं तु मेध्ये ताम्रे कुशे जले। अर्घोपकरणे चापि पवित्रा तु नदीभिदि, हे. पवित्रं कुशमेध्ययोः, त्रि. दर्भेऽपि पवित्रम्, श.

पशु पशु स्वर्गादिदेवाजे नाऽव्ययं पशु दर्शने, मे. पशुश्छागे, स्वगादिषु। प्रमथेऽपि च, हे. स्वगादौ प्रमथे पशुः, त्रि.

पशुपति. पशुपतिः पिनाकिनि हुताशने, हे.

पश्चात्. पश्चात् प्रतीचरां चरमेऽप्यधिकारेऽपि दृश्यते, मे. पश्चात् प्रतीचरां चरमे, वि, हे. प्रतीचरां चरमे पश्चात्, श.

पश्य. पश्यशब्दस्तु विस्मये। प्रशंसायामपि तथा, मे.

पश्यत्. पश्यत् स्यात् प्रशंसायां विस्मये च निगद्यते, मे.

पांशु पांशु धूलौ च सत्रार्थचिरसञ्चितगोमये, मे, वि.

पांशुल. पांशुलः पुंश्चले शम्भोः खट्वाङ्गे व्यत्यसतीभुवोः, मे. पांशुलः पुंश्चले शम्भोः खट्वाङ्गे पांशुला भुवि, हे. पांशुलो हरखट्वाङ्गे पुंश्चले पांशुला भुवि, हे.

पांशुचामर. सत्रात् पांशुचामरः पुंसि दूर्वाञ्चिततटीभुवि। वस्त्रापके प्रशंसायां पुरोटौ धूलिगुच्छके, मे, इत्येव दूर्वाञ्चिततटीभुवि। वस्त्रापके प्रशंसायां पुरोटौ धूलिगुच्छके, वि पांशुचामरः। वस्त्रापके प्रशंसायां दूर्वाञ्चिततटीभुवि। पुरोटौ धूलिगुच्छके, हे.

पाक. पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च, मे. पाकः पचने शिशुदैत्ययोः, हे. पाकः शिशौ जरानिष्ठापचनक्लेदनेषु च, वि. पाकौ पचनशावकौ, त्रि.

पाकल. पाकलं कुष्ठभैषज्ये पुंसि सत्रात् कुञ्जरज्वरे, मे. पाकलं कुष्ठभैषज्ये पाकलः कुञ्जरज्वरे, वि. पाकलो द्विरदज्वरे। पाकलं कुष्ठभैषज्ये, हे

पाक्य. पाक्यं विड़ाख्यलवणे यवक्षारे पुनः पुमान्, मे. पाक्यं विड़ाख्यलवणे यवक्षारे च दृश्यते, वि.

पाचन. पाचनं दण्डमूलादौ प्रायश्चित्ते च नानले। वाच्यवत् पाचयितरि स्फीताम्लान्तु योषिति, मे. v. पावन.

पाचल. पाचलं पाचने नाम्नौ राधनद्रव्यवातयोः, मे. पाचलो राधनद्रव्येऽप्यनिलानलयोरपि, वि. पाचलोऽनिले। अनले राधन-द्रव्ये, हे.

पाञ्चजन्य. पाञ्चजन्यस्तु कृष्णशङ्खे हुताशने, मे. पाञ्चजन्यः घोटगले शङ्खे दामोदरस्य च, हे.

पाटक. पाटकः सतान् महाकिष्कौ कण्टकान्तरवाद्ययोः। अक्षादिपातने मूलद्रव्यापचयरोधसोः, मे, वि. पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके। वाद्यभेदे महाकिष्कौ मूलद्रव्यापचयेऽपि च, हे.

पाटल. पाटला पाटली स्त्री त्रयादस्त्रः पुष्पे पुन र्न ना। आशुधान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्, मे. पाटलः श्वेतरक्ते त्रयादाशुव्रीहौ च पाटलः। पाटली पाटलापि स्त्र्यादस्त्रः पुष्पेऽपि पाटलम्, वि. पाटलन्तु कुङ्कुमश्वेतरक्तयोः। पाटलः त्रयादाशुव्रीहौ पाटला पाटलीद्रुमे, हे. आशुव्रीहिश्च पाटलः, त्रि.

पाटलिक. पाटलिकोऽन्यमर्मज्ञे छात्रे त्रयात् कालदेशिनि, श्रा.

पाटीर. त्रयात् पाटीरस्तु मूलके। केदारे वेणुसारे च वारिदे तितउन्यपि। त्रयाद्रङ्गे वातिके पुंसि, मे. पाटीरो वातिके रङ्गे मूलके तितउन्यपि। धाराधरेऽपि केदारे वेणुसारेऽपि चेष्यते, वि. पाटीरो मूलके रङ्गे तितउवातिकाम्बुदे। केदारे वेणुसारे च, हे.

पाठ. पाठश्च पठने ख्याते विद्धपर्ण्यां च योषिति, मे. पाठः त्रयात् पठने विद्धपर्ण्यां पाठापि पठ्यते, वि.

पाठीन. पाठीनो मीनभेदे त्रयात् पाठके गुग्गुलुद्रुमे, मे,

वि. पाठीनो गुग्गुलुद्रुमे। पाठके मीन भेदेऽपि, हे. पाठीनो गुग्गुलुद्रौ च, त्रि.

पाण्डु. पाण्डुर्ना नृपतौ सिते, मे. पाण्डुः कुन्तीपतौ सिते, वि, हे, त्रि.

पाण्डुकम्बल. स्यात् पाण्डुकम्बलः श्वेतसमावारप्रावभेदयोः, मे, हे. सम्रात् पाण्डुकम्बलः श्वेतकम्बले च शिलान्तरे, वि.

पाण्डुर. पाण्डुरं सम्रात् मरुवके वर्णे ना तद्वति त्रिषु, मे. पाण्डुरो वर्णतद्वतोः। पाण्डुरन्तु मरुवके, हे.

पात. पातो निपातने त्राते, मे. पातः सम्रात् पतने त्राते, वि. पातो भ्रंशे च रक्षिते, त्रि.

पाताल. पातालं नागलोके सम्राट् विवरे वड़वानले, मे. पातालं नागलोके सम्रात् पातालं वड़वानले, वि. पातालं वड़वानले। रसातले, हे. औौर्वानलेऽपि पातालम्, श.

पातिली. पातिली वागुरायां सम्रात् नारीपात्रप्रभेदयोः, मे. पातिली वागुरायां सम्रात् नारीमृत्पात्रभेदयोः, वि. पातिली मृत्तिकापात्रे नारीवागुरयोरपि, हे.

पातुक. पातुकः पतयालौ सम्रात् प्रपातजलहस्तिनोः, मे, वि. पातुको जलमातङ्गे पतयालुप्रपातयोः, हे.

पात्र. पात्रन्तु भाजने योग्ये स्रुवादौ नाक्षमन्त्रिणि। तीरद्वयान्तरे च, मे. पात्रन्तु भाजने योग्ये पात्रं तीरद्वयान्तरे। पात्रं स्रुवादौ पर्णेऽपि नाक्षमन्त्रिणि नेपथ्ये, वि. पात्रन्तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि। स्रुग्भाजनयो र्यज्ञभाण्डे नाट्यानुकर्तरि, हे. योग्यभाजनयोः पात्रम्, श. नदान्तराले पात्रं सम्राड्भाण्डे च, त्रि. शिष्टभाजनदक्षेषु पात्रशब्दः प्रवर्तते, धने.

पात्रट. पात्रटः कर्पटे पुंसि देहे सम्राड्भिधेयवत्, मे. ?

पात्रटीर पात्रटीरस्तु पुंस्यग्निः शुक्रव्यापारमन्त्रिणि। लोह-

कांसत्ररजत्यात्रे सिङ्घाणे पावकेऽपि च, मे. पालटीरो वधेरक्तो मुक्त-व्यापारसन्निभे। लोहकांस्यत्र रजत्यात्रे पिङ्गले पावकेऽपि च, वि. पालटीरस्तूपव्यापारसन्निभे। लोहकांस्यत्र रजत्याते सिङ्घाणकङ्कता-श्रयोः, हे.

पाद. पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च, मे, वि. पादो मूलोस्त्रतूर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते, हे. पादा रश्म्यङ्घ्रि-तूर्यांशाः, अ. पादस्तु न द्वयोः। मूले प्रत्यन्तशैले च, त्रि.

पादचत्वर. सत्रात् पादचत्वरश्छागे सैकते पिप्पलेऽपि च। करके परदोषैकभवक्तृपुरुषेऽपि च, मे. सत्रात् पादचत्वरश्छागे सैकते पिप्पलेऽपि च। करके परदोषैकभाजि पुरुषकेऽपि च, वि. पादचत्वरः करके परदोषैकभाषिणि। सैकते च्छगलेऽश्वत्थद्रुमे, हे.

पादप. पादपः पादपीठादौ पादुकायां तु पादपा, मे. पादपः पादपीठे द्रौ पादुकायां तु पादपा, वि. पादपो द्रौ पादपीठे पादपा पादरक्षणे, हे. पादुकायां स्त्रियां वृक्षे पादपीठे च पादपः, त्रि. पादपीठेऽपि पादपः, श.

पादपाशी. पादपाशी खण्डकायां शृङ्खलायामपि स्त्रियाम्, मे. पादपाशी खण्डकायां शृङ्खलाकटकेऽपि च, वि.

पान. पानं पीतिभाजनरक्षणे, मे. पानं पीतौ च रक्षणे, वि.

पानीय. पानीयन्तु जले क्लीबं पातव्ये वाच्यलिङ्गकम्, मे. पानीयं मेयवारिणोः, वि. पानीयं पेयजलयोः, हे. पानीयं पेयनीरयोः, त्रि.

पामर. पामरः खलनीचयोः, मे, वि. पामरो नीचमूर्खयोः, हे.

पायस. पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः, मे. पायसं परमान्ने स्यात् श्रीवासेऽपि च पायसः, वि. पायसः पायसं श्रीवास-परमान्नयोः, हे.

पायत्र. पायत्रं पानीयके निन्द्ये, वि

पार. पारं परतटे प्रान्ते न स्त्री पारा नदीभिदि। पारी पूरे च कर्कर्यां पादरज्ज्वां च दन्तिनः, मे. पारं परतटे प्रान्ते पारी पात्रीमत्रा-गयोः। गर्गरीपूरयोः पारी पादरज्ज्वां च दन्तिनः, वि. पारं प्रान्ते परतटे पारी पूरपरागयोः। पात्र्यां कर्करिकायाश्च पादबन्धे च हस्तिनाम्, हे.

पारशव. पारशवः पुमान्। परस्त्रीतनये शस्त्रे द्विजाच्छूद्रा-सुतेऽपि च, मे. भवेत् पारशवः पारस्त्रैणे शूद्रासुते द्विजात्। शस्त्रेऽपि, वि. पारशवोऽयसि। शूद्रायां विप्रतनये तनये च परस्त्रियाम्, हे. शूद्रायां विप्रतनये शस्त्रे पारशवो मतः, अ.

पारायण. पारायणं समासत्रे कार्त्स्न्ये च पारगतावपि, वि, मे. पारायणं मुनः। कार्त्स्न्ये च पारगतौ सद्भे, हे.

पारावत. पारावती गोपगीते नदीभिल्लवलीफले। पारावतः कल-रवे तथा मर्कटतिन्दुके, मे. पारावती गोपगीतिलवलीलतयो र्मता। पारावतः कलरवे शैले मर्कटतिन्दुके, वि. पारावतः कलरवे गिरौ मर्कट-तिन्दुके। पारावती तु लवलीफलगोपालगीतयोः, हे. पारावती गोप-गीतिलवलीफलयोरपि, त्रि.

पारावार. पारावारः समुद्रे ना तटद्वये नपुंसकम्, मे. पारावारः समुद्रे च पारावारं तटद्वये, वि. पारावारः पयोराशौ पारावारं तटद्वये,ऐ.

पारिजात. पारिजातः सुरतरौ पारिभद्रतरावपि, मे. पारिजातः सुरतरौ मन्दारे पारिभद्रके, वि. पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे, हे. पारिजातो देवतरौ मन्दारे पारिजातके, त्रि.

पारिप्लव. पारिप्लवस्त्वाकुले स्यात् चञ्चले च, मे. पारिप्लवस्त्वाकुल-चञ्चलौ, हे.

पारिभद्र. पारिभद्रश्च मन्दारे निम्बद्रौ देवदारुणि, मे. पारि-भद्रश्च मन्दारनिम्बपादपयो र्मतः, वि. पारिभद्रौ तु मन्दार-निम्बौ, हे.

पारुष्य पारुष्यं परुषत्वे च इर्ष्याख्ये पुंसि गीष्पतौ, मे. पारुष्यं.

पुरुषत्वे स्याद् वने शक्रस्य गोप्तरि। पारुष्यः, वि. पारुष्यस्तु बृहस्पतौ। पारुष्यं संक्रन्दनवनेऽपि च, हे.

पार्थ. पार्थोऽर्जुनेऽग्नौ जले क्लीवम्, मे. पार्थस्तु कुकुभे जिष्णौ, वि.

पार्थिव. पार्थिवो श्ये। पार्थिवी तु सीतायां स्त्री पृथिव्या विकृतौ त्रिषु, मे. पार्थिवो नृपतौ भूमिविकारे पार्थिवोऽन्यवत्। पार्थिवी स्याद्-मायां च, वि. पार्थिवो नृपतौ भूमिविकारे पार्थिवी तु मा, हे. घटादौ पार्थिवे राज्ञि, लि.

पार्पर. पार्परो भक्तसिक्थे स्यात् कौनाशे राजयक्ष्मणि। जराटेऽपि कदम्बस्य केशरे च गदान्तरे, मे. पार्परो भक्तसिक्थे स्यात् कौनाशे राज-यक्ष्मणि। जराटेऽपि कदम्बस्य केशरेऽपि च भस्मनि, वि. पार्परो भस्मनि यमे जराटे नीपकेसरे। क्षयरोगे भक्तसिक्थे, हे.

पार्वत. पार्वती सल्लकीदुर्गागोपालपुत्रिकासु च, मे. पार्वती सल्लकीदुर्गाद्रौपदीजीवनीषु च, वि.

पार्श्व. पार्श्वं कक्षान्तरे चक्रोपान्ते पर्शुगणेऽपि च, मे, वि. पार्श्वमन्तिके। कक्षाधोऽवयवे चक्रोपान्तपर्शुसमूहयोः, हे.

पार्ष्णि. पार्ष्णिः स्यादुन्मदस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च, मे. पार्ष्णिः पाश्चात्यभागे स्यात् पादमूलोन्मदस्त्रियोः। सेनापृष्ठे च कुम्भ्यां च, वि. पार्ष्णिः कुम्भ्यां चमूपृष्ठे पादमूलोन्मदस्त्रियोः, हे पार्ष्णिः पादे वूरुपृष्ठे, त्रि. पार्ष्णिः प्रथासारे चरणस्य पश्चिमे भागे, च पादग्रन्थेरधः पार्ष्णिः पार्ष्णिः स्याद्धाडिनीकटिः, श्रा.

पालङ्क. पालङ्कः शल्लकीशाकश्येनो वाजिपक्षिणि, मे, वि. पालङ्क शाकभेदे स्यात् शल्लक्यां वाजिपक्षिणि, हे.

पालि. पालिः कर्णलताग्रेऽस्त्री पंक्तावङ्कप्रभेदयोः। छात्रादि-देये स्त्री पाली यूकासश्मश्रुयोषिति, मे. पालिः कर्णलताग्रेऽस्त्री पंक्तावङ्क-प्रभेदयोः। पालिः प्रस्थे च यूकायां जातश्मश्रुस्त्रियामपि, वि. पालि-र्यूकास्त्रिपंक्तिषु। जातश्मश्रुस्त्रियां प्रान्ते सेतौ कल्पितभोजने। प्रशंसा-

कर्णलतयोरप्यथ प्रशस्तिचिह्नयोः, हे. पालिः स्त्र्यश्रश्मश्रुपंक्तिषु, श. सश्म-श्रुयुवती पालिः पंक्तिः कर्णलताऽपि च, त्रि. चिह्नमाहुर्बुधाः पालिं पंक्तिप्रदेशयोः। कर्णस्य लतिका पालिः पालिरश्रिरपि स्मृता, धा.

पावक. पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके। भल्लातके विडङ्गे (च) मे, वि, हे. शोधयितृनरेऽपि च, हे.

पावन. पावनन्तु जले शक्ये ना व्यासे पावके त्रिषु, मे. पावनन्तु जले कृच्छ्रे पावकाव्यासयो विंदुः। पावनः सिद्धके वह्नौ प्रायश्चित्ते च पावनम्॥ वाच्यवत् पावयितरि हरीतक्यान्तु पावनी, वि. पावन जलकृच्छ्रयोः। पावनः पावके सिद्धेऽध्यासे पावयितर्यपि॥ पावनी तु हरीतक्यां, हे.

पाश. पाशः केशादिपूर्वः स्यात् सङ्घे कर्णपूर्वकः। सुकर्णे च स्वसामर्थ्यात् मृगपक्ष्यादिबन्धने, मे. पाशः कचान्ते सङ्घार्थे कर्णान्ते शोभनार्थकः। छात्रादन्ते च निन्दार्थः पाशः पक्ष्यादिबन्धने, वि. पाशस्तु मृगपक्ष्यादिबन्धने। कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः। छात्रादन्ते च निन्दार्थः, हे. पाशः कचान्ते सङ्घार्थः कर्णान्ते शोभनार्थकः। छात्राद्यन्ते च निन्दार्थः पाशः पश्वादिबन्धने, त्रि.

पाशिन्. पाशी व्याधे च वरुणे, मे. पाशी पाशधरेऽप्यसौ, वि.

पाशुपत. पाशुपतो वकपुष्पे स्यात् पशुपत्यधिदैवते च तद्भक्ते, मे. पाशुपतो वकपुष्पे पशुपत्यधिदैवते, वि. पाशुपतः शिवभक्ते पशुपतेरधिदैवते, हे.

पिङ्ग. पिङ्गा गोरोचनाहिङ्गुनालिकाचण्डिकासु च। पिङ्गौ भस्मा पिशङ्गे ना बालके तु नपुंसकम्, मे. पिङ्गो भस्मो पिङ्गा हिङ्गुनालयां गोरोचनोमयोः। पिङ्गं बालके पिशङ्गे, हे. पिङ्गः पिशङ्गे पिङ्गौ तु भस्मा पिङ्गन्तु बालके। रामठे नाडिकायाञ्च पिङ्गा गोरो-चनोमयोः, वि.

पिङ्गल. पिङ्गलो नागभिद्रुद्रचण्डांशुपारिपार्श्वके। निधिभेदे

कपावग्नौ पुंसि स्त्रात् कपिलेऽन्यवत्। स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च, मे. पिङ्गलः सरानुसुनौ रुद्रे चण्डांशोः पारिपार्श्वके। निधिभेदे कपावग्नौ पिङ्गलः कपिलेऽन्यवत्। कराभिकायां वेश्यायां पिङ्गला कुमुदस्त्रियाम्, वि. पिङ्गलः कपिले वह्नौ रुद्रेऽर्कपारिपार्श्वके। कपौ मुनौ निधिभेदे पिङ्गला कुमुदस्त्रियाम्। कराभिकायां वेश्यायां नाड़िभेदे, हे. पिङ्गलः स्त्रात् कपावग्नौ, त्रि. वेश्यायामपि पिङ्गला, हा.

पिङ्गाश. पिङ्गाशी नीलिकायां नपुंसकम्। जातरूपे पुमान् पल्लीपतौ मत्स्यान्तरेऽपि च, मे. पिङ्गाशो मत्स्यभेदे स्यात् तथा पल्लीपतावपि। पिङ्गाशी नीलिकायाञ्च पिङ्गाशं जात्यकाञ्चने, वि. पिङ्गाशो मत्स्यपल्लीशौ पिङ्गाशी स्त्रात्तु नीलिका, हे.

पिचण्ड. पिचण्ड उदरे पशोरवयवे पुमान्, मे. पिचण्डमुदरे विद्यात् पशोरवयवेऽपि च, वि. पिचण्डोऽवयवे पशोः। उदरे च, हे.

पिचु. पिचु र्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे, मे. पिचुस्तूले च कर्षे च कुष्ठरोगेऽसुरान्तरे। भैरवस्त्रास्त्रभेदेऽपि पिचुः क्वापि प्रकीर्त्तितः, वि.

पिचुल. पिचुलो भावुकेऽपि स्त्रादिष्मले जलवायसे, मे, वि. पिचुलो निचुले तोयवायसे भावुकद्रुमे, हे.

पिच्चट. पिच्चटो नेत्ररोगे स्त्रात् क्लीवं सीसकरङ्गयोः, मे. पिच्चटो नेत्ररोगे स्त्रात् पिच्चटं त्रपुसीसयोः, वि. पिच्चटस्तु नेत्ररोगे पिच्चटं त्रपुसीसयोः, हे.

पिच्छ. पिच्छा पूगच्छटाकोशमोचाशाल्मलिवेष्टके। भक्तसम्भूतमण्डे च पंक्तावश्वपदामये। स्त्रियां पुंसि तु लाङ्गूले न द्वयो र्वर्हचूलयोः, मे. पिच्छा तु शाल्मलीवेष्टे मण्डे चाश्वपदामये। पंक्तौ पूगच्छटाकोशमोचाविषकिलेषु च। पिच्छः पुच्छे, वि. पिच्छः पुच्छे पिच्छं वाणे पिच्छा शाल्मलिवेष्टके। पंक्तिपूगच्छटाकोशमण्डेष्वश्वपदामये। मोचायां पिच्छिले,

हे. पिच्छा स्त्री भक्तमण्डेऽपि लाङ्गूले पिच्छमस्त्रियाम्, त्रि. पिच्छा पूगच्छटाकोषे कोशिकफलनालयोः, श.

पिच्छिल, (पिच्छल). पिच्छलो विज्जलेऽन्यवत्। स्त्री पोतिका-शिंशपयोः शाल्मलीसिन्धुभेदयोः, मे. पिच्छिला शाल्मलीसिन्धुभेदयोतकिका-सु च। पिच्छिला शिंशपायाञ्च पिच्छिलो विज्जलेऽन्यवत्, वि. पिच्छलः। विज्जले पिच्छिला पोतकिकायां सरिदन्तरे। शाल्मली शिंशपायाञ्च, हे. शाल्मली शिंशपा चैव पोतिका चापि पिच्छिला, त्रि. पिच्छलाः स्फोटिकाधात्रीवामावाताव्य,पांशवः, श.

पिञ्ज. पिञ्जा तूलहरिद्रयोः। बले क्लीवं वधे पुंसि व्याकुले त्रिषु, मे. पिञ्जा तूले हरिद्रायां पिञ्जस्तु व्याकुलेऽन्यवत्। पिञ्जो बले वधे पिञ्जम्, वि. पिञ्जा तूलहरिद्रयोः। पिञ्जो व्यग्रे वधे पिञ्जं बले, हे. पिञ्जा हिंसाहरिद्रयोः, त्रि.

पिञ्जर. पिञ्जरोऽश्वान्तरे क्लीवं स्वर्णे पीते च वाच्यवत्, मे. पिञ्जरं कनके वाजिभेदे पीते च पिञ्जरः, वि. पिञ्जरस्तु पीतरक्तेऽश्वभिद्यपि। पिञ्जरं शातकुम्भे स्यात्, हे.

पिटक. पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान्, मे. पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते, हे.

पिठर. पिठरः स्थाल्यां ना क्लीवं मुस्तामन्थानदण्डयोः, मे. पिठरो मुस्तामन्थानदण्डयोः। पिठरः स्यादुखायाञ्च, वि. पिठरं मथि मुस्तके। उखायाञ्च, हे. मुस्तेऽपि पिठरम्, श. स्थाल्यां मन्थेऽपि पिठरम्, त्रि.

पिण्ड. पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः। देहमात्रे निवापे च गोलसिह्लकयोरपि। ओड्रपुष्पे च पुंसि स्यात् क्लीवमा-जीवनायसोः। पिण्डी तु पिण्डतगरेऽलाबूखर्जूरीभेदयोः, मे. पिण्डं सान्द्रे बले बोले गृहांशे जीवनायसो.। पिण्डो देहे जवापुष्पे निवापे सिह्लकेऽपि च। पिण्डी स्यात्तगरेऽलाबूखर्जूरीभेदयोरपि, वि. पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्लयोः। कवले पिण्डन्तु येश्मैकदेशे

जीवनायसोः। दले सान्द्रे पिण्डऽलाबूखर्जूरीक्षागरेऽपि च, हे पिण्डः सान्द्रे गृहांशेऽङ्गे, त्रि.

पिण्डपुष्प. पिण्डपुष्पमशोके च जवायाश्च कुसुमेऽपि, मे. पिण्डपुष्प-मशोके च जपायाञ्च कुसुमेऽपि, वि. पिण्डपुष्पं जपायां स्यादशोके सरसीरुहे, हे. पिण्डपुष्पौ जवाशोकौ, त्रि.

पिण्डार. पिण्डारः क्षपणे गोपे महिषीरक्षके द्रुमे, मे. पिण्डारः क्षपणे क्षेपे महिषीरक्षके द्रुमे, वि. पिण्डारो भिक्षुके द्रुमे। महिषीपालके क्षेपे, हे

पिण्डित. पिण्डितं गुणिते घने, मे, हे, त्रि. पिण्डितं गुणिते सान्द्रे, वि

पिण्डिल. पिण्डिलो गणनापटौ। स्थूलजङ्घे, हे.

पिण्डीतक पिण्डीतकः मरौ नगरे मदनाख्यमहीरुहे, मे. पिण्डीतकः मरौ नगरे मदनद्रौ फणिज्जके, वि. पिण्डीतकः फणिज्जके। नगरे मदनद्रौ च, हे.

पिण्याक पिण्याकोऽस्त्री तिलकल्के हिङ्गु,वाह्लीकसिह्लके, मे. पिण्याकः सिह्लके हिङ्गौ तिलचूर्णेऽपि कुङ्कुमे, वि. पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके, हे. अथ सिह्लके। तिलकल्के च पिण्याकः, अ

पितामह पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च, मे. पितामहो विरञ्चे स्यात् तातस्य जनकेऽपि च, वि. पितामहः पद्मयोनौ जनके जनकस्य च, हे ब्रह्मण्यपि पितामहः, त्रि.

पित्तल पित्तला तोयपिप्पल्यां स्त्रियाम्यवत् पित्तसंयुते। क्लीबन्तु नैत्तमद्रव्ये, मे पित्तलं नैत्तमद्रव्ये पित्तलः पित्तसङ्गते। पित्तला तोयपिप्पल्याम्, वि पित्तलम्। पित्तवत्यारकूटे च पित्तला तोयपिप्पली, हे पित्तयुक्ते च पित्तलः, त्रि

पित्सत् पित्सन् विहङ्गमे पुंसि पतनेच्छौ पुनस्त्रिषु, मे पित्सन्

पिपतिषन् यथा। पतनेच्छौ विहङ्गे च, हे. पित्सन् शलेच्छुपक्षियोः, त्रि. पित्सन् पिपतिषन् एतौ पतनेच्छुविहङ्गयोः, वि.

पिनाक पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः, मे पिनाको रुद्रकोदण्डे पांशुवर्षत्रिशूलयोः, वि. पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः, हे. पिनाकोऽस्त्री शूलशङ्करधन्वनोः,- श

पिपतिषत्. भवेत् पिपतिषन् पित्सौ त्रिषु पुंसि विहङ्गमे, मे. प पित्सत्

पिप्पल पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ। निरंशुके पक्षिभेदे कणायां पिप्पली स्त्रिया, मे पिप्पलो बोधितरौ स्मृतः पक्षिभेदे निरंशुके। पिप्पलं वस्त्रच्छेदभेदेऽपि सलिले मतम्। कणायां पिप्पली प्रोक्ता, वि. पिप्पलं सलिले वस्त्रच्छेदभेदेऽथ पिप्पलः। निरंशुके द्वय-पक्षिभेदयोः पिप्पली कणा, हे. पिप्पलाख्या जलाश्वत्थयक्ष्म केवलवस्तुषु, अने. अथ तरौ पिप्पलः पिप्पलं जले, त्रि.

पिप्पलक. स्यात् पिप्पलकं वक्षोजाग्रन्ते सीवनसूत्रके, मे. पिप्पलकं स्तनाग्रन्ते मतं सीवनसूत्रके, वि. पिप्पलकं पुनः। चूचुके सीवनसूत्रेऽपि, हे. स्तनाग्रन्ते पिप्पलकं तथा सीवनसूत्रके, श.

पिप्लु. पिप्लु पुमान् क्लिन्ननेत्रे क्लिन्नाक्षे पुनरन्यवत्, मे. प. पिप्लु

पिशित. पिशितं मांसे मांसशी स्त्री, मे. पिशिता मांसिकायां स्त्रामांसिके पिशितं मतम्, वि. पिशितं मांस पिशिता मांसिका, हे.

पिशुन पिशुनं कुङ्कुमेऽपि च। कपिवक्त्रे च काके ना सूचक-क्रूरयोस्त्रिषु। स्पृक्कायां पिशुना स्त्री स्यात्, मे पिशुनं कुङ्कुमे सूचके चाभिधेयवत्। पिशुनः कपिवक्त्रे स्यात् स्पृक्कायां पिशुना मता, वि. पिशुनः सूचके खले। काकाखे पिशुना स्पृक्का स्यात् पिशुनन्तु कुङ्कुमे हे. पिशुनौ खलसूचकौ, श

पिटक पिटको ध्रणमुपादौ नेत्ररोगान्तरेऽपि च, मे. पिटको नेत्ररोगे शराहाद्यादिचमरेऽपि च, वि, हे

पीठमर्द. पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च, मे. पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्तौ नायकप्रिये, वि, हे.

पीड़ा. पीड़ा कृपाशिरोमालाऽवमर्दसरलद्रुषु, मे, वि. पीड़ार्त्तिमर्द्दनोत्तंसकृपासु सरलद्रुमे, हे. व्यथा कृपा च पीड़े द्वे, त्रि.

पीड़ित. पीड़ितं करणे स्त्रीणां यन्त्रिते बाधितेऽपि च, मे. पीड़ितं बाधिते स्त्रीणां करणे चापि यन्त्रिते, वि. पीड़ितं पुनः। बाधिते करणे स्त्रीणां यन्त्रिते मर्दितेऽपि च, हे.

पीत. पीतं पाने हरिद्रायां स्त्रियां गौरेऽभिधेयवत्, मे. पीतो वर्णनिपीतयोः। पीता हरिद्रा, हे. पीता स्मृता हरिद्रायां पीतं स्याद् गौरपीतयोः, वि.

पीतकावेर. पीतकावेरमित्येतत् कुङ्कुमे पित्तलेऽपि च, मे. पीतकावेरमिच्छन्ति पित्तले कुङ्कुमेऽपि च, वि पीतकावेरन्तु कुङ्कुमे। पित्तले, हे.

पीतचन्दन. पीतचन्दनमुद्दिष्टं कालीयकहरिद्रयोः, मे. पीतचन्दनमित्येतत् कालेयकहरिद्रयोः, वि. पीतचन्दनं स्याद्धरिद्रायां काश्मीरजन्मनि, हे.

पीतन. पीतनं पीतदारुणि। कुङ्कुमे हरिताले च पुमानाम्रातके मतः, मे. पीतनं हरिताले स्यात् कुङ्कुमे पीतदारुणि। आम्रातके पीतनश्च, वि, पीतनं हरिताले स्यात् पीतदारुणि कुङ्कुमे। पीतनः पुनराम्राते, हे.

पीतसार पीतसारो मलयजे गोमेदकमणावपि, मे, वि.

पीताम्बर पीताम्बरस्तु शैलूषे पुंसि कैटभसूदने, मे पीताम्बरः पद्मनाभे भवेत् पीताम्बरो नटे, वि. पीताम्बरोऽच्युतवते। नटे च, हे.

पीति पीति नोऽश्वे स्त्रियां पाने, मे. पीतिः पाने तुरङ्गे च, वि पीतिः पानेऽश्वे, हे अथ घोटके। पाने च पीतिः, त्रि.

पीय पीयोऽर्के पीयमम्बुनि, हे पीयोऽर्केऽग्नौ जले पीयम्, मे. पीयोऽर्के पीयमम्भसि, वि.

पीयु. पीयुः काले रवौ घूके ना, मे. पीयुः काले रवौ घूके, वि.

पीयूष. पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते, मे. पीयूषममृते नव्यसूतधेनोः पयस्यपि, हे.

पीलु. पीलुपदं परमाणौ मतङ्गजे। अस्थिखण्डे च तालस्य काण्डपाद्‌प्रभेदयोः, मे. पीलु गजे द्रुमे काण्डे परमाणुप्रसूनयोः। पीलु-स्तालास्थिखण्डे च, वि. पीलुः पुष्पद्रुमे काण्डे परमाणौ मतङ्गजे। तालास्थिखण्डे, हे. द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः, अ. परमाणौ च पीलुः स्यात्, त्रि. पीलुः स्याङ्गजशरयोः, इ. वृक्षजातिगजे पीलुः, धने.

पीलुपर्णी. पीलुपर्णी बिम्बिकायां मूर्वायामौषधीभिदि, मे. पीलुपर्णी तु बिम्बायां मूर्वायामोषधीभिदि, वि. पीलुपर्णौषधीभिदि। मूर्वायां बिम्बिकायाश्च, हे.

पीवर. पीवरः कच्छपे स्थूले, मे, वि, पीवरः स्थूलकूर्मयोः, हे.

पुंश्चल. पुंश्चली कालिकानीलयोः पुंश्चलः श्वपचेऽधमे, मे, वि. v.-पुंश्चल.

पुङ्ग. पुङ्गः स्यात् मङ्गलाचारे प्रराङ्गयेत्रनयोरपि, हे.

पुङ्गव. पुङ्गवः स्याद् बलीवर्दे प्रभेदेऽप्यौषधस्य च। उत्तरस्थः पुनः श्रेष्ठे, मे. पुङ्गवः श्रेष्ठे वृषभे भेषजान्तरे, वि. पुङ्गवो गवि भैषजेत्र प्रधाने चोत्तरस्थितः, हे.

पुच्छ. पुच्छः पश्चात्प्रदेशे स्याल्लाङ्गूले पुच्छमित्यपि, मे. पुच्छः पाश्चात्यभागे स्याल्लाङ्गूले पुच्छमित्यपि, वि.

पुटग्रीव. पुटग्रीवस्तु पुंलिङ्गो गर्गरीताम्रकुम्भयोः, मे. पुटग्रीवो गर्गरीताम्रकुम्भयोः, वि. पुटग्रीवस्तु गर्गर्यां ताम्रस्य कलशेऽपि च, हे.

पुटभेद. पुटभेदो नदीवक्रे पत्तनातोद्ययोरपि, मे, वि. पुटभेदस्तु नगरातोद्ययोस्तटिनीमुखे, हे.

पुटित. पुटितं स्याद्धस्तपुटे पाटितस्यूतयोरपि, मे, वि.

पुण्डरीक. पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च, मे. पुण्डरीकं सिताम्भोजे

सिताच्छत्रे च भेषजे। कोषकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे, वि. पुण्डरीकं सिताम्बुजे। सितच्छत्रे भेषजे च पुण्डरीकोऽग्निदिग्गजे। सहकारे गणधरे राजिलाहौ गजज्वरे। कोषकारान्तरे व्याघ्रे, हे. व्याघ्रेऽपि पुण्डरीको ना, श्र. सितच्छत्राब्जयोः पुण्डरीकं पुंसि तु दिग्गजे। व्याघ्रे च कोषकारे च, त्रि. पुण्डरीकः स्मृतो व्याघ्रः पुण्डरीकः कमण्डलुः। पुण्डरीकः सितो वर्णः पुण्डरीकं सरोरुहम्, अने. पुण्डरीकं सितं छत्रं पुण्डरीकं सिताम्बुजम्। व्याघ्रेऽपि पुण्डरीकः स्यात् पुण्डरीकश्च दिग्गजः, श्रा.

पुण्ड्र. पुण्ड्रो दैत्यविशेषे चुभेदयोरतिमुक्तके। चित्रे कृमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे, मे. पुण्ड्रो दैत्यविशेषे चुभेदयोरतिमुक्तके। चित्रे कृमौ पुण्डरीके पुण्ड्राः स्युः नीवृदन्तरे, वि. पुण्ड्रः कृमौ दैत्येक्षुभेदयोः। वासन्त्यां तिलके पुण्डरीके पुण्ड्रास्तु नीवृति, हे.

पुण्य. पुण्यं शोभने त्रिषु। क्लीवं धर्मे च सुकृते, मे. पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः, वि. पुण्यन्तु सुन्दरे। सुकृते पावने धर्मे, हे. पुण्यन्तु चार्वपि, श्र. पुण्यं सुविहितं कर्म पवित्रं पुण्यमुच्यते, अने.

पुण्यजन. अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च, मे. भवेत् पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च, वि. पुण्यजनस्तु सज्जने। गुह्यके यातुधाने च, हे. रक्षःस्वपि पुण्यजनम्, श्र.

पुत्तिका. स्यात् पुत्तिका पुत्तलिकाशुक्तिर्यो यावत्तके। ना पुत्ते शरभे धूर्ते शैलदृश्चप्रभेदयोः, मे स्यात् पुत्तिका पुत्तलिकाशुक्तिर्यो यावत्तके। पुत्रकः शरभे धूर्ते शैलदृश्चप्रभेदयोः, वि. पुत्तिका यावत्तके। पाञ्चालिकाशुक्तियोश्च पुत्रकः शरभे शठे। शैले दृश्चप्रभेदे च, हे.

पुद्गल. पुद्गलः सुन्दराकारे त्रिषु पुंस्यात्मदेहयोः, मे. पुद्गलः सुन्दराकारे पुद्गलश्चात्मदेहयोः, वि पुद्गलः। काये रूपादिमद्द्रव्येऽत्र सुन्दराकार आत्मनि. हे देहे चात्मनि पुद्गलः। शस्ताकारेऽपि. त्रि.

पुनर्. पुनरप्रथमे भेदम् । अधिकारे च भेदे च तथा पश्चान्तरे-ऽपि च, मे. पुनरप्रथमे भेदे, वि, हे, अ.

पुनर्वसु. पुनर्वसु र्ना मुनिभिद्यते। द्वित्वे तु भान्तरे, मे. पुनर्वसु र्भवेद्दृक्षे कात्यायनमुनावपि, वि. पुनर्वसुः स्यान्नक्षत्रे कात्या-यनमुनावपि. हे.

पुन्नाग पुन्नागस्तु सितोत्पले। जातिफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे, मे. पुन्नागः पुरुषश्रेष्ठे पाण्डुनागे सितोत्पले। जातिफले च पुन्नागः, वि. पुन्नागः पादपान्तरे। जातीफले नरश्रेष्ठे, हे. दृक्षे स्यात् पुंसि पुन्नागः, त्रि.

पुर्. पूः शरीरे पत्तने च, हे.

पुर. पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः। पुष्पादीनां दला-द्धत्तौ ना गुग्गुलौ न ना पुरि, मे. पुरं पाटलिपुत्रे स्यात् गृहोपरिगृहे पुरम्। पुरं पुरि शरीरे च गुग्गुलौ कथितः पुरः। पुरोऽव्ययं पूर्वकाले, वि. पुरं शरीरे नगरे गृहपाटलिपुत्रयोः। पुरस्तु गुग्गुलौ, हे. अगारे नगरे पुरम्। मन्दिरस्य, श. देहे पाटलिपुत्रे च पुरं स्याद् गुग्गुलौ पुरः, त्रि. पुरं देहेऽपि दृश्यते, श.

पुरतस्. पुरतः प्रथमाग्रयोः, मे. पुरतः प्रथमे चाग्रे, वि. पुरतोऽग्राग्रयोः, हे.

पुरस्. पुरोऽग्रे प्रथमे, मे. पुरोऽग्रे प्रथमे च स्यात्, वि, हे.

पुरस्कृत पुरस्कृतोऽभिशस्ताभियुक्ताग्रे कृतपूजिते, मे. पुरस्कृतं वीशत्ताभियुक्तयोरभिधेयवत्। अग्रे कृताभ्यर्चितयोः सिक्ते चापि पुर-स्कृतम्, वि. पुरस्कृतम्। पूजिते स्वीकृते सिक्तेऽभियुक्तेऽग्रकृतेऽपि च, '. पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतःकृते, अ

पुरस्तात् पुरस्तादिह्यपुर्प्राच्यां पुरार्थे प्रथमेऽग्रतः, वि, शा. पुरस्तात् प्रथमेऽग्रतः। पूर्वस्याञ्च पुरार्थे च, हे. पुरस्तात् प्रथमे प्राच्यामग्रतोऽर्थ-तोऽर्थयोः, मे

पुरा. पुरा पुराणे निकटे प्रवन्धातीतभाविषु, मे. पुरा पुराणनिकट-प्रवन्धातीतभाविषु, वि. पुरा भविष्यदासन्ने चिरातीतप्रतीपयोः, हे. स्यात् प्रवन्धे चिरातीते निकटागामिके पुरा, अ.

पुराण. पुराणं पञ्चलक्षणे। पणे पुंसि त्रिषु प्रत्ने, मे. पुराणं वाच्यवत् प्रत्ने पुराणं पञ्चलक्षणे, वि. पुराणं प्रत्नशास्त्रयोः। पुराणः षोड़शपणे, हे, अस्त्री कार्षापणे चास्त्री पुराणमनघे त्रिषु, त्रि.

पुरु. पुरुः प्राज्येऽभिधेयवत्। पुंसि सत्राद् देवलोके च दृप-भेदपरागयोः, मे. पुरुः प्राज्यपरागयोः। पुरुः स्वर्लोकदृपयोः, वि. पुरुः परागे प्रचुरे स्वर्लोकदृपभेदयोः, हे.

पुरुष. पुरुषः पूरुषे सांख्यज्ञे च पुन्नागपादपे, मे, वि. पुरुषः स्यात्मनि नरे पुन्नागे, हे. पुरुषावात्ममानवौ, अ. पुन्नागे पुरुषो नरे, त्रि.

पुरुहूत. उलूकः पुरुहूतः सत्रात् पुरुहूतः पुरन्दरः, धने.

पुरोडाश. पुरोडाशो हविर्भेदे चमसत्रां पिष्टकस्य च। हुतशेषे च, मे. पुरोडाशो हविर्भेदे चमसत्रां पिष्टकस्य च। रवे सोमलतायाश्च हुतशेषे च कीर्त्तितः, वि. पुरोडाशो हविर्भिदि। हुतशेषे सोमरसे चमसत्रां पिष्टकस्य च, हे. पुरोडाशो हविर्भेदे चमसत्रां पिष्टकस्य च। रवे सोमलतायाश्च हुतशेषे च कीर्त्त्यते, धने.

पुल. पुलः सत्रात् पुलके पुंसि विपुलेऽप्यन्यलिङ्गकः, मे. पुलन्तु विपुलेऽन्यवत्। पुलः सत्रात् पुलके चापि, वि. पुलः पुलके विपुले-ऽपि च, हे.

पुलक. पुलकः क्रमिभेदे प्रस्तरभेदे च मणिदोषे। रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे, मे. पुलकः क्रमिभेदे स्यात् गन्धर्व्वमणि-दोषयोः। गजान्नपिण्डे रोमाञ्चे हरिताले शिलान्तरे, वि. पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे। असुराणां मणिदोषे गन्धर्व्वे-गालके समो, हे. पुलको लोमहर्षणे, त्रि.

पुलाक पुलाकस्तुच्छधान्ये स्यात् संक्षेपे भक्तसिक्थके मे त्रि

पुलाको भक्तसिक्थे स्यात् संक्षेपासारधान्ययोः, हे. स्यात् पुलाकस्तुच्छ-धान्येऽ संक्षेपे भक्तसिक्थके, श्र. पुलाको भक्तसिक्थे च क्षुद्रधान्येऽपि कथ्यते, श. संक्षेपे भक्तसिक्थे च तुच्छधान्ये पुलाकवान्, अने.

पुष्कर. पुष्करं खेऽम्बुपद्मयोः। तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्र-काण्डयोः। कुष्ठौषधे द्वीपतीर्थभेदयोश्च नपुंसकम्। ना रोगनागविहग-नृपभेदेषु वारुणे, मे. पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः। ओषध-द्वीपविहगतीर्थराजोरगान्तरे। पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च, वि. पुष्करं द्वीपतीर्थाहिखङ्गरागौषधान्तरे। तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे, हे. पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः, अ. खड्गफले पुष्करम्, त्रि. तूर्यास्ये श्रीफले पद्मे कुञ्जराग्रकरे दिवि। द्वीपे तीर्थे निमित्ते च विशिष्टे पुष्करध्वनिः, अने. द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे। अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम्, श.

पुष्करिणी. पुष्करिणी जलाशये। हस्तिन्यां कमलिन्यां च, हे. अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये, मे. पुष्करिणी सरोजिन्यां हस्तिन्यां च जलाशये, वि.

पुष्कल. पुष्कलस्तु पूर्णे श्रेष्ठे, हे.

पुष्कलक. अथ पुष्कलको गन्धमृगे क्षपणकीलयोः, मे. स्मृतः पुष्क-लको गन्धमृगे क्षपणकीलयोः, वि. पुष्कलकस्तु कीलके। क्षपणे गन्धमृगे च, हे. पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च, त्रि.

पुष्टि. पुष्टिः स्त्री पोषणे वृद्धौ, मे. पुष्टिर्वृद्धौ च पोषणे, वि. पुष्टिः स्यात् पोषणे वृद्धौ, हे.

पुष्प. पुष्पं विकाशिकुसुमस्त्रीरजःसु नपुंसकम्, मे. पुष्पं विकाश आर्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यपि, हे. पुष्पं विकाशे कुसुमे स्त्रीणाञ्च रजसि स्मृतम्, वि. पुष्पं कुसुम आर्तवे, त्रि.

पुष्पक पुष्पकं रीतिपुष्पे च विमाने धनदस्य च। नेत्ररोगे तथा

रत्नकङ्कणे च रसाञ्जने। लौहकांस्ये स्वद्गारश्रकव्याञ्च नपुंसकम्, मे. पुष्पकं रीतिकानेत्ररोगयो रत्नकङ्कणे। कुवेरस्य विमाने च कासीसे च रसाञ्जने। लोहकांस्ये स्वद्गारश्रकच्यामपि पुष्पकम्, वि. पुष्पकं स्वन्तिकाङ्गारशकध्यां रत्नकङ्कणे। कासीसे श्रीदविमाने नेत्ररोगे रसाञ्जने। लोहकांस्ये रीतिकायाम्, हे. पुष्पकं कङ्कणेऽपि स्यात्, लि.

पुष्पदन्त. पुष्पदन्तस्तु दिङ्नागभेदे विद्याधरान्तरे, मे. पुष्पदन्तस्तु दिङ्नागे नागविद्याधरान्तरे, वि. पुष्पदन्तस्तु दिङ्नागे जिनभेदे गणान्तरे। पुष्पदन्तौ च चन्द्रार्कौ एकोक्त्या, हे.

पुष्य. पुष्यः कलियुगे स्मृतः। नक्षत्रमासयो र्भेदे, मे. v. तिष्य.

पुस्त. पुस्तं क्लीवे पुस्तके च लेपप्रादिशिल्पकर्मणि, मे. पुस्तन्तु पुस्तके लेप्यकर्मविज्ञानयोरपि, वि. पुस्तं शिल्पे लेप्यादिकर्मणि। पुस्तके, हे.

पूग. पूगस्तु क्रमुके वृन्दे फलसारेऽभिधेयवत्। नदीभेदे मलपूः स्त्री, मे. पूगस्तु क्रमुके वृन्दे, वि. पूगः क्रमुकसङ्घयोः, हे. पूगः क्रमुकवृन्दयोः, श्र.

पूजन. पूजनः श्वशुरवन्दनयोः, मे, वि, हे. पूजनस्तु श्वशुरेऽपि च, श्र.

पूत. पूतं त्रिषु पवित्रे च शटिते बहुलीकृते, मे. पूतं पवित्रे शटिते पूतश्च बहुलीकृते, वि. पूतन्तु पवित्रे बहुलीकृते, लि.

पूतना. पूतना तु हरीतक्यां दानवीरोगभेदयोः, मे. पूतना राक्षसीभेदे हरीतक्याञ्च पूतना, वि. पूतना तु हरीतकी। दुग्धदा वासुदेवस्य, हे. हरीतकी राक्षसी च पूतना, लि.

पूतिकाष्ठ. पूतिकाष्ठञ्च सरलदेवदारुमहीरुहोः, मे. पूतिकाष्ठञ्च सरले देवदारुद्रुमेऽपि च, हे. पूतिकाष्ठन्तु सरलदेवदारुमहीरुहोः, वि.

पूत्यण्ड. पूत्यण्डो गन्धैणे गन्धकीटके, हे. पूत्यण्डो गन्धकीटेऽपि तथा जन्त्वन्तरे पुमान्, मे. पूत्यण्डो गन्धकीटेऽपि तथा गन्धमृगे स्मृतः, वि. पूत्यण्डः पूतिकीटे च गन्धकीटे च दृश्यते, श्र.

पूर. पूरो जलसमूहे स्यात्, मणसंशुद्धिखाद्ययोः, मे. पूरो जल-

प्रवाहे स्याद् व्रणसंशुद्धिखाद्ययोः, वि. पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः, हे. पूरः स्यादेन प्रचये, त्रि. खद्वाते पूरणे पूरः, श्ने.

पूरण. पूरणः पूरके त्रिषु। क्लीवं पिण्डप्रभेदे च पूरणी शाल्मलिद्रुमे। पटारम्भकसूत्रेषु, मे. पूरणः पूरणे पिष्टभेदे पूरणमिष्यते। पटारम्भकसूत्रे च शाल्मली पूरणी मता, वि. पूरणं वाणतन्तुषु। पूरके पिष्टभेदे च, हे.

पूर्ण. पूर्णः शब्दे समग्रे ना पूरिते त्वभिधेयवत्, मे. पूर्णः शब्दे समग्रे च पूरिते चापि वाच्यवत्, वि. पूर्णः कृत्स्ने पूरिते च, हे.

पूर्णक. पूर्णकः स्वर्णचूडे स्यान् नासाच्छिन्नत्राम्नु पूर्णिका, मे, वि. पूर्णकः स्वर्णचूडके। पूर्णिका नासिकाच्छिन्नप्राम्, हे.

पूर्णपात्र. पूर्णपात्रं वस्तुपूर्णपात्रे वर्धापकेऽपि च, मे, वि. पूर्णपात्रन्तु जलादिपूर्णभाजने। वर्धापके, हे.

पूर्णानक. भवेत् पूर्णानकं वर्धापके च पटहेऽपि च, मे. भवेत् पूर्णानकं पूर्णपात्रे पटहपात्रयोः, वि. स्यात् पूर्णानकमानके। पात्रे च पूर्णपात्रे च, हे.

पूर्त. पूर्तं त्रिषु पूरिते स्यात् क्लीवं खातादिकर्मणि, मे. पूर्तं पूरितखातायोः, हे. पूर्तन्तु पूरिते च्छन्ने पूर्तं खातादिकर्मणि, वि. खातादौ पूरिते पूर्तम्. त्रि.

पूर्व (र्ब). पूर्वस्तु पूर्वजेऽपि स्यात् पूर्वः प्रागाद्ययोस्त्रिषु, मे. पूर्वाख्या पूर्वजेषु स्यादग्रे प्राचि च वाच्यवत्, वि. पूर्वस्तु पूर्वजे। प्रागग्रे श्रुतिभेदे च, हे. पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान्, अ.

पूर्व(र्ब)द्युस् पूर्वेद्युः प्रातःकाले स्यात् सद्यः गतवासरे, मे. पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे, वि. पूर्वेद्युः पूर्वाह्णभातयोः, हे. प्रातर्दिने च पूर्वत्वर्ये पूर्वेद्युरिष्यते. त्रि.

पूतना पूतना तु स्त्रियां सेनामात्रसेनाविशेषयोः, मे. पूतनाऽ-

नीकिनीसेनाचमूसैन्यान्तरेषु च, वि. पृतनाऽनीकिनी चमूः। सेना सैन्यविशेषश्च, हे.

पृथग्जन. पृथग्जनस्तु पुंलिङ्गः कथितो नीचमूर्खयोः, मे. पृथग्जनः स्मृतो नीचे मूर्खे च, वि. पृथग्जनोऽधमे जड़े, हे. मूर्खनीचौ पृथग्जनौ, श.

पृथिवीपति. पृथिवीपतिस्तु भूपाले ऋषभाख्यौषधौ पुमान्, मे. स्यात् पृथिवीपति र्भूप ऋषभाख्योषधेऽपि च, वि. पृथिवीपतिस्तु भूपे कृतान्ते ऋषभौषधे, हे.

पृथु. पृथुः स्यात् महति त्रिषु। त्वक्पत्र्यां कृष्णजीरे स्त्री पुमानग्नौ नृपान्तरे; मे. पृथु र्ना मे कृष्णजीरे चाग्न्यां पृथु महत्यपि, वि. पृथु विशाले भूपाले वाभिकाकृष्णजीरयोः, हे.

पृथुक. पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्, मे. पृथुकश्चिपिटे शिशौ, वि. पृथुकश्चिपिटेऽर्भके, हे. पृथुकौ चिपिटार्भकौ, श.

पृथ्वी. पृथ्वी भूमौ महत्याञ्च त्वक्पर्ण्यां कृष्णजीरके, मे. पृथ्वी भूमौ पृथ्वी हिङ्गुपत्रिकाकृष्णजीरयोः, वि.

पृदाकुः. पृदाकु र्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान्, मे. पृदाकुश्चित्रकव्याघ्रवृश्चिकेषु सरीसृपे, हे. पृदाकु र्वृश्चिके व्याघ्रे चित्रके च सरीसृपे, वि.

पृषत्. पृषन् मृगे पुमान् विन्दौ न द्वयोः, मे. पृषतवत् पृषन् मृगे। विन्दौ, हे. क्लीवं विन्दौ पृषन्मेघे, त्रि. ५. पृषत.

पृषत. पृषतोऽपि ना। अनयोश्च त्रिषु श्वेतविन्दुयुक्तेऽपुत्रभाविमौ, मे. पृषतो हरिणे विन्दौ पृषतश्चाश्वरोहिते। भवेत् पृषदिव श्वेते विन्दुयुक्ते तु वाच्यवत्, वि. पृषतोऽप्यनयो र्नरि, त्रि. ५. पृषत्.

पृष्ठ. पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे, मे. पृष्ठं चरममात्रे स्याद् देहस्यावयवान्तरे, वि. पृष्ठं पश्चिममात्रे स्याच्छरीरावयवान्तरे, हे.

पृष्ठशृङ्गिन्. पृष्ठशृङ्गी पुमान् दंभभीरौ षण्डे वृकोदरे, मे. पृष्ठशृङ्गी भवेद्दंभभीरौ षण्डे वृकोदरे, वि. पृष्ठशृङ्गी भीमसेने षण्डसैरिभयोरपि, हे. पृष्ठशृङ्गीति शब्दोऽयं दंभभीरौ वृकोदरे, हा.

पेचक. पेचको गजलाङ्गूलमूलोपान्ते च कौशिके, मे. पेचको गजलाङ्गूलमूलपर्यन्तघूकयोः, वि. पेचकः करिलाङ्गूलमूले घूके, हे. उलूके करिणः पुच्छमूलोपान्ते च पेचकः, अ.

पेटक. पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके, मे, वि. अथ पेटकम्। मञ्जूषायां समूहे च, हे. वृन्देऽपि पेटकोऽस्त्रियाम्, त्रि.

पेय. पेयं पातव्यपयसोः पेया श्राणाच्छमण्डयोः, मे, हे, वि.

पेशल. पेशलो रुचिरे दक्षे, मे, वि. पेशलः कुशले रम्ये, हे. चारौ दक्षे च पेशलः, अ.

पेशी. पेशी सुपक्वकलिके मांस्यां खड्गपिधानके। मांसपिण्डयां मण्डभेदे, मे. पेशी पललपिण्डयां स्यात् मांस्यां खड्गपिधानके। मण्डभेदेऽपि पेशी स्यात् सुपक्वकलिकेऽपि च, वि. पेशी मांस्यसिकोशयोः। मण्डभेदे पलपिण्डे सुपक्वकलिकेऽपि च, हे.

पोटगल. अथ पोटगलः पुंसि नले च काशमत्स्ययोः, मे. स्मृतः पोटगलः काशे नले पोटगलो झषे, वि. पोटगलो नले काशे झषे, हे. नले काशे पोटगलः, त्रि

पोत. पोतः शिशौ वहित्रे च गृहस्थाने च वाससि, मे. पोतः शिशौ वहित्रे च, वि. पोतः शिशौ प्रवहणे, हे. यानपात्रे शिशौ पोतः, अ.

पोत्र. पोत्रं वस्त्रे मुखाग्रे च शूकरस्य हलस्य च, मे, वि, हे. पोत्रं मुखाग्रे क्रोड़हलयोः, अ.

पौर. पौरं त्रिषु पुरोद्भूते कत्तृणे तु नपुंसकम्, मे. पौरस्तु कत्तृणे पौरः स्मृतः पुरभवेऽन्यवत्, वि. पौरं कत्तृणे पुरजे, हे.

पौरुष पौरुषं पुरुषस्य स्यात् भावे कर्मणि तेजसि। ऊर्ध्व॰.

वितस्तदोःपाणिरमाने त्वभिधेयवत्, मे. पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि। ऊर्ध्वविस्तृतदोःपाणिनृमानेऽपि च पौरुषम्, वि. पौरुषम्। ऊर्ध्वविस्तृतदोःपाणिपुरुषोन्मानतेजसोः। पुंसः कर्मणि भावे च, हे. पुंभावे तत्क्रियायाञ्च पौरुषम्, श्र. पौरुषं मानभेदे च, त्रि. मानविशेषेऽपि पौरुषव्यामौ, ह.

पौरुषेय. पौरुषेय. कृते पुंसां विकारे पुरुषस्य च। त्रिषु ना सङ्घवधयोः पुरुषस्य पदान्तरे, मे. पौरुषेयो विकारे स्यात् पुरुषस्य पदान्तरे। पुंसः समूहवधयोः पुरुषेण कृतेऽपि च, वि. पौरुषेयं पुरुषेण कृतेऽस्य च हिते बधे। समूहे च विकारे च, हे. पुरुषेण कृते कार्येत्र पुरुषाणां कदम्बके। विकारवधयोः पुंसः पौरुषेयपदं विदुः, श्रा.

पौर्णमास. पौर्णमासः पुमान् यज्ञभेदे स्त्री पूर्णिमातिथौ, मे. पौर्णमासपौर्णमास्यौ यज्ञपूर्णिमयोः क्रमात्, वि. पौर्णमासो यागभेदे पौर्णमासी तु पूर्णिमा, हे.

पौलस्त्य. पौलस्त्यस्तु कुवेरे स्याद् दशग्रीवे तु पुंस्त्रयम्, मे. पौलस्त्यो रावणे चैदे, वि, हे. पौलस्त्यौ रावणश्रीदौ, त्रि.

पौष. पौषो मासे तत्पूर्णिमातिथौ स्त्रियां, मे, पौषो मासविशेषे स्यात् पौषन्तु मह्युद्धयोः, वि. पौषो मासप्रभेदे स्यात् पौषन्तु मह्युद्धयोः, हे.

प्र. प्र प्रकर्षे गताद्यर्थे, मे, वि. प्र स्यात् गताद्यर्थप्रकर्षयोः, हे.

प्रकर. प्रकरः स्यात् पुमान् सङ्घे विकीर्णकुसुमादिषु। नपुंसकं जोङ्गके स्त्री नाट्याङ्गे चत्वरावनौ, मे. प्रकरश्चोपकारश्च विकीर्णकुसुमादिषु। संहतौ चोपकृत्यायां यथासंख्यमवस्थितौ॥ जोङ्गके प्रकरं प्रोक्तं प्रकरी चत्वरावनौ, वि. प्रकरः कीर्णपुष्पादौ संहतौ प्रकरं पुनः। जोङ्गके प्रकरी त्वर्थप्रकृतौ चत्वरावनौ, हे.

प्रकरणं प्रकरणं स्यात्प्रस्तावे रूपके, हे.

प्रकाण्ड प्रकाण्डो न स्त्री विटपे मलशाखान्तरे तरोः। प्रश्ने,

मे. प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः, वि. प्रकाण्डः स्तम्ब-शस्तयोः। स्कन्धमूलान्तरे तरोः, हे. स्तम्बे शस्ते प्रकाण्डोऽस्त्री, त्रि.

प्रकार. प्रकारस्तुल्यभेदयोः, मे. प्रकारः सदृशे भेदे, वि, हे. प्रकारौ भेदसादृश्येत्र, श्र.

प्रकाश. प्रकाशस्तु स्फुटे ख्यातः प्रहासातपयोरपि, मे. प्रकाशोऽति-प्रसिद्धे स्यात् प्रहासातपयोः स्फुटे, वि. प्रकाशः स्फुटहासयोः। उद्द्योते च प्रसिद्धे च, हे. प्रकाशोऽतिप्रसिद्धेऽपि, श्र.

प्रकीर्णक. प्रकीर्णकं चामरे स्यात्, विस्तारे ना तुरङ्गमे, मे. प्रकीर्णकं ग्रन्थभेदे चामरे विसरे हये, वि. प्रकीर्णकं तुरङ्गमे। चामरे विस्तरे ग्रन्थभेदे, हे. चामरे ग्रन्थभेदे च विस्तारेऽपि प्रकीर्णकम्, त्रि.

प्रकीर्य. प्रकीर्यत्रः पूतिकरजे विनिकीर्यंत्र तु वाच्यवत्, मे. प्रकीर्यः पूतिकरजे विनिकीर्णे तु वाच्यवत्, वि.

प्रकृति. प्रकृति र्गुणसाम्ये स्यात्, अमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गेऽसौ पचत्यादयः स्त्रियाम्, मे. प्रकृतिः सहजे योना-वमात्येत्र परमात्मनि, वि. प्रकृति र्योनिशिल्पिनोः। पौरामात्यादि-लिङ्गेषु गुणसाम्यस्वभावयोः। प्रत्ययात् पूर्विकायाञ्च, हे. प्रकृति-र्योनिलिङ्गे च, श्र. प्रकृति र्गुणसाम्ये स्यात् स्वभावामात्ययोरपि, त्रि. सत्त्वादीनां साम्यावस्थां प्रकृतिं वदन्ति तत्त्वज्ञाः। पौरामात्यादीनि च कारणकार्यत्रस्वरूपाणि, श्र.

प्रकोष्ठ. प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च। भूपकक्षान्तरेऽपि स्यात्, मे. प्रकोष्ठो विस्तृतकरे भूपकक्षान्तरेऽपि च। कूर्परा-दधरे चापि, वि. प्रकोष्ठः कूर्पराधस्तात् भूपकक्षान्तरेऽपि च। हस्ते च विस्तृतकरे, हे. प्रकोष्ठो बाहुगेहांशौ, त्रि. प्रकोष्ठ कूर्परस्याधः प्रकोष्ठो द्वारकोष्ठके, अने.

प्रक्रम. प्रक्रमः क्रमेऽवसरे, मे. प्रक्रमोऽवसरे क्रमे, वि, हे.

प्रक्रिया. प्रक्रिया ह्युत्पादने स्यात् अधिकारप्रकारयोः, हे

प्रखर. प्रखरो हयसन्नाहे कुक्कुरेऽश्वतरेऽपि च। पुंसि तिव्र-त्यन्तखरे, मे. प्रखरोऽश्वतरे शुनि। तुरङ्गानाञ्च सन्नाहे प्रखरोऽतिभृशे खरे, वि. प्रखरः पुनः। वेसरे हयसन्नाहे कुक्कुरेऽतिभृशे खरे, हे.

प्रगाढ़. प्रगाढ़ः स्यात्कृच्छ्र,दृढयोः, मे. प्रगाढ़ो दृढकृच्छ्रयोः, वि, हे. प्रगाढ़ं भृशकृच्छ्रयोः, य.

प्रग्रह. प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णे हलिपादपे, मे. प्रग्रहस्तु तुलासूत्रे बन्द्यां नियमने भुजे। हयादिरश्मौ रज्ज्वां च सुवर्णे हलिपादपे, वि. प्रग्रहः किरणे भुजे। तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हलिपादपे॥ बन्धने बन्द्यां, हे. प्रग्रह आबन्धनेऽनुग्रहः, ह. v. प्रग्राह.

प्रग्राह. प्रग्राहस्तु तुलासूत्रे हयादिप्रग्रहेऽपि च, मे. प्रग्राहः स्यात् तुलासूत्रे हयादीनाञ्च बन्धने, हे. तुलासूत्रेऽश्वादिरश्मौ प्रग्राहो प्रग्रहोऽपि च, श.

प्रघण (घाण) प्रघणस्ताम्रकुम्भे स्यादलिन्दे लोहमुद्गरे, मे, वि. प्रघाणोऽलिन्दके ताम्रकलशे लोहमुद्गरे, हे. प्रघणोऽस्त्रगृहांशयोः, त्रि.

प्रचण्ड. प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि, मे, वि. प्रचण्डः स्यात् प्रतापिनि। बलचे करवीरे च, हे.

प्रचलाक. प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे, मे. प्रचलाकः शराघाते बर्हिचन्द्रे भुजङ्गमे, वि प्रचलाको भुजङ्गमे। शराघाते शिखण्डे च, हे. शराहते च सर्पे च प्रचलाकं प्रचक्षते, श.

प्रचलाकिन्. प्रचलाकी मयूरे स्याद्भुजङ्गे चापि दृश्यते, मे. प्रचलाकी भुजङ्गे स्यात् चित्रमेखलकेऽपि च, वि प्रचलाकी सर्पे मयूरे, हे

प्रचेतस् प्रचेताः पाशिनि मुनौ ना प्रकृष्टहृदि त्रिषु, मे. प्रजनन प्रजननं योनौ जन्मन्यपि क्लीवम्, मे भवेत् प्रजननं

योनौ जन्मनि प्रजनेऽपि च, वि. प्रजननं प्रजने योनिजन्मनोः, हे.

प्रजा. प्रजा लोके च सन्ताने, मे. प्रजा सन्तानलोकयोः, वि. प्रजा लोके सन्ततौ च, हे. प्रजा स्यात् सन्ततौ जने, अ.

प्रजापति. प्रजापतिश्च दक्षादौ महीपाले विधातरि, मे. प्रजापतिं विधौ भूपे, वि. प्रजापतिर्ब्रह्मराजौ जामातरि दिवाकरे । वह्नौ त्वष्टरि दक्षादौ, हे. विधौ भूपे प्रजापतिः, त्रि.

प्रज्ञ. प्रज्ञस्तु पण्डिते वाचस्त्विज्ञो बुद्धौ तु योषिति, मे. प्रज्ञा बुद्धौ पण्डितेऽपि प्रज्ञो वाचावदिप्रज्ञे, वि. प्रज्ञः प्राज्ञ. प्रज्ञा तु प्रेसुषी, हे. प्रज्ञा संबुद्धिविज्ञयोः, अने.

प्रज्ञान. प्रज्ञानं बुद्धिचिह्नयोः, मे, अ. प्रज्ञानं लाञ्छने धियि, वि. प्रज्ञानं बुद्धौ चिह्ने च, हे.

प्रणय. प्रणयः प्रेम्णि विश्रम्भे याञ्चाप्रसरयोरपि, वि. प्रणयः प्रसरे प्रेम्णि याञ्चाविश्रम्भयोरपि । निर्वाणेऽपि, मे. प्रणयः प्रेमयाञ्चयोः । विश्रम्भे प्रसरे चापि, हे. प्रणयास्त्वमी । विश्रम्भयाञ्चाप्रेमाणः, अ.

प्रणाद. प्रणादस्तु सुखोत्सारशब्दे च श्रवणामये, मे. प्रणादस्सारशब्दे स्यात् प्रणादः श्रवणामये, वि.

प्रणाय्य. प्रणाय्योऽसम्मते प्रोक्तोऽप्यभिलाषविवर्जिते, वि. प्रणाय्यः कामवर्जिते । असम्मते, हे. प्रणाय्योऽसम्मतेऽपि स्यादभिलाषविवर्जिते, मे.

प्रणिधान. प्रणिधानं प्रयत्ने स्यात् समाधौ च प्रवेशने, मे. प्रणिधानं प्रयत्ने स्यात् प्रवेशे च समाहितौ, वि. प्रणिधानमभियोगे समाधानप्रयोगयोः, हे.

प्रणिधि. प्रणिधिः प्रार्थने चरे, मे. प्रणिधिश्चरे याञ्चायाम्, वि. प्रणिधि याचने चरे, हे. प्रणिधिः प्रार्थने चरे, अ.

प्रणिहित. अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते, मे. भवेत् प्रणिहितं लब्धे विन्यस्ते च समाहिते, वि. प्रणिहितस्तु संप्राप्तनिहितयोः समाहिते, हे.

प्रणीत. प्रणीतः संस्कृताग्नौ ना यद्यपात्रान्तरे स्त्रियाम्। त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते, मे. प्रणीतः संस्कृते वह्नौ विहिते च प्रवेशिते। निक्षिप्ते चोपसम्पन्ने प्रणीतो भेदवन्मतः, वि. प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते। संस्कृताग्नौ, हे.

प्रतति. प्रततिर्विस्तृतौ वल्लयाम्, मे. प्रततिर्विस्तृति र्लता, हे.

प्रतल. प्रतलं पातालभेदे तताङ्गुलिकरे पुमान्, मे. प्रतलः पातालभेदे तताङ्गुलिकरेऽपि च, हे. v. सुतल.

प्रताप. प्रतापस्तापतेजसोः, मे. प्रतापः स्वेदतेजसोः, वि.

प्रति. प्रति प्रतिनिधावित्थम्भूताख्यानाभिमुख्ययोः। मात्रार्थे-भागवीप्सासु लक्षणप्रतिदानयोः, मे. प्रति प्रतिनिधौ वीप्सालक्षणायां प्रयोगतः। मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति, वि. प्रतीत्थम्भूत-भागयोः। प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोरपि, हे. प्रकाशे सम्प्रदे माङ्गः प्रधानसदृशे प्रति, रु. प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः, श.

प्रतिकार. प्रतिकारः समे भटे, वि, हे.

प्रतिकृति. प्रतिकृतिरर्चायां प्रतिनिधिप्रतिकारयोश्च स्त्री, मे. प्रतिकृतिः प्रतीकारे प्रतिमायाश्च पूजने, वि. प्रतिकृतिश्च पूजिते। प्रतिमायां प्रतीकारे, हे. प्रतिकारे प्रतिकृतिः प्रतिबिम्बे, त्रि.

प्रतिकृष्ट. प्रतिकृष्टं मतं गुह्ये द्विराकृष्टे च कर्षिते, मे, वि. प्रतिकृष्टन्तु गुह्ये स्याद् द्विराकृष्टे च कर्षिते, हे.

प्रतिक्षिप्त. प्रतिक्षिप्तं वारिते स्यात् प्रेषिते पक्षके त्रिषु, मे. प्रतिक्षिप्तं प्रतिहते प्रेषिते च निराकृते, वि. प्रतिक्षिप्तं प्रतिहते निषिद्धे प्रेषितेऽपि च, हे. प्रेषितेऽपि प्रतिक्षिप्तम्, त्रि.

प्रतिग्रह. प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे ना ग्रहान्तरे, मे, वि. प्रतिग्रहः सैन्यपृष्ठे ग्रहभेदे पतद्ग्रहे। क्रियाकारे दानद्रव्ये तद्ग्रहे स्वीकृतावपि, हे.

प्रतिघ. प्रतिघः प्रतिघाते स्यात् क्रोधेऽपि परिकीर्त्तितः, मे. प्रतिघः

प्रतिघाते च रोषे च प्रतिघो मतः, वि. प्रतिघौ रुट्प्रतिघातौ, हे. प्रतिघो रोषघातयोः, लि.

प्रतिपत्ति. प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। सम्प्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति, मे. प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रमुणाते, वि. प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे, हे.

प्रतिपद्. प्रतिपत् स्त्री तिथौ मतौ, मे. प्रतिपत्तिथिसंविदोः, वि. प्रतिपत् संविदि तिथौ, हे. अथ प्रतिपत् तिथिसंविदोः, लि. प्रतिपत् प्रतिपत्तावपि, रु.

प्रतिपन्न. प्रतिपन्नोऽन्यत्रलिङ्गः स्याद्विख्यातेऽङ्गीकृतेऽपि च, मे. प्रतिपन्नः स्मृतो धीरे विख्यातेऽङ्गीकृतेऽपि च, वि. प्रतिपन्नस्तु विक्रान्तेऽङ्गीकृतेऽपि च, हे.

प्रतिपादन. प्रतिपादनन्तु दाने प्रतिपत्तौ च बोधने, मे. सदातृ प्रतिपादनं दाने प्रतिपत्तौ च बोधने, वि. प्रतिपादनं बोधनदानयोः, हे.

प्रतिबन्ध. प्रतिबन्धः कुलाचारः प्रतिबन्धो बलक्रिया, धने.

प्रतिभय प्रतिभयं भये। घोरेऽपि, मे. प्रतिभयं भये। भीष्मे, हे.

प्रतिमा. प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि, मे. प्रतिमा दन्तबन्धे स्याद् गजस्यानुकृतावपि, वि. गजानां दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि, त्रि.

प्रतिमान. प्रतिमानं प्रतिच्छायागजकुम्भान्तरालयोः, मे. प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः, वि, लि. प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे, हे.

प्रतियत्न. प्रतियत्नस्तु संस्कारलिप्सोपग्रहणेषु च, मे, वि. प्रतियत्नः संस्कारे स्याद् उपग्रहणलिप्सयोः, हे. प्रतियत्नावुभौ लिप्सोपग्रहौ, च. प्रतियत्नः संस्कारे लिप्सोपग्रहणयोश्च निर्दिष्टः, रु.

प्रतिरोधक. प्रतिरोधकस्तु चोरः स्यात् दुर्जनः प्रतिरोधकः, धने

प्रतिश्रय. प्रतिश्रयः सभायाश्चाश्रये, मे. प्रतिश्रयः सभायां स्याद् आश्रये च प्रतिश्रयः, वि. प्रतिश्रयः सभौकसोः, हे. सभायाञ्च प्रतिश्रयः, श.

प्रतिष्कश. प्रतिष्कशः सहाये स्याद् वार्त्ताहरपुरोगयोः, मे, वि. प्रतिष्कशः पुरोगमे। वार्त्ताहरे सहाये च, हे. वार्त्ताहरे पुरोगे च सहाये च प्रतिष्कशः, ति.

प्रतिष्ठा. प्रतिष्ठा गौरवे स्थितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः, मे. प्रतिष्ठा स्थानमात्रके। गौरवे यागनिष्पत्तिचतुरक्षरपद्ययोः, वि. प्रतिष्ठा गौरवे स्थितौ। छन्दोजातौ योगसिद्धौ, हे.

प्रतिसर. भवेत् प्रतिसरो मन्त्रभेदे मालेऽत्र च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डने। आरक्षे कस्तूत्रे च नियोज्ये त्वन्यलिङ्गकः, मे. आद्यः प्रतिसरं हस्तसूत्रे मालेऽपि मण्डने। व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षकङ्कणे। मन्त्रभेदेऽपि, त्रि. प्रतिसरश्चमूपृष्ठे नियोज्याकारसूत्रयोः। मन्त्रभेदे व्रणशुद्धे चारक्षे मण्डने स्रजि। कङ्कणे, हे. ना चमूपश्चे हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, श.

प्रतिसूर्य्यक. प्रतिसूर्य्यकमिच्छन्ति शकलासोपसूर्य्ययोः, वि.

प्रतिसृष्ट. प्रतिसृष्टः प्रेषिते स्यात् प्रत्याख्याते च वाच्यवत्, मे, वि. प्रतिसृष्टः पुनः प्रत्याख्याते च प्रेषितेऽपि च, हे. प्रत्याख्याते प्रेषिते च प्रतिसृष्टं त्रिलिङ्गकम्, ति.

प्रतिहत. प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः, हे. भवेत् प्रतिहतो द्विष्टे प्रतिस्खलितरुद्धयोः, वि, मे. द्विष्टेऽपि च प्रतिहतः, ति.

प्र(ती)तिहार. प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति, मे. प्रतीहारप्रतीहार्यौ द्वाःस्थे द्वारेऽप्यनन्तरे, वि. प्रतीहारो द्वारि द्वाःस्थे, हे. द्वारेऽपि प्रतिहारः, श. द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्य्यप्यनन्तरे, श.

प्रतीक. प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः, मे. प्रतीकोऽवयवे प्रोक्तः प्रतिकूलविलोमयोः, वि. प्रतीकोऽङ्गप्रतीपयोः, हे. प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्, श.

प्रतीवर. * प्रतीवरः प्रतिपालेन सम्रात् पुंजेन च, हे.

प्रतीत. प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु, मे. प्रतीतः सादरे ज्ञाते प्रख्याते प्राज्ञहृष्टयोः, वि. प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः, हे. ख्याते हृष्टे प्रतीतः, अ. प्रतीतः सादरेऽपि च, त्रि. v. वसन्तदूत.

प्रत्यच् (च्). प्रत्यग् दिग्देशकालेषु वाच्यवच्चिह्नितेऽव्ययम्, मे. v. उदच्.

प्रत्यय. प्रत्ययः प्रथितत्वे च सनादिज्ञानयोरपि। आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु, मे. प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु। प्रथितत्वे सनादौ चाप्यधीनज्ञानयोरपि। अतिक्रमे च दण्डे च विनाशे दोषकृत्ययोः, वि. प्रत्ययो ज्ञानरन्ध्रयोः। विश्वासे शपथे हेतौ आचारे प्रथितत्वयोः। अधीने निश्चये स्यादौ, हे. प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु। रन्ध्रे शब्दे, अ.

प्रत्यर्थिन्. प्रत्यर्थी वाच्यलिङ्गः स्यात् शत्रौ च प्रतिवादिनि, मे. प्रत्यर्थी कथितः शत्रौ प्रत्यर्थी प्रतिवादिनि, वि.

प्रत्यालीढ. प्रत्यालीढन्तु चरणन्यासभेदेऽशिते त्रिषु, मे.

प्रत्युपक्रमणीय. प्रत्युपक्रमणीयमुपस्थेये भौताशुकद्वये, मे, वि, हे.

प्रत्रप. प्रत्रपोऽस्त्र'खे वसौ, मे, वि. प्रत्रपः स्याद् वसौ प्रातः, हे.

प्रथम. प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्, मे. प्रथमः स्यात् प्रधानाद्योः, हे. आद्ये प्रधाने प्रथमस्त्रिषु, अ.

प्रदर. प्रदरो रोगभेदे स्याद् विदारे शरभङ्गयोः, मे. प्रदरो रोगभेदे स्यात् प्रदरः शरभङ्गयोः, वि. प्रदरः शरे। भङ्गे रोगे, हे. प्रदरा भङ्गनारीरुग्बाणाः, अ. प्रदरौ रोगमार्गणौ, अने.

प्रदेश. प्रदेशो देशमात्रे स्यात् तर्जन्यङ्गुष्ठसम्मिते। भित्तावपि च, मे. प्रदेशो देशमात्रे स्यात् तर्जन्यङ्गुष्ठसम्मिते। भित्तावपि प्रदेशः स्यात्, वि. प्रदेशो देशमात्रके। भित्तौ मानविशेषे च, हे.

प्रदोष. प्रदोषः समये दोषे, मे. प्रदोषः कालभेदे स्यात् प्रदोषो दोष ईश्वरते, वि. प्रदोषः कालदोषयोः, हे.

प्रधन. प्रधनं दारणे रणे, मे, वि. प्रधनं युधि दारणे, हे.

प्रधान. प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीवमेकत्वे तूत्तमे सदा, मे. प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्याद् एकत्वे तु सदोत्तमे, वि. प्रधानं प्रकृतौ बुद्धावुत्तमे परमात्मनि। महामात्रे, हे. प्रधानं परमात्मा धीः, अ. प्रधानं प्रकृतावपि, श. प्रधानं प्रकृतिः स्यान् प्रधानं विदुरुत्तमम्, अने.

प्रधूपिता. प्रधूपिता क्लेशितायां सूर्यैगन्तव्यदिश्यपि, मे, वि. प्रधूपिता क्लेशितायां रविगन्तव्यदिश्यपि, हे.

प्रपञ्च. प्रपञ्चः सञ्चयेऽपि स्याद् विस्तरे च प्रतारणे, मे. प्रपञ्चः सञ्चये प्रोक्तो विस्तरे च प्रतारणे, वि. प्रपञ्चो विप्रलम्भने। विस्तरे सञ्चये चापि, हे. विपर्यासे विस्तरे च प्रपञ्चः, अ.

प्रपात. प्रपातो निर्झरेऽतटे, मे. प्रपातो निर्झरे भृगौ, वि. प्रपातौ भृगुनिर्झरौ, त्रि. प्रपातः सौप्तिके भृगौ, हे.

प्रपितामह. प्रपितामह इतीरय विधौ पितृपितामहे, वि, मे.

प्रवाल. प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे, मे. प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे, वि. प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे, हे. प्रवालमङ्कुरेऽप्यस्त्री, अ. वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे, त्रि. वीणादण्डः प्रवालः स्यात् प्रवालः पल्लवः स्मृतः। प्रवालो विद्रुमः प्रोक्तः प्रवालः सबलो गजः, अने.

प्रभव. प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे। ज्ञानस्य चादिमस्थाने, मे. प्रभवो जलमूले स्यात् जन्मभूमौ पराक्रमे। चाद्योपलभ्ये स्थाने, वि. प्रभवो जन्मकारणे। चाद्योपलभ्ये स्थानेऽपां मूले मुनि-भिदापि, हे. स्यादाद्यजन्महेतुः प्रभवः स्थानं चाद्योपलभ्ये, अ.

प्रभाकर. प्रभाकरोऽग्निसूर्ययोः, मे.

प्रभाव. प्रभावः शक्तितेजसोः, मे, वि. प्रभावस्तेजसि शक्तौ, हे.

प्रभूत. प्रभूतमुद्गते प्राज्ये, मे, हे. प्रभूतं प्राज्य उद्गते, वि.

प्रमथ. प्रमथा स्याद्धरीतक्यां हरपारिषदे पुमान्, मे. प्रमथोऽपि गणे प्रोक्तः पथ्यायां प्रमथा भवेत्, वि.

प्रमद. प्रमदः सम्मदे मत्ते स्त्रियामुत्तमयोषिति, मे. प्रमदः सम्मदे मत्तकामिन्यां प्रमदा मता, वि. प्रमदो मुदि । प्रमदा स्त्री, हे.

प्रमाण. प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । इयत्तायाञ्च हेतौ च क्लीवैकत्वे प्रमातरि, मे. प्रमाणं नित्यमर्यादासत्यवादिप्रमातृषु । एकतायामियत्तायां हेतुशास्त्रेषु च स्मृतम्, वि. प्रमाणन्तु मर्यादासत्यवादिनोः । प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः, हे. प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु, श. शास्त्रे प्रमाणमिच्छन्ति स्थितौ हेतौ च कोविदाः, धने.

प्रमीढ. प्रमीढो मूत्रिते घने, वि, मे.

प्रमीत. प्रमीतं वाच्यलिङ्गं स्यात् प्रोक्षितेऽपि मृतेऽपि च, मे. प्रमीतस्तु प्रोक्षितेऽपि मृतेऽपि च, वि. प्रमीतं प्रोक्षिते मृते, हे.

प्रमुख. प्रमुखः प्रथमे श्रेष्ठे, मे, वि. प्रमुखं प्रथमे मुख्ये, हे. आद्यौ प्रधाने प्रमुखम्, त्रि.

प्रयाग. प्रयागस्तीर्थभेदे स्याद् यज्ञे शतमखाश्वयोः, मे, वि. प्रयागो वाजिशक्रयोः । यज्ञे तीर्थविशेषे च, हे.

प्रयोग. प्रयोगः कार्मणेऽपि स्यात् प्रयुक्तौ च निदर्शने,, मे. प्रयोगः कार्मणे प्रोक्तः प्रयुक्तौ च निदर्शने, वि. प्रयोगस्तु निदर्शने । कार्मणे च प्रयुक्तौ च, हे.

प्रयोजन. प्रयोजनं कार्यहेत्वोः, मे, वि, हे.

प्ररूढ. प्ररूढो जरठे बद्धमूले, मे. प्ररूढो जरठे प्रभूतः । बद्धमूले, वि. प्ररूढो जरठे वृद्धे, हे.

प्रलम्ब. प्रलम्बो दैत्यभेदे स्यात् त्रपुषेऽपि पयोधरे । लता-

ङ्कुरेऽपि शाखायां हारभेदे प्रलम्बने, मे. प्रलम्बो दैत्यभेदे स्यात् बालाङ्कुरकशाखयोः। प्रलम्बो हारभेदे स्यात् त्रपुसेऽपि पयोधरे, वि. प्रलम्बस्तु प्रलम्बनम्। दैत्यस्तालाङ्कुरः शाखा, हे. - प्रलम्बो दैत्यशाखयोः, त्रि. v. प्रालम्ब.

प्रलय. प्रलयो स्तुप्रकल्पान्तमूर्छापायेषु पुंस्त्रयम्, मे. प्रलयो मृतौ। संहारे नष्टचेष्टत्वे, हे.

. . प्रवचन. अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च, मे. प्रवचनं स्मृतं वेदे प्रकृष्टवचनेऽपि च, वि. स्यात् प्रवचनमागमे। प्रकृष्टवचने, हे.

प्रवचनीय. अथ प्रवचनीयश्च स्यात् प्रवक्तृप्रवाचयोः, मे. भवेत् प्रवचनीयाख्यं प्रवाच्ये च प्रवक्तरि, वि.

प्रवण. प्रवणो ना चतुष्पथे। क्रमनिम्नमहीभागोदारप्रह्वेषु च त्रिषु, मे. प्रवणः क्रमनिम्नोर्व्यामायत्ते च चतुष्पथे। प्रगुणेऽपि क्षणेऽपि स्यात्, वि. प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे। आयत्ते च, हे. प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे, अ.

प्रवर. प्रवरः सन्ततौ गोत्रे क्लीबं श्रेष्ठे तु वाच्यवत्, मे. प्रवरं सन्ततौ गोत्रे श्रेष्ठे तु प्रवरोऽन्यवत्, वि. प्रवरं सन्ततौ गोत्रे श्रेष्ठे च, हे.

प्रवह. प्रवहस्तु वहिर्यानामातरिश्वप्रभेदयोः, मे. प्रवहो वायुभेदे स्यात् वायुमात्रे वहिर्गतौ, हे.

प्रवारण. प्रवारणं निषेधे स्यात् काम्यदाने च न द्वयोः, मे. प्रवारणं निषेधे स्यात् काम्यदाने प्रवारणम्, वि. प्रवारणं काम्यदाने निषेधे च, हे.

प्रवाह. प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः, मे. प्रवाहो व्यवहारे स्यात् अपि स्रोतसि वारिणः, वि. प्रवाहो व्यवहाराम्बुवेगयोः, हे. प्रवाहो व्यवहारे च, त्रि.

प्रविदारण. प्रविदारणमाख्यातं सम्परायेऽवदारणे, मे. प्रवि-

दारणमाख्यातं सङ्गरे च विदारणे, वि. प्रविदारणम्। दारणे युधि च, हे.

प्रवृत्ति प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने। खवक्यादौ च (स्त्रियां), मे. प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि, वि. प्रवृत्ति र्वृत्तौ वार्त्तायां प्रवाहे, हे. वृत्तिवार्त्ताप्रवाहेषु प्रवृत्तिः, त्रि.

प्रवेणि. प्रवेणिः स्त्री कुथावेण्योः, मे. प्रवेणि र्वेणिकुथयोः, वि, हे.

प्रव्रजिता. अथ प्रव्रजिता मांसीमुण्डीरोतापसीषु च, मे. प्रव्रजिता तपस्विन्यां मुण्डीर्यां मांसिकौषधौ, वि. प्रव्रजिता तु मुण्डीर्यां तापस्यां मांसिकौषधे, हे.

प्रष्ठ. प्रष्ठस्त्वग्रगे श्रेष्ठे पुंसि चण्डालिकौषधौ, मे. प्रष्ठः श्रेष्ठाग्रयोरुक्तः प्रष्ठा चण्डालिकौषधौ, वि.

प्रष्ठहायन. स्त्रात् प्रष्ठहायनो धान्यविशेषे च मतङ्गजे, मे.

प्रसन्न. प्रसन्ना स्त्री सुरायां स्यात् स्वच्छसन्तुष्टयोस्त्रिषु, मे. प्रसन्ना मदिरायाञ्च प्रसादसहितेऽन्यवत्, वि. प्रसन्नं प्रसादवत्। प्रसन्ना तु मदिरायाम्, हे.

प्रसर. प्रसरः प्रणये वेगे, मे. प्रसरः प्रणये वेगे सङ्गरे च, वि. प्रसरस्तु सङ्गरे प्रणये जवे, हे. प्रसरः प्रणयेऽपि निर्द्दिष्टः, श.

प्रसव. प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च, मे. प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचने। लोकोत्पादे च, वि प्रसवः पुष्पफलयोरपत्ये गर्भमोचने। उत्पादे च, हे. स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने, श.

प्रसव्य. प्रसव्यं वाच्यलिङ्गं स्यात् प्रतिकूलानुकूलयोः, मे. प्रसव्यमनुकूले स्यात् प्रतिकूले च वाच्यवत्, वि. प्रसव्यस्तु प्रतिकूलानुकूलयोः, हे.

प्रसहन. प्रसहनमपि भङ्गे स्यात् घोषे, मे.

... प्रसाद. प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु, मे, वि. प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु। काव्यगुणे, हे स्यात् प्रसादोऽनुरागेऽपि, श. प्रसादस्त्वनुरोधने। स्वच्छे काव्यगुणे च, त्रि.

प्रसाधन. प्रसाधनी तु कङ्कत्यां सिद्धौ वेषे प्रसाधनम्, मे. प्रसाधनी कङ्कतिकासिद्ध्यो वेषे प्रसाधनम्, वि. प्रसाधनी कङ्कतिकासिद्ध्योः प्रसाधनं पुनः। वेषे, हे.

प्रसिद्ध. प्रसिद्धो भूषिते ख्याते, मे, हे. प्रसिद्धोऽलङ्कृतेऽपि च। विख्यातेऽपि च, वि. प्रसिद्धौ ख्यातभूषितौ, श.

प्रसू. प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोः स्त्रियाम्, मे. प्रसूरश्वाजनन्योश्च कन्दलीवीरुधोरपि, वि. प्रसूरश्वा जनन्यपि, हे. प्रसूरश्वाऽपि, श.

प्रसूत. प्रसूतं कुसुमे क्लीवं त्रिषु सञ्जातसूतयोः, मे. प्रसूतं वाच्यवज्जाते प्रसूतं कुसुमेऽपि च, वि. प्रसूतं जातपुष्पयोः, हे.

प्रसूति. प्रसूतिश्चङ्गवेऽपि स्यात् तनये दुहितर्यपि। स्त्रियाम्, मे. प्रसूतिस्तनयोत्पत्तौ तथा दुहितरि स्मृता, वि. प्रसूतिः सन्तादपत्ये प्रसवेऽपि च, हे. प्रसूति र्जन्मतोकयोः, त्रि.

प्रसून. प्रसूनो वाच्यवज्जाते क्लीवन्तु फलपुष्पयोः, मे. प्रसूनं वाच्यवज्जाते प्रसूनं फलपुष्पयोः, वि. प्रसूनन्तु प्रसूते फलपुष्पयोः, हे. प्रसूनं पुष्पफलयोः, श.

प्रसृत. प्रसृतः समसारे स्यात् विनीते वेगिते त्रिषु। अर्धाञ्जलौ तु पुंलिङ्गः जङ्घायां प्रसृता मता, मे. प्रसृतः समसारे स्यात् विनीते वेगितेऽपि च। अर्धाञ्जलौ तु प्रसृतं जङ्घायां प्रसृता मता, वि. प्रसृतस्त्वर्धाञ्जलौ वेगिविनीतयोः। तते च प्रसृता जङ्घा, हे. प्रसृतः कुञ्चिते पाणौ जङ्घायां स्त्री गते त्रिषु, त्रि.

प्रसेक. प्रसेकः सेचने स्रुतौ, मे, वि.

प्रसेव. प्रसेवः पुंसि वीणाङ्गे स्यूते च, मे. प्रसेवः कथितो धीरैर्वीणाङ्गस्यूतयोरपि, वि. प्रसेवस्तु वीणाङ्गस्यूतयो र्गोणौ, हे.

प्रस्तर. प्रस्तरो ग्रावणि मणौ, मे. प्रस्तरः प्रस्तरे ग्रावणि मणौ च, हे. व. संस्तर.

प्रस्थ. प्रस्थोऽस्त्रियां मानभेदे सानावच्छिन्नसानि. मे. प्रस्थः गिरुर-

मानयोः, वि. प्रस्थः सानौ मानभेदे, हे. प्रस्थोऽस्त्री सानुमानयोः, श. परिमाणेऽपि प्रस्थः, ह.

प्रस्फोटन. प्रस्फोटनं तु शूर्पे स्यात्ताड़ने च विकाशने, मे. प्रस्फोटनं भवेत् शूर्पे ताड़ने च प्रकाशने, वि. प्रस्फोटनं शूर्पे प्रकाशने। ताड़ने, हे.

प्रहत. प्रहतं वितते क्षुसे, मे, वि प्रहतं विस्तृते क्षसे, हे.

प्रहसन. प्रहसनमपि प्रहासे रूपकभेदे च परिहासे, मे. प्रहसनन्तु प्रहासाक्षेपयो रूपकान्तरे, हे. प्रहसनं भवेद् भङ्गे प्रहासाक्षेपयोरपि, वि.

प्रह्वि. प्रह्विः कूपः प्रह्विः सर', श्वे.

प्रह्लाद. प्रह्लादः प्रमदे दैत्ये, वि. प्रह्लादस्तु निनदे दानवान्तरे, हे.

प्राच्(ञ्च). प्राक् पूर्वस्मिन्नव्यन्तरे। अग्रे प्रभातेऽतीते च देशे दिक्कालयोरपि, मे. प्राक् प्रभातेऽप्यतीते च दिग्देशकालतः स्मृतम्। प्रागग्रेऽपि च पूर्वस्मिन् भवे प्रागव्यनन्तरे, वि. प्राक् पूर्वस्मिन् प्रभाते दिग्देशकालेष्वव्यन्तरे। अतीतेऽग्रे, हे. प्राक्शब्दो दिशि देशे च काले च वाच्यलिङ्गकः, मे.

प्राण. प्राणो हृद्मारुते बाले काव्यजीवेऽनिले बले। पुंलिङ्गः पूरिते वाच्यलिङ्गः पुंभूम्नि चासुषु, मे. प्राणो हृद्मारुते बाले काव्यजीवेऽनिले बले। वाच्यवत् पूरिते प्राणं प्राणाश्चासुषु कीर्तिताः, वि. प्राणोऽनिले बले। हृद्वायौ पूरिते गन्धरसे प्राणास्तु जीविते, हे बाले वाते' बले प्राणः पूर्णे पुंभूम्नि चासुषु, त्रि.

प्राणक. प्राणकः सत्त्वजातीये जीवकद्रुमबोलयोः, मे, वि. प्राणको जीवकतरौ सत्त्वजातीयबोलयोः, हे

प्राणनाथ. प्राणनाथो यमे ना स्यादिष्टे प्राणाधिपे मतः, मे.

प्राण्विद्रूरत. प्राण्विद्रूरतं वदन्ति युद्धेऽपि, ह

प्राप्ति. प्राप्तिः प्रतिमदेशयोः स्त्रियाम्, मे. प्राप्तिः प्रतिमदेशयोः, त्रि.

प्रादुस्. नामप्राकाश्ययोः प्रादुः, च. प्रादुः प्राकाश्य दृश्यते। सम्भावेश च प्रवृत्तौ च, मे.

प्राध्व. प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने, मे. प्राध्वं सुप्रणते चातिदूरवर्त्मनि बन्धने, वि. प्राध्वं दूरपथे प्रह्वे बन्धे, हे. प्राध्वं बन्धनमित्युक्तं प्राध्वं प्रह्वे च सूरिभिः, धने. प्रह्वबन्धनयोः प्राध्वं, श.

प्राध्वम्. प्राध्वं मवानुकूलयोः, मे, वि, हे.

प्रान्तर. प्रान्तरं विपिने दूरशून्यवर्त्मनि कोटरे, मे, वि. प्रान्तरं कोटरेऽरण्येऽ दूरशून्यपथेऽपि च, हे.

प्रास. प्रासं लब्धे समञ्जसे, मे. प्रासं विसे समञ्जसे, वि. लब्धे समञ्जसे प्रासम्, लि.

प्रासरूप. प्रासरूपो ज्ञरम्ययोः, मे. प्रासरूपो बुधे रम्ये, वि. प्रासरूपस्सरूपाभिरूपा बुधमनोज्ञयोः, च. V. सुरूप.

प्राप्ति. प्राप्तिं र्महोदये। लाभेऽपि च स्त्रियाम्, मे. प्राप्ति लाभे महोदये, वि. प्राप्ति र्महोदये लाभे, हे. उदयेऽधिगमे प्राप्तिः, श. उदयाधिगमौ प्राप्ती, धने.

प्राय. प्रायः पुमान् अनशने मृत्यौ बाहुल्यतुल्ययोः, मे. प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि, वि. प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः, हे. प्रायो भूम्न्यन्तगमने, श. प्रायो ना भूमतुल्ययोः, लि.

प्रार्थित. प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहते त्रिषु, मे. प्रार्थितं याचिते शत्रुसंरुद्धेऽभिहतेऽपि च, वि. प्रार्थितं हते। याचिते शत्रुसंरुद्धे, हे. अभियुक्तहतौ च प्रार्थितौ समौ, लि

प्रालम्ब प्रालम्बः स्यात् पयोधरे। लम्बुके हारभेदे च, हे. V. प्रलम्ब.

प्रावृषेण्य. प्रावृषेण्यः पुमान् नीपे प्रावृट्कालभवे त्रिषु, मे.

प्रासाद. प्रासादो देवनृपयो र्गृहे, मे. प्रासादः कथ्यते देवनरदेवनिवासयोः, वि. प्रासादो राजमन्दिरे। देवतायतने चापि, हे.

प्रिय प्रियो हृद्येऽन्यवत् पुंसि ऋद्धिनामौषधौ धवे, मे. प्रियो धवे मौहृद्ये च ऋद्धिनामौषधेऽपि च, वि प्रियो ऋद्ध्यौषधे हृद्ये धवे, हे.

प्रियंवद. प्रियंवदः खेचरे ना प्रियवाचि तु वाच्यवत्, मे. प्रियंवदः खेचरे स्यात् प्रियवाचि तु वाच्यवत्, वि. प्रियंवदः प्रियवादिनभश्चरविशेषयोः, हे.

प्रियक. प्रियकः पीतशालके । नीपे चित्रमृगे चासौ प्रियङ्गौ कुङ्कुमेऽपि च, मे. प्रियकस्तु चमूरौके नीपे काश्मीरजन्मनि । प्रियङ्गौ चित्रहरिणे पीतशालतरावपि, हे. प्रियकः पीतशाले स्यान्नीपे चित्रमृगेऽलिनि । कुङ्कुमे च प्रियङ्गौ च, वि. प्रियको मृगनीपयोः, त्रि प्रियको बीजसारश्च प्रियकौ द्वौपिचित्रकौ । प्रियकं प्रियतोयं स्यात् प्रियको मुक्तिको व्रती, धने.

प्रियङ्गु. प्रियङ्गुः स्त्री राजिकायाप्पयोरपि । फलिन्यां कङ्गुसंज्ञे च, मे. प्रियङ्गुः फलिनीकङ्गुपिप्पलीराजिकासु च, वि. प्रियङ्गु राजसर्षपे । पिप्पल्यां फलिनीकङ्ग्वोः, हे.

प्रीत. प्रीतं कृषितनर्मणोः,मे, वि

प्रीति. प्रीति र्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्, मे. प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीप्रमोदयोः, वि. प्रीतिः स्मरस्त्रियाम् । प्रेम्णि योगमुदोः, हे.

प्रेंखा. प्रेंखा नृत्तेऽश्वगणे कुटौ, मे, वि. प्रेंखा धौरोत्थयं नृत्यम्, हे. प्रेंखा नृत्तेऽश्वगणं प्रज्ञा, अ.

प्रेङ्खा. प्रेङ्खा पर्यटनेऽप्यश्वगतौ संवेशनान्तरे, मे प्रेङ्खा पर्यटने नृत्ये दोलायां वाजिनां गतौ, हे. प्रेङ्खा पर्यटने नृत्ये भवेदश्वगतावपि, वि.

प्रेत. प्रेतो भूतान्तरे पुंसि मृते स्याद् वाच्यलिङ्गकः, मे. प्रेतो मृते भूतविशेषे च, हे प्रेतो भूतान्तरे मृते, वि. प्रेतः प्राण्यन्तरे मृते, अ. प्रेतो मृते प्राणिभेदे, त्रि.

प्रेत्य. प्रेत्यामुत्र भवान्तरे, ह.

प्रेत्वन्. प्रेत्वा ना वासवे वाते, मे. [illegible]

प्रेमन्. प्रेमाऽस्त्री स्नेहहर्षयोः, मे. प्रेम नर्मणि च स्नेहे, वि. प्रेम तु स्नेहनर्मणोः, हे.

प्रैष. प्रैषः क्लेशे च मर्दने। उन्मादे प्रेषणे, मे. प्रैषः स्यात् प्रेषणे क्लेशे मर्दनोन्मादयोरपि, वि. प्रैषः प्रेषणपीडने, हे. प्रैषः प्रेषणमर्दने, अ.

प्रोक्षण. प्रोक्षणं सेचने वधे, मे, लि.

प्रोक्षित. प्रोक्षितं निहते सिक्ते, मे, वि. प्रोक्षितं सिक्तहतयोः, हे. सिक्ते तु प्रोक्षितं निहतेऽपि च, लि.

प्रोत. प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिङ्गकम्, मे. प्रोतं गुम्फित-वासयोः, हे. प्रोतं तु गुम्फिते वस्त्रे, वि.

प्रोथ. प्रोथोऽस्त्री हयघोणायां ना कटयामध्वगे त्रिषु, मे. प्रोथोऽध्वगे-ऽश्वघोणायां कटीस्त्रीगर्भयोरपि, वि. प्रोथोऽश्वघोणाध्वगयोः, हे. कटय-श्वघोणयोः प्रोथः, लि. प्रोथमित्युच्यते प्राज्ञैर्हलसूकरयो मुखे, रु.

प्रौढ. प्रौढो गजाङ्घ्रिपर्वणोः। वाच्यवन्निपुणे तर्के, मे. प्रौढो निपुणतर्के स्यात् प्रौढो हस्त्यङ्घ्रिपर्वणोः, वि. प्रौढो निपुणतर्के स्याद् गजाङ्घ्रिपर्वणोरपि, हे.

प्लक्ष. प्लक्षो जटीगर्दभाण्डद्वीपभित्कुञ्जराशने, मे. प्लक्षो द्वीपविशेषे स्यात् पर्कटीगर्दभाण्डयोः। पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः, वि. प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पर्कटे, हे.

प्लव. प्लवः स्यात् प्लवने भेले भेकेऽवौ श्वपचे कपौ। जलकाके च कुलके प्रवणे पर्कटीद्रुमे। कारण्डवाख्यविहगे शब्दे प्लतिगतौ पुमान्। कैवर्तमुस्तके गन्धतृणेऽपि स्यान्नपुंसकम्, मे. प्लवः कारण्डवे भेके कुलके भेलयौ कपौ। शब्दे प्लुतगतौ म्लेच्छे चण्डालजलकाकयोः। प्लवं गन्धतृणे प्रोक्तं कैवर्तीमुस्तकेऽपि च, वि. प्लवः प्लवे प्लुतौ कपौ। शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः। क्रमनिम्नमहीभागे कुलके जलवायसे। जला-न्तरे प्लवं गन्धतृणे मुस्तकमित्यपि, हे. प्लवो निषादे मर्कट्यां भेके भेले गतौ कपौ. लि

प्लवग(ङ्ग). प्लवगो वानरे भेके सारथौ चोष्णदीधितेः, मे, वि. प्लवगः कपिभेकयोः। अर्कसूते, हे. कपौ च प्लवगः, ध. प्लवङ्गः कपिभेकयोः, अने.

प्लवङ्गम. प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च, मे. प्लवङ्गमः कपौ भेके, वि, हे. कपिभेकौ प्लवङ्गमौ, ध.

प्लुत. प्लुतं तुरङ्गमगतौ क्लीबं पुंसि त्रिमात्रके, मे. प्लुतं तुरङ्गमगतौ प्लुतमाङ्गस्त्रिमात्रके, वि. प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके, हे. प्लुतः स्वरे च, त्रि. ह्रस्वं दीर्घं प्लुतं चेयं प्लुतं पिस्तव्यथा प्लुतिः, अने.

फ. फो यज्ञसाधने ख्याते झञ्झावातेऽपि पुंसत्रयम्। फं रयोक्तौ फूत्कृतौ च तथा निष्फलभाषणे, मे. कफे वाते फकारः स्यात् तथाख्याने प्रकीर्त्तितः। फूत्कारेऽपि च फः प्रोक्तस्तथा निष्फलभाषणे, ए. जनार्दनः शिखी रौद्री वामपार्श्वस्तनालयः। फट्कारः प्रोच्यते सद्भिः फकारः पान्तिमः प्लुतः, मा.

फटा. फटा तु फणदम्भयोः, मे. फटा तु कितवे फणे, हे. फटा च फणदम्भयोः, वि.

फणा. गोयिफाणे फणा ज्ञेया भुजङ्गमशिरः फणा। फणा फटा फणा छत्त्रा फणा सन्यनकुण्डली, अने.

फर्फरीक. फर्फरीकश्चपेटे स्यात् फर्फरीकन्तु मार्दवे, मे, वि. फर्फरीकन्तु मार्दवे। फर्फरीकश्चपेटायाम्, हे.

फल. फलं जातिफले सस्ये हैतव्ये त्रुटिलाभयोः। त्रिफलायां च कक्कोले प्रियङ्गौ च फली स्मृता, मे. फलं हेतुसमुत्थे स्यात् फलके त्रुटिलाभयोः। जातिफलेऽपि कक्कोले सस्यशाणाग्रयोरपि॥ फलिन्यां तु फला प्राङ्क्त्रिफलायां फलं क्वचित्, वि. फलं हेतुफले जातीफले फलकसस्ययोः। त्रिफलायां च कक्कोले शस्त्राग्रे त्रुटिलाभयोः॥ फली फलिन्याम्, हे. सस्ये हेतुकृते फलम्, ध. फलं जातीफले लाभे बाणाग्रे फलकेऽपि च, त्रि.

फलकिन्. फलकी मत्स्यभेदे ना वाच्यवत् फलकान्विते, मे. फलकी सत्रादिश्वित्साख्यमत्स्ये फलकपाणिके, वि.

फलिन्. फलिन्यग्निशिखायां स्त्री फलिन्यां फलिते त्रिषु, मे.

फलोदय. फलोदयः पुमान् लाभे त्रिदिवेऽप्यालयेऽपि च, मे. फलोदयः स्यात् त्रिदिवे लाभेऽपि च फलोदयः, वि. फलोदयो द्युलाभयोः, हे. स्वर्गलाभौ फलोदयौ, त्रि.

फाणि. फाणि गुडे करम्बे च स्त्रियाम्, मे. फाणि गुडकरम्बयोः, वि, हे, हा.

फाण्ट. अश्रमसृतेऽपि फाण्टम्, हा.

फाल. फालः पुंसि महादेवे कालिन्दीभेदनेऽपि च। क्लीबं सीरोपकरणे त्रिषु कार्पासवाससि, मे. फालं सीरोपकरणे कार्पासादिकवाससि, वि. फालस्तु वस्त्रभेदे फाल उत्तम्ग्गौ।' कुशिके च, हे.

फाल्गुन. फाल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे। तपस्यसंज्ञे माषि तत्पूर्णिमायां तु फाल्गुनी, मे. फाल्गुनस्तु तपस्ये स्यात् पूर्णिमायां तु फाल्गुनी। फाल्गुनः कथितः पार्थे नदीजे ककुभेऽपि च, वि. फाल्गुनो मासपार्थयोः। नदीजेऽर्जुनवृक्षे च फाल्गुनी पूर्णिमाभिदि, हे. फाल्गुनो मासि पार्थे च, त्रि.

फेनिल. फेनिलोऽरिष्टपादपे। ना सफेने त्रिषु क्लीबं कोलीमदनयोः फले, मे. फेनिलः स्यादरिष्टे च फेनिलं बदरीफले। मदनस्य फले चाथ फेनिलोऽरिष्टपादपे, वि. फेनिलं मदनफले बदरे फेनवत्यपि, हे. फेनिलं बदरेऽरिष्टे, त्रि.

फेरव. फेरवो जम्बुकेऽक्षसे, मे, वि. फेरवो राक्षसे फेरौ, हे.

ब. (बः पुमान् वरुणे सिन्धौ भगे तोये गते तु वा। गन्धने तन्तुसन्ताने पुंस्येव वपने स्मृतः, मे.) लगलन्तो भूधरस्य भगष्ठगतसाथा। सुरसो वरुणमुष्टिच बकारो आदिमो मतः, मा.

बक. बकस्तु बकपुष्पे स्यात् कल्के श्रीदे च रक्षसि, मे, वि. बको

भिदि श्रीदे शिवमल्लीवकोटयोः, हे. शिवमल्लयां वकः काष्ठे, लि.

बकेरुका. बकेरुका बलाकाभिद्वातावर्जितशाखयोः, मे, वि. बके-
ा बलाधिका। वातावर्जितशाखा च, हे.

बणिज्. अथ बणिक् स्त्रियाम्। बणिज्यायां पुमान् बाणिजके
करणान्तरे, मे. बणिक् बाणिजकजीविनि। बणिक् करणभेदे च बणि-
ायामपीष्यते, वि. बनिग् बानिजकजीविनि। बानिजं करणभेदे
हे.

बदर. बदरा गृष्टिकार्पासयोरेलापर्ण्यां स्त्रियां पुमान्। कार्पा-
सयास्थि बदरी कोली क्लीवन्तु तत्फले, मे. बदरं कोलिकार्पासयोः फले
याद्, बदरी तयोः। एलापर्ण्याञ्च बदरा विष्णुक्रान्तौषधावपि, वि.
दरा स्यादेलापर्ण्यां विष्णुक्रान्तौषधावपि। बदरी कोलिकार्पासयो-
दरन्तु तयोः फले। बदरस्तु कार्पासास्थि, हे.

बहुशिख. अथ दन्तशिखा स्त्री स्याद्गुञ्जटायां शिफौ लिपु, मे.
बहुशिखोञ्चटायां स्याद् बाले बहुशिखो मतः, वि. बहुशिखो बाले बहु-
शिखोञ्चटौषधे, हे.

बन्ध. बन्ध आधौ च बन्धने, मे, हे. बन्धस्त्वाधौ बन्धने, वि.

बन्धक. बन्धकः स्याद् विनिमये पुंश्चल्यां स्याञ्च बन्धकी, मे.
बन्धकः स्याद् विनिमये पुंश्चली स्याञ्च बन्धकी, वि. बन्धकस्तु सतत्रद्धारे-
ऽय बन्धकी। स्वैरिण्याञ्च करिण्याञ्च, हे करिण्यामपि बन्धकी, लि.

बन्धन. बन्धनं वधबन्धयोः, मे, वि.

बन्धु. बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे, मे. बन्धु-
र्बन्धूकपुष्पे स्याद् बन्धु भ्रातरि बान्धवे, वि. बन्धु भ्रातृबान्धवयोः, हे.

बन्धुर. बन्धुरं मुकुरे पुंसि क्लीबाह्नैलकल्कयोः। बन्धूके
बधिरे हंसे लिपु स्याद् रम्यनम्रयोः। बन्धुरा पण्ययोषायां स्त्रियां
भूम्नि च सक्तुषु, मे. बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरः। बन्धूके
च मिड्ढे च बन्धुरा पण्ययोषिति, वि. बन्धूरो रम्यनम्रयोः। बन्धुरस्तु

तयो र्हंसे बन्धुजीवविड़ङ्गयोः। बन्धुरा पण्ययोषायाम्, हे. बन्धुरं रम्य नम्रयोः, वि.

बन्धूक. बन्धूकं बन्धुजीवे सप्राद्, बन्धूकः पीतशालके, मे, वि बन्धूके: पीतशालके। बन्धुजीवे, हे.

बन्धूर. बन्धूरः शोभने नम्रे, मे. V. बन्धुर.

बन्ध्र. बन्ध्रस्त्वफलदृचादौ स्त्रियां सप्राद्प्रजःस्त्रियाम्, मे. बन्ध्रो ऽफलद्रुमे बन्ध्रा त्वप्रजातस्त्रियामपि, वि.

बभ्रु. बभ्रु वैश्वानरे शूलपाणौ च गरुड़ध्वजे। विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्, मे. बभ्रु विशाले नकुले कृशानौ वज्रे मुनौ शूलिनि पिङ्गले च, वि. बभ्रुः पिङ्गाग्निशूलिषु। विशाले नकुले विष्णौ, हे. विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु, श. बभ्रू नकुलपिङ्गलौ, अने. बभ्रुः स्यान्नकुलेऽपि च, ह

बर्बटी. बर्बटी पण्ययोषायां व्रीहिभेदे च योषिति, मे. बर्बटी व्रीहिभेदे सप्राद्, बर्बटी पण्ययोषिति, वि. बर्बटी व्रीहिभिद् वेश्या, हे. बर्बट्यौ व्रीहिभिद्वेश्ये, त्रि.

बर्बर बर्बरः पामरे केशे चक्रले नीवृदन्तरे। फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्, मे. बर्बरः पामरे केशविन्यासे नीवृदन्तरे। बर्बरा फञ्जिकायां तु बर्बरा शाकपुष्पयोः, वि. बर्बरो नीवृदन्तरे। बर्बरा तु फञ्जिकायां पामरे केशचक्रले। पुष्पे च बर्बरा शाके, हे.

बर्बरीक. बर्बरीकः केशविन्यासकर्मणि। शाकभेदे महाकाले, हे

बर्ह. बर्हं पिच्छे दले स्त्रियाम्, मे बर्हं दले केकिपिच्छे, वि. बर्हं पर्णे परिवारे कलापे, हे. दलेऽपि बर्हम्, श

बल बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्यप्रभेदे वायसेऽपि च। बलयुक्ते ऽन्यलिङ्ग. सप्राद् वाट्यालके तु योषिति, मे. बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। बलो हलायुधे दैत्यभेदे वलिभि वायसे। वाट्यालके बला ह्का, वि. बलं रूपे स्थामनि स्थौल्यसैन्ययोः।

योले बलस्तु बलिनि काके दैत्ये हलायुधे। बला त्वोषधिभेदे स्यात्, हे. स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः, श. बलं गन्धरसे रूपे स्थौल्ये वाच्यालक्रे स्त्रियाम्, त्रि. बलो हली बलं सैन्यं बलं सत्त्वं बलौषधी। रत्न-जोति बलो दैत्यो बला लक्ष्मी बला मही, अने. बलः काके, रु.

बलज. बलजं गोपुरक्षेत्रे शस्यसङ्गरयोरपि। बलजा वरयोषायां यूथराम्, मे. बलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि। बलजा वरयोषायां वसुमत्यामपि स्मृता, वि. बलजं गोपुरे शस्ये क्षेत्रसङ्गरयोरपि। सदा-कारे बलजा तु पृथिव्यां वरयोषिति, हे. बलजे क्षेत्रपूर्द्वारे बलजा बल्गु-दर्शना, श.

बलदेव. बलदेवो बले वाते त्रायमाणौषधौ स्त्रियाम्, मे. बलदेवः स्मृतो वाते कालिन्दीभेदनेऽपि च। बलदेवामपि प्राहुः त्रायमाणौषधे बुधाः, वि बलदेवस्तु कालिन्दीकर्षणे मातरिश्वनि। बलदेवा त्रायमाणा, हे.

बलभद्र. बलभद्रा त्रायमाणाकुमार्य्योः पुंसि सीरिणि, मे. बल-भद्रो रौहिणेये त्रायमाणौषधावपि। बलभद्रा कुमार्य्यां स्यात्, वि. बलभद्र-स्त्वनन्ते बलशालिनि। बलभद्रा कुमार्य्यां स्यात् त्रायमाणौषधावपि, हे.

बलाक. बलाका बकपंक्तौ स्याद् बलाका विसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकश्च बको मतः, वि.

बलाहक. बलाहको गिरौ मेघे दैत्यनागविशेषयोः, मे, वि. बला-हकोऽम्बुदे गिरौ। दैत्ये नागे, हे. गिरिमेघौ बलाहकौ, त्रि.

बलि. बलि दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च, मे. बलिश्चामर-दण्डे च जरया श्लथचर्मणि। उदरावयवे दैत्ये कस्पूजोपहारयोः। गृह-दारुविशेषे च गन्धकेऽपि क्वचित् मतः, वि. बलि दैत्योपहारयोः। करे चामरदण्डे च गृहदारूदरांशयोः। त्वक्सङ्कोचे गन्धके च, हे. बलिश्चामर-दण्डेऽपि, श. करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्, अ. बलि-र्जराश्लथत्वे च गृहदार्वसुरौ बली, त्रि. बलिः स्त्री मध्यभागोर्म्मि वलिचर्म

तयो हंसे बन्धुजीवविडङ्गयोः। बन्धुरा पण्ययोषायाम्, हे. बन्धुरं रम्य-नम्रयोः, त्रि.

बन्धूक. बन्धूकं बन्धुजीवे सम्राट्, बन्धूकः पीतशालके, मे, वि. बन्धूके; पीतशालके। बन्धुजीवे, हे.

बन्धूर. बन्धूरः शोभने नम्रे, मे. v. बन्धुर.

बन्ध्य. बन्ध्यस्त्वफलद्र्ष्यादौ स्त्रियां स्यादप्रजःस्त्रियाम्, मे. बन्ध्यो-ऽफलद्रुमे बन्ध्या त्वप्रजातस्त्रियामपि, वि.

बभ्रु. बभ्रुर्वैश्वानरे शूलपाणौ च गरुडध्वजे। विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्, मे. बभ्रु विशाले नकुले कृशानौ वभ्रे मुनौ शूलिनि पिङ्गले च, वि. बभ्रुः पिङ्गाग्निशूलिषु। विशाले नकुले विष्णौ, हे. विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु, अ. बभ्रू नकुलपिङ्गलौ, श्रने. बभ्रुः स्यान्नकुलेऽपि च, श्व.

बर्बटी. बर्बटी पण्ययोषायां व्रीहिभेदे च योषिति, मे. बर्बटी व्रीहि-भेदे सम्राट् बर्बटी पण्ययोषिति, वि. बर्बटी व्रीहिभिद् वेश्या, हे. वर्बट्यौ व्रीहिभिद् वेश्ये, त्रि.

बर्बर. बर्बरः पामरे केशे चकले नीवृदन्तरे। फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम्, मे. बर्बरः पामरे केशविन्यासे नीवृदन्तरे। बर्बरा फञ्जिकायां तु बर्बरा शाकपुष्पयोः, वि. बर्बरो नीवृदन्तरे। बर्बरा तु फञ्जिकायां पामरे केशचकले। पुष्पे च बर्बरा शाके, हे.

बर्बरीक. बर्बरीकः केशविन्यासकर्मणि। शाकभेदे महाकाले, हे.

बर्ह. बर्हं पिच्छे दले स्त्रियाम्, मे. बर्हं दले केकिपिच्छे, वि. बर्हं पर्णे परिवारे कलापे, हे. दलेऽपि बर्हम्, श्र.

बल बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः। पुमान् हलायुधे दैत्यभेदे वायसेऽपि च। बलयुक्तोऽन्यलिङ्गः सम्राट्, वाह्यालकै तु योषिति, मे. बलं गन्धरसे रूपे स्थामनि स्थौल्यसैनयोः। बलो हलायुधे दैत्यभेदे बलिनि वायसे। वाह्यालके बला तक्ता, वि. बलं रूपे स्थामनि स्थौल्यसैन्ययोः।

बोले बलस्तु बलिनि काके दैत्ये हलायुधे। बला त्वोषधिभेदे स्यात्, हे. स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः, अ. बलं गन्धरसे रूपे क्लीवं वाच्यालके स्त्रियाम्, त्रि. बलो हली बलं सैन्यं बलं सत्त्वं बलौषधी। रक्तगोति बलो दैत्यो बला लक्ष्मी बला मही, अने. बलः काके, ह.

बलज. बलजं गोपुरक्षेत्रे प्रसरसङ्गरयोरपि। बलजा वरयोषायां यूथ्याम्, मे. बलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि। बलजा वरयोषायां वसुमत्यामपि स्मृता, वि. बलजं गोपुरे प्रक्षेत्र क्षेत्रसङ्गरयोरपि। सद्वाकारे बलजा तु पृथिव्यां वरयोषिति, हे. बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना, अ.

बलदेव. बलदेवो बले वाते त्रायमाणौषधौ स्त्रियाम्, मे. बलदेवः स्मृतो वाते कालिन्दीभेदनेऽपि च। बलदेवामपि प्राज्ञः त्रायमाणौषधे बुधाः, वि. बलदेवस्तु कालिन्दीकर्षणे मातरिश्वनि। बलदेवा त्रायमाणा, हे.

बलभद्र. बलभद्रा त्रायमाणाकुमार्योः पुंसि सीरिणि, मे. बलभद्रो रौहिणेये त्रायमाणौषधावपि। बलभद्रा कुमार्यां स्यात्, वि. बलभद्रस्त्वनन्ते बलशालिनि। बलभद्रा कुमार्यां स्यात् त्रायमाणौषधावपि, हे.

बलाक. बलाका बकपंक्तौ स्याद् बलाका विसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकश्च बको मतः, वि.

बलाहक. बलाहको गिरौ मेघे दैत्यनागविशेषयोः, मे, वि. बलाहकोऽब्दे गिरौ। दैत्ये नागे, हे. गिरिमेघौ बलाहकौ, त्रि.

बलि. बलि दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च, मे. बलिश्चामरदण्डे च जरया श्लथचर्मणि। उदरावयवे दैत्ये करपूजोपहारयोः। गृहदारुविशेषे च गन्धकेऽपि क्वचिन् मतः, वि. बलि दैत्योपहारयोः। करे चामरदण्डे च गृहदारूदरांशयोः। त्वक्सङ्कोचे गन्धके च, हे. बलिश्चामरदण्डेऽपि, श. करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्, अ. बलिर्जराश्लथत्वे च गृहदार्वसुरौ बली, त्रि. बलिः स्त्री मध्यभागोर्मि बलिश्चर्म

जराकृति। बलिः पूजोपहारः स्यात् बलि दीनवसत्तमः, अने. बलिः करे, ह.

बल्य. बल्यं प्रधाने धातौ स्यात् क्लीवं बलकरे त्रिषु, मे. बल्यं प्रधाने धातौ स्यात् क्लीवं बलकरेऽपि च, वि. बलत्रं रेतोबलक्षतोः, हे.

बहु. बहु सत्रात् त्र्यादिसंख्यासु विपुलेऽप्यभिधेयवत्, मे. बहु सत्राद् विपुले त्र्यादिसंख्यासु त्वभिधेयवत्, वि. बहु भूयसि। त्र्यादिकासु च संख्यासु, हे. बहु विपुलसंख्ययोः, त्रि.

बहुक. बहुकः कर्कटेऽर्के च दात्यूहे जलखादके, वि. बहुको जलखादके। दात्यूहे कर्कटेऽर्के च, हे. V. बाहुक.

बहुफल. भवेद् बहुफलो नीपे नाऽस्त्रलक्ष्यान्तु योषिति,मे. भवेद् बहुफलाभिख्या मलपूनीपद्वयोः, वि. बहुफलः पुनः। नीपे बहुफली फल्गौ, हे.

बहुरूप. बहुरूपः शिवे विष्णौ धूनके सरटे स्मरे, मे, वि. बहुरूपः स्मरे विष्णौ सरटे धूनके शिवे, हे.

बहुल. बहुला नीलिकायां स्त्रादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च वाच्यवत् प्राज्यकृष्णयोः, मे. बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि। एलायां नीलिकायाञ्च बहुलाः कृत्तिकासु च। बहुलं प्राज्यनभसोः, वि. बहुलं भूरिमियतो बहुलः पावके शितौ। कृष्णपक्षे बहुला तु सुरभ्यां नीलिकैलयोः। बहुलास्तु कृत्तिकासु, हे. बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु, श्र. बहुलः कृष्णपक्षेऽपि, त्रि. बहुलाः कृत्तिका ज्ञेया गावश्च बहुला मताः, अने.

बा. उपमायां विकल्पे बा, श्र. V. वा.

बाणिजक. अथ बाणिजकः वाडवाग्नौ वणिजत्रपि, मे. बाणिजको वडवाग्नौ वणिजत्रपि, वि.

बाध. बाधा दुःखे निषेधे च, मे. बाधा दुःखनिषेधयोः, वि, हे, श्र. निषेधदुःखयो र्बाधः, त्रि.

बान्धव. बान्धवो बन्धुसुहृदोः, मे, वि. बान्धवो बन्धुमित्रयोः, हे.

बार्दल. बार्दलं दुर्दिने मेलानन्द्रायां बार्दलः स्मृतः मे. बार्दलं दुर्दिने मेलानन्द्रायामपि बार्दलः, वि. बार्दलं दुर्दिने मसत्राम्, हे. मेलानन्देऽपि बार्दलम्, हा.

बार्वटीर. बार्वटीरो रङ्क आम्रास्थ्यङ्कुरे गणिकासुते, मे. बार्वटीरस्त्रपावाम्रास्थ्यङ्कुरे गणिकासुते, वि. बार्वटीरस्त्रपुन्याम्रास्थ्यङ्कुरे गणिकासुते, हे.

बाल. बालो ना कुन्तलेऽश्वस्य करिणश्चापि बालधौ। नालिकेरे हरिद्रायां मल्लिकाभिदयापि स्त्रियाम्। वाचवलिङ्गोऽर्भके मूर्खे ह्रीवेरे पुंनपुंसकम्। अलङ्कारान्तरे मेध्ये बालो बाला त्रुटिस्त्रियोः, मे. बालः कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयोः। अलङ्कारान्तरे मेध्ये बालो बाला त्रुटिस्त्रियोः, वि. बालोऽस्त्रेऽश्वेभपुच्छयोः। शिशौ ह्रीवेरकचयो बाला तु त्रुटियोषितोः। बालो भूपान्तरे मेध्ये, हे. मूर्खेऽर्भकेऽपि बालः स्यात्, अ. बालो ह्रीवेरकेशयोः, लि. बालः केशो जलं बालं बालं कायष्ठ्यं स्मृतम्। बालो मूर्खः शिशु र्बालो बालो वेग उदाहृतः, अने.

बालक. बालकस्तु शिशावश्वे बालधौ हयहस्तिनोः। अङ्गुलीयकह्रीवेरवलये पुंसि बालिका। बालायां बालुकापत्रकाचलाकर्णभूषणे, मे. बालकोऽस्त्रे शिशौ केशे वाजिवारणबालधौ। अङ्गुलीयकह्रीवेरपारिहार्येषु बालकम्। बालिका बालुकाबालापिञ्जोलाकर्णभूषणे, वि. बालिका कर्णभूषणे। पिञ्जोलायां बालुकायां बालायां बालकः पुनः। शिशौ मूर्खेऽश्वगजयो र्बालधौ, हे. पिञ्जोला सिकता कर्णभूषा कन्या च बालिका, त्रि. बालकः खेचरो व्याघ्रो बालकः पृथुकः स्मृतः। बालकं गन्धद्रव्यश्च जटाजूटश्च बालकम्, अने.

बालिश. बालिशश्च शिशौ मूर्खे, मे. बालिशः शावके मूर्खे, वि. बालिशस्तु शिशौ मूर्खे, हे. शिशावस्ते च बालिशः च बालेऽपि बालिशः स्यात्, श.

वालेय. बालयो गर्द्दभे पुंसि स्टद्दौ बलिच्छिते त्रिषु, मे. वालेयस्तु गर्द्दभे। बल्यर्थे कोमलाङ्गारवल्लयाम्, हे. वालेयोऽङ्गारवल्लयां खरे बलिच्छिते त्रिषु, वि. वालेयौ स्टदुगर्द्दभौ, त्रि.

बाड्क. बाड्कः कर्कटे चार्कदाहस्रहे जलखातके, मे. V. बड्क.

बाड्ज. बाड्जः खलिये कीरे स्वयंजाततिलेऽपि च, मे, वि. बाड्जस्तु स्वयंजाततिले खलियकीरयोः, हे.

बीभत्स. बीभत्सो नाऽर्जुने क्रूरघृणात्मविकृतौ त्रिषु, मे. बीभत्सो विकृते क्रूरेऽप्यर्जुने च घृणात्मनि, वि. बीभत्सो विकृते क्रूरे रसे पार्थे घृणात्मनि, हे. बीभत्सो हिंस्रोऽपि, अ. रसे क्रूरे च विकृतौ बीभत्सस्त्रिषु नाऽर्जुने, त्रि.

बुक्कस. बुक्कसो नीलिकाकाल्यो र्बुक्कसः श्वपचेऽधमे, हे. V. पुक्कस.

बुद्ध. बुद्धो जिने लब्धवर्णे पुंसि स्याद्बुधितेऽन्यवत्, मे. बुद्धो जिने च धीरे च सौम्ये च बुधितेऽपि च, वि. बुद्धः पण्डिते बुधिते जिने, हे. बुद्धो ज्ञाते जिने बुधे, त्रि.

बुध. बुधः सौम्ये च पण्डिते, मे. बुधः सौम्ये कवौ, हे. बुधः कवौ रौहिणेये, वि. बुधस्त्वी पण्डितेऽपि, अ. रौहिणेयकवी बुधः, त्रि.

बुधान. बुधानस्तु गुरौ विज्ञे, मे. बुधानः पण्डिते गुरौ, वि.

बुध्न. बुध्नो ना मूलरुद्रयोः, मे. बुध्नः शिफायां रुद्रे च, वि. बुध्नस्तुखिण्डगिरीशयोः, हे. V. ब्रध्न.

बृ(वृ)हती. बृहती वसनाकारे। छन्दोभित्क्षुद्रवार्त्ताकीवारिधानीषु वाचि च। कण्टकारीमहत्योश्च, मे. बृहती क्षुद्रवार्त्ताक्यां कण्टकार्यां च वाचि च। वारिधान्यां महत्याश्च छन्दोवसनभेदयोः, वि. बृहती क्षुद्रवार्त्ताक्यां छन्दोवसनभेदयोः। महत्यां वाचि वार्धान्याम्, हे. बृहती क्षुद्रवार्त्ताकीच्छन्दोभेदे महत्यपि, अ.

बोधन. बोधनं गन्धदीपने। बोधनी बोधिपिप्पल्योः, मे. बोधनी बोधिपिप्पल्यो र्बोधनं गन्धदीपने, वि.

बोधि. बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे, मे. बोधिः समाधिभेदे स्त्रयाद् बोधिः पिप्पलपादपे, वि. बोधि र्बौद्धसमाधौ चार्हद्धर्मांशौ च पिप्पले, हे.

ब्रध्न ब्रध्नो गिरिश्मूलयोः, हे. v. बुध्न.

ब्रह्मन्. ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदो र्विप्रे, मे. ब्रह्मा विरिञ्चिद्विजयो ऋत्विक्चन्द्रार्कयोगयोः। ब्रह्म मोक्षं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः, वि. ब्रह्म तु तपसि ज्ञाने वेदेऽध्यात्मे द्विजे विधौ। ऋत्विग्योगभिदोश्च, हे. वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः, अ. वेदाध्यात्मब्राह्मणहिरण्यगर्भेषु कथ्यते ब्रह्म, रु.

ब्रह्मण्य. ब्रह्मण्यो ब्रह्मसाधौ स्त्रयाद् ब्रह्मदारुशनैश्चरे, मे. ब्रह्मण्यो ब्राह्मणो हिते। शनैश्चरे, हे. ब्रह्मण्यो ब्रह्मसाधौ स्त्रयाद् ब्रह्मण्यश्च शनैश्चरे, वि.

ब्रह्मपुत्र. ब्रह्मपुत्रः क्षेत्रभेदे नदभेदे च पुंस्त्रयम्, मे.

ब्रह्मबन्धु. ब्रह्मबन्धुरधिक्षिप्ते निर्देशे ब्राह्मणस्य ना, मे. ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मनाम्, वि. ब्रह्मबन्धु र्निन्द्यविप्रे बान्धवे ब्राह्मणस्य च, हे. ब्रह्मबन्धुरधिक्षेपे निर्देशे, अ.

ब्राह्मण. ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्। भूमिदेवे तु पुंलिङ्गः फञ्जिकाश्वयोः स्त्रियाम्, मे. ब्राह्मणी फञ्जिकास्पृक्काहिजपतीषु विश्रुता। विप्रे तु ब्राह्मणो वेदे ब्राह्मणं विप्रसंहतौ, वि. ब्राह्मणं विप्रसंहतौ। वेदे च ब्राह्मणो विप्रे, हे. मन्त्राख्यवेदे विप्रौघे क्लीबं ना ब्राह्मणो द्विजे, त्रि.

ब्राह्मण्य. ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मनाम्, मे. ब्राह्मण्यं ब्राह्मणत्वे स्यात् समूहे च द्विजन्मनाम्, वि. ब्राह्मण्यं ब्रह्मसङ्घेऽपि, त्रि.

ब्राह्मी ब्राह्मी तु फञ्जिकायां स्याच्छाकमत्स्यप्रभेदयोः। ब्राह्मी

तु भारतीसोमवल्लरीब्रह्मशक्तिषु, मे. ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु। फञ्जिकापङ्कगण्डिकाशाकभेदेषु च स्मृता, वि. ब्राह्मी तु भारती। शाकभेदः पङ्कगण्डी हञ्जिका सोमवल्लरी। ब्रह्मशक्तिः, हे.

भ. भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद् भ्रमुनन्द्रने, मे. भा स्यात् मयूखे शुक्रे भं नक्षत्रं च प्रकीर्त्तितम्, वि. भः शुक्रे भमुड़ो भांऽशो, हे. भमक्ते भ्रमुजे पुमान्, त्रि. नक्षत्रे भं बुधाः प्राहु र्भवने भः प्रकीर्त्तितः। दीप्ति र्भा स्यात्, ए. विश्वमूर्त्ति र्हिरण्डेशो निद्रा नाभिगतोऽपि च। भ्रकुटी च भरद्वाजो भकारश्च जयावहः, मा.

भक्त. भक्तमन्ने तत्परे च, हे.

भक्ति. भक्ति र्विभागे सेवायां स्त्रियाम्, मे, वि. भक्तिः सेवागौणवृत्त्यो र्भङ्ग्यां श्रद्धाविभागयोः, हे. सेवाविभागयो र्भक्तिः, त्रि.

भग. भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ, मे. भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु। रूपवीर्यप्रयत्नेच्छाश्रीधर्मैश्वर्ययोनिषु, हे. भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु। यशोवीर्यप्रयत्नेच्छाश्रीधर्म रविमुक्तिषु, वि. भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिषु, श. भगं वैराग्ययोनीच्छाज्ञानैश्वर्येषु, त्रि. स्त्रियां यशसि सौभाग्ये योनौ कान्तौ महिम्नि च। सूर्ये संज्ञाविशेषे च शशाङ्के च भगद्युतिः, अने.

भगवत्. भगवान् ना जिने गौर्यां स्त्रियां पूज्ये तु वाच्यवत्, मे. भगवान् बुद्धपूज्ययोः, वि. जिने पूज्ये च भगवान्, त्रि.

भङ्ग. भङ्गो जयविपर्यये। भेदरोगतरङ्गेषु भङ्गा शस्यान्तरे स्त्रियाम्, मे. भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्यो- र्भङ्गा शणे, हे. भङ्गस्तरङ्गे रुग्भेदे भेदे जयविपर्यये। भङ्गा शणाख्यसस्येऽपि, वि. तरङ्गभेदयो र्भङ्गः भङ्गा शस्ये शणाख्ये, त्रि. भङ्गः पलायनं वीचि र्भङ्गः शस्यस्य भञ्जनम्, अने.

भङ्गि. भङ्गिः पुन र्भक्तिवीच्योः, हे.

भङ्गुर. भङ्गुरौ वक्रनश्वरौ, हे.

भट. भटः स्याद् पुंसि वीरे च विशेषे पामरस्य च, मे. भटो वीरे म्लेच्छभेदेऽपि च, हे. भटः पामरभेदे च वीरे च, वि.

भटि. अगमे भटिः, वि.

भट्टारक. भट्टारको नृपे नाट्यवाचा देवे तपोधने, मे. भट्टारकः सुरे राज्ञि कथितश्च तपोधने, वि. भट्टारको राज्ञि मुनौ सुरे, हे. राज्ञि भट्टारकः सुरे, लि.

भट्टिनी. भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषिति, मे, वि. भट्टिनी तु ब्राह्मण्यां नृपयोषिति, हे

भण्डन भण्डनं कवचे युद्धे खलीकारेऽपि न द्वयोः, मे. भण्डनं कवचे युद्धे खलीकारे च वर्त्तते, वि. भण्डनं कवचे युधि। खलीकारे, हे.

भद्र. भद्रः शिवे खञ्जरीटे वृषे मेरुकदम्बके। करिजातिविशेषे ना क्लीवं मङ्गलमुस्तयोः। काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च। तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि॥ त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे, मे. भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे। भद्रो रुद्रे वृषे रामचरे मेरुकदम्बके॥ हस्तिजात्यन्तरे भद्रो वाच्यवत् श्रेष्ठसाधुनोः। भद्रा मन्दाकिनीरास्नाकृष्णाऽनन्तासु कट्फले, वि. भद्रन्तु मङ्गले। मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे। भद्रो रामचरे हस्तिजातौ मेरुकदम्बके। गवि शम्भौ भद्रा विष्टौ नभसरिति कट्फले। कृष्णानन्तारास्नासु च, हे.

भद्रकाली. भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रियाम्, मे. भद्रकाली तु गन्धोल्यामुमायामोषधीभिदि, वि. भद्रकाल्यौषधीभिदि। गन्धोल्यां च रूपलत्रां च, हे.

भन्द. भन्दं कल्याणशर्मणोः, मे, वि. भन्दं कल्याणे सौख्ये च, हे.

भय भयं प्रतिभये घोरे प्रसूने कुब्जकस्य च, मे, वि. भयं भीतौ भयङ्करे। कुब्जकपुष्पे, हे. भयं भीकुब्जपुष्पयो, लि

भयानक भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे, मे भयानकः

स्मृतो व्याघ्रे सैंहिकेयेऽपि भीषणे, वि. भयानकस्तु भीषणे। व्याघ्रे राहौ रसे, हे.

भर. भरोऽतिशयभारयोः, मे, वि, हे, त्रि.

भरण. भरणी घोषके ऋक्षे भरणं वेतने भृतौ, मे. भरणी घोषके ऋक्षे भरणं वेतने भृतौ, वि.

भरत. भरतो नाट्यशास्त्रसुनौ नटे। रामानुजे च दौष्मन्तौ, मे. भरतो वाद्यभेदेऽपि दौष्मन्तौ शबरे नटे। रामानुजे च भरतस्तन्तुवायेऽपि च क्वचित्, वि. भरतः शबरे नटे। क्षेत्रे रामानुजे शास्त्रे दौष्मन्त्यादिपभाक्तने। तन्तुवाये, हे. रामानुजे नाट्यशास्त्रे दौष्मन्तौ भरतो नटे, त्रि.

भरद्वाज. भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे, मे, वि. भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्ये च पक्षिणि, त्रि. भरद्वाजः पक्षिभेदे बृहस्पतिसुतेऽपि च, हे.

भरु. भरुः स्वर्णे हरे पुंसि, मे. भरु र्भर्तरि काञ्चने, वि. भरु र्भर्तृकनकयोः, हे.

भर्तृ. भर्त्ता स्वामिनि पुंसि स्यात् त्रिषु धातरि पोष्टरि, मे. भर्त्ता पोष्टरि धारके, हे. भर्ता स्वामिनि धारके, वि. भर्त्ता धातरि पोष्टरि, अ.

भर्मन्. भर्म स्यात् काञ्चने भृतौ, मे. भर्म स्वर्णे भृतौ भानौ, वि. भर्म भारे भृतौ हेम्नि, हे. भृतिकाञ्चनयो र्भर्म, त्रि.

भल्ल. भल्लः स्यात् पुंसि भल्लूके शस्त्रभेदेऽपि न द्वयोः। भल्लातक्यां स्त्रियां भल्ली, मे. भल्लो भल्ली च बाणे स्याद् भल्लो भल्लूक उच्यते। भल्लातक्यां तु भल्ली स्यात्, वि. भल्लो भल्लूकबाणयोः। भल्ली भल्लातके, हे.

भव. भवः क्षेमेश संसारे सत्तायां प्राप्तिजन्मनोः, मे. भवः संसारसंप्राप्तिश्रेयःशङ्करजन्मसु, वि. भवः सत्ताप्तिजन्मसु। रुद्रे श्रेयसि संसारे, हे. जन्महरौ भवौ, श. सत्तासंसारयो र्भवः, द्वा. भवः संसारे, रु.

भवत्. भवद् युष्मत्सतोस्त्रिषु। स्त्री मापभेदे, मे. भवती मापभेदे स्यादन्यवत् त्वत्सदर्थयोः, वि. भवान् युष्मद् सदर्थयोः, त्रि.

भवन. भवनं स्याद्गृहे भावे, मे. भवनं भावसेश्मनोः, वि. भवनं सद्मे भावे, हे. जन्माश्रयश्च भवनम्, त्रि.

भव्य. भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु। कर्मरङ्ग-तरौ पुंसि स्त्रियां करिकणोमयोः॥ क्लीवमस्थनि, मे. भव्यं सत्ये शुभे चाथ भेद्यवद् योग्यभाविनोः। कर्मरङ्गतरौ भव्यो भव्या करिकणोमयोः, वि. भव्यन्तु फले योग्ये शुभेऽस्थनि। सत्ये भाविनि भव्यस्तु कर्मरङ्गतरौ सति। भव्योमाकरिपिप्पल्योः, हे.

भषक. भषको दुर्जनः प्रोक्तो भषकः सरमासुतः, अने.

भसद्. भसत् स्त्री भास्वरे योनौ, मे. भसद् भास्वरमासयोः, हे. भसत् प्रभास्वरे मासे, वि.

भस्मक. भस्मकं रोगभेदे स्याद् विडङ्गकलधौतयोः, मे, वि.

भस्मतूल. भस्मतूलं ग्रामकूटे पांशुवर्षे हिमेऽपि च, मे, वि. भस्मतूलं पुन र्हिमे। ग्रामकूटे पांशुवर्षे, हे.

भाकूट. भाकूटः शैलमत्स्यो र्भेदे स्यात्, मे. भाकूटः शैलमीनयोः, हे. भात् कूटः कथ्यते मीनभेदे शैलान्तरेऽपि च, वि.

भाग. भागो रूपार्धके भाग्यैकदेशयोः, मे, हे. भागो रूपार्धके प्रोक्तो भागधेयैकदेशयोः, वि. एकदेशांशयो र्भागः, त्रि.

भागधेय. भागधेयं मतं भाग्ये भागप्रत्याययोः पुमान्, मे. भागधेयं स्मृतं भाग्ये भागप्रत्याययोरपि, वि. भागधेयः पुनः करे। दायादे भाग-धेयं तु भाग्ये, हे.

भाग्य. भाग्यन्तु स्यात् शुभाशुभकर्मणोः, मे. भाग्यं शुभात्मक-विधौ स्यात् शुभाशुभकर्मणि, वि. भाग्यं कर्म शुभाशुभम्, हे, श्र.

भाजन. 'भाजनं योग्यपात्रयोः, मे, वि. भाजनं पात्रयोग्ययोः, त्रि.

भाण्ड. भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः, मे. भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने। नदीपात्रे तुरङ्गाणां भूषणे भाजने-ऽपि च, वि. भाण्डं मूलवणिग्वित्ते तुरङ्गाणां च मण्डने। नदीकूलद्वयी-

मध्ये भूषणे भाजनेऽपि च, हे. स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने, अ. भाण्डं भूषणमात्रेऽपि, हा.

भानु. भानु र्ना किरणे सूर्ये, मे. भानुः किरणसूर्ययोः, वि. भानुरंशौ रवौ दिने, हे. भानू रश्मिदिवाकरौ, अ. भानु ष्टं पिरुसकारः, अने.

भाम. भामः क्रोधे रवौ दीप्तौ, मे. भामः क्रोधे रुचौ रवौ, हे.

भार. भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके, मे. भारस्तु वीवधे स्वर्णपलानामयुतद्वये, वि. भारो द्व्यष्टतीद्वये। पलानां वीवधे चापि, हे.

भारत. भारतं ग्रन्थभेदे स्याद् वर्षभेदेऽथ भारती। वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः, मे. भारतं ग्रन्थभेदे स्याज्जम्बुद्वीपेऽपि भारतम्। भारती तु सरस्वत्यां पक्षिणोर्वृत्तिभेदयोः, वि. भारतन्तु ग्रन्थे द्वीपांशमिद्यपि। भारती पक्षिणीवृत्तिभिदो र्वाचि, हे. पक्षिण्यां वाचि वृत्तौ च भारती भारतं पुनः। जम्बुद्वीपे व्यासकृतौ, त्रि.

भारद्वाज. भारद्वाजो वनकार्पास्यां ना द्रोणर्षिभेदयोः, मे. भारद्वाजः स्मृतो मुनौ। द्रोणे च वनकार्पास्यां भारद्वाजी च कण्टते, वि. भारद्वाजो मुनौ चापि पिचुमन्दद्रुमेऽपि च, हे. बुधैः ख्यातो भारद्वाजो द्रोणाचार्ये मुनावपि, त्रि.

भार्गव. भार्गवो गजधन्विनोः। शुक्रे परशुरामे च भार्गवी पार्वतीश्रियोः। दूर्वायाम्, मे. भार्गवः परशुरामे स्याद् गजे शुक्रे सुधन्वनि। भार्गवी हैमवत्यां च कमलाऽसितदूर्वयोः, वि. भार्गवः परशुरामे सुधन्वनि मतङ्गजे। दैत्यगुरौ भार्गवी तु कृष्णदूर्वोमयोः स्त्रियाम्, हे. गजे धन्विनि शुक्रे च परशुरामे च भार्गवः। दूर्वा गौरी च भार्गव्यौ, त्रि.

भार्याटिक. भार्याटिकः पुमान् भार्यानिर्जिते हरिणान्तरे, मे. भार्याटिको भवेद् भार्यानिर्जिते हरिणान्तरे, वि. भार्याटिको मुनिभेदे भार्यया च विनिर्जिते, हे.

भार्याढ़. भार्याढ़ः शैलभेदे स्यान् मृगभेदे च शत्रु च। कौड्या

परभार्यायां पुत्रो येनोपमादितः, मे, वि. भार्याऽन्यस्त्रीपुत्रोत्पादके स्वग-ग्रैलयोः, हे.

भाल. भालं तेजोललाटयोः, मे. भालं ललाटमहसोः, वि. भालं स्याल्ललाटे महस्यपि, हे.

भालाङ्क. भालाङ्कः करपत्रे स्यात् शाकभेदे च रोहिते। महालक्षण-सम्पन्नपुरुषे कच्छपे हरे, मे, वि. भालाङ्कः कच्छपे हरे। महालक्षणसम्पूर्ण-पुरुषे करपत्रके। रोहिते शाकभेदे च, हे. भालाङ्को लोहिते हरः करपत्रे च कच्छपे, धा.

भाव. भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदा-र्थेषु विभूतिबुधजन्तुषु॥ रत्यादौ, मे. भावः स्वभावेऽभिप्राये चेष्टासत्तात्म-योनिषु। क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु, वि. भावोऽभिप्रायवस्तुनोः। स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु। चेष्टायोन्यो र्बुधे जन्तौ ष्टङ्गा-रादेश्च कारणे। शब्दप्रवृत्तिहेतौ च, हे. भावः सत्तास्वभावाभिप्राय-चेष्टात्मजन्मसु, अ. भावो गौरविते जन्तौ पदार्थेऽभिनयान्तरे, ति. आत्मा भावो मनो भावो भावः सत्ता भवोऽपि च। भावः पूजरात्मको लोकः पदार्थो भाव उच्यते, धने. चेष्टात्मजन्मसत्ताभिप्रायेष्वभिहितो भावः, ह.

भावना. भावना तु न ना ध्याने पर्यालोचेऽधिवासने, मे. भावना लेपने ध्याने, वि. भावना वासना ध्यानम्, हे.

भावाट. भावाटो भावुके साधुनिवेशे कामुके नटे, मे. भावाटो भावुके साधुनिवेशे कामुकेऽपि च, हे. वि.

भावित. भावितं वासिते प्राप्ते, मे, वि, हे.

भाषा. v. वाच्

भास्. भाः प्रभावे मयूखे स्त्री, मे. भाः प्रभावे मयूखे च, वि, हे.

भास. भासः पुंसि प्रभायां स्यात् विशेषे विहगस्य च, मे. भासस्तु भासि गृध्रशकुन्तयोः, हे. ? भासः सुवर्णचूड़े स्यात् प्रभेदे किष्कु-पर्वणः, वि.

भासन्त. भासन्तः सुन्दराकारे त्रिषु ना भासपक्षिणि, मे. भासन्तो मे सूर्ये रम्यभासयोः, हे.

भास्कर. भास्करोऽग्नौ प्रभाकरे, मे. भास्करस्तपने वह्नौ प्रभाकरसमः स्मृतः, वि. भास्करो वह्निसूर्ययोः, हे.

भास्वत्. भास्वान् भास्करसूर्यप्रयोः, मे, वि. भास्वान् दीप्ते रवौ, हे. भास्वन्तौ सूर्यभास्वरौ, त्रि.

भिक्षा. भिक्षा भृतौ याञ्चासेवाभिक्षितवस्तुषु, मे. भिक्षा भृतौ च याञ्चायां सेवाभिक्षितवस्तुनोः, वि. भिक्षासेवाप्रार्थनयो र्भृतौ भिक्षितवस्तुनि, हे. भिक्षा सेवाऽर्थना भृतिः, प.

भित्ति. भित्तिः कुड्यप्रदेशयोः, मे. भित्तिः कुड्ये प्रभेदे च संविभागावकाशयोः, वि. भित्तिः कुड्ये प्रदेशे च, हे. कुड्यभेदनयो र्भित्तिः, त्रि.

भिन्न. भिन्नः स्यात् त्रिषु दारिते। सङ्गतेऽन्यत्र फुल्ले च, मे. भिन्नमन्यार्थवचने सङ्गते दारिते स्फुटे, वि. भिन्नोऽन्यः सङ्गतः फुल्लो दीर्णः, हे. भिन्नं दीर्णे विशेषिते, त्रि.

भीत. भीतं भयेऽथ भीयुते त्रिषु, मे. भीतं भये भययुते वाच्यवत् परिकीर्त्तितम्, वि.

भीति. भीति र्भये स्त्रियाम्, मे. भीतिः साध्वसकम्पयोः, वि.

भीम. भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे, मे. भीमोऽम्लवेतसे शम्भौ घोरे पापि वृकोदरे, वि. भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे, हे. भीमः शम्भौ च पाण्डवे, त्रि.

भीरु. भीरुरार्त्ते त्रिलिङ्गः स्याद् वरयोषिति योषिति, मे. भीरुर्योषिति कातरे, हे.

भीषण. भीषणो रसे सल्लकर्यां ना गाढे दारुणे त्रिषु, मे. भीषणो दारुणे रुद्रे भीषणं सल्लकीरसे, वि भीषणं शल्लकीरसे। भीषणो दारुणे गाढे, हे.

भीष्म. भीष्मो गाङ्गेयभीमयोः, मे. भीष्मस्तु भीषणे रुद्रे गाङ्गेये

च निशाचरे, वि. भीष्मो रुद्रे च गाङ्गेये राक्षसे च भयङ्करे, हे. गाङ्गेय-भीषणौ भीष्मौ, त्रि.

भुज (जा). भुजा । द्वयो र्बाहौ करे, मे. भुजो बाहौ करे, हे. भुजः पाणौ च बाहौ च, वि.

भुजङ्ग. भुजङ्गोऽहौ च पिङ्गे च, मे. भुजङ्गः पिङ्गसर्पयोः, वि. भुजङ्गः सर्पपिङ्गयोः, हे. भुजङ्गो भुजगे पिङ्गे, त्रि.

भुजिष्य. भुजिष्यस्तु स्वतन्त्रे स्याद् हस्तसूत्रकदासयोः । स्त्रियां दासीगणिकयोः, मे. भुजिष्यः स्यात् सहाये हस्तसूत्रके । स्वतन्त्रे च भुजिष्या तु दासीगणिकयो र्मता, वि. भुजिष्यः स्यादनधीने किङ्करे हस्तसूत्रके । भुजिष्या गणिकादास्योः, हे. अनधीने सहाये च भुजिष्यो हस्तसूत्रयोः, त्रि.

भुण्ड. भुण्डाविर्वारुकुष्माण्डौ, रा.

भुवन. भुवनं पिष्टपेऽपि स्यात् सलिले गगने जले, मे. भुवनं विष्टपे मह्यां सलिलेऽपि वियत्यपि, वि. भुवनं पिष्टपे तोये, त्रि. भुवनं लोकतोययोः, अने. भुवनं लोकखाम्बुषु, हे.

भुवन्युत्र. भुवन्युस्तु पुमान् भानौ ज्वलने शशलाञ्छने, मे. भुवन्युर्ज्वलने भानौ भुवन्युः शशलाञ्छने, वि.

भू. भूः स्थानमात्रे कथिता धरण्यामपि योषिति, मे. भूस्तु भूमिरिव क्षितौ । स्थाने च, हे. भूः स्त्रियां स्थानमात्रे, वि. भू र्भूमौ स्थानमात्रे च, त्रि.

भूक. भूकं छिद्रे च काले च, मे. भूकः काले छिद्रे, हे. भूकश्छिद्रे च काले च, वि.

भूकुटिन्. भूकुटी शूकरः ख्यातो भूकुटी च क्षपीवलः, अने.

भूकेश. भूकेशः शैवले वटे । भूकेशो वल्कलेऽपि स्यात्, मे. भूकेशो वल्कलेषु स्यात् भूकेशः शैवले वटे, वि. भूकेशः शैवले वटे, हे.

भूत. भूतं च्मादौ पिशाचादौ जन्तौ क्लीवं लिपूचिते। प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरे तु ना, मे. भूतं च्मादौ पिशाचादौ न्यायेत्र सत्योपमानयोः। भूतो देवलके प्राप्तवृत्तयोरभिधेयवत्, वि. भूतं सत्योपमानयोः। प्राप्तेऽतीते पिशाचादौ पृथ्व्यादौ जन्तुयुक्तयोः, हे. युक्ते च्मादावृत्ते भूतं प्राप्यतीते समे त्रिषु, प्र. अपत्ये च पृथिव्यादौ कालेऽतीते च राच्चसे। प्राप्ते प्राणिनि कौमारे भूतशब्दो निगद्यते, गने. चतुर्विधेषु जीवेषु पृथिव्यादिषु पञ्चसु। अतीते देवयोनौ च भूतशब्दं प्रचच्चते, रु.

भूतवृत्त. भूतवृत्तस्तु शाखोटद्रुमे श्योनाकपादपे, मे. भूतवृत्तस्तु शाखोटे तथा श्योनाकपादपे, वि. भूतवृत्तस्तु शाखोटे श्योनाककलिवृत्तयोः, हे.

भूतात्मन्. भूतात्मा पुंसि निर्दिष्टो देहे च परमेष्ठिनि, मे. भूतात्मा पुद्गले विधौ, वि. भूतात्मा द्रुहिणे देहे, हे. भूतात्मानौ धातृदेहौ, अ.

भूति. भूतिर्भस्मनि सम्पत्तिहस्तिश्रृङ्गारयोः स्त्रियाम्, मे. भूतिर्मांसकल्कश्रृङ्गारे जातौ भस्मनि सम्पदि, वि. भूतिस्तु भस्मनि। मांसपाकविशेषे च सम्पदुत्पातयोरपि, हे. भूतिर्भस्मनि सम्पदि, अ. भूतिर्विभवे, रु.

भू(ति)तीक. भूतीकमपि भूनिम्बे दीप्यकर्पूरकत्तृणे, मे, वि. भूतीकं कट्फलौषधे। यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च, हे. सवाङ्कतिकन्तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च, अ.

भूभृत्. भूभृन्नाऽद्रौ महीपते, मे. भूभृन्नरेन्द्रे शैले च, वि. भूभृन्महीधरे पृथ्वीपतौ, हे.

भूमि. भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम्, मे. भूमिः चितौ स्थानमात्रे, वि, हे. भूमिः स्थानमात्रेऽपि, लि. ν. भू.

भूमिका. भूमिका रचनायां स्याद् वेशान्तरपरिग्रहे, मे. भूमिका रचनायां स्यात् मूर्त्यन्तरपरिग्रहे, वि. भूमिका तु रचनायां रूपान्तरपरिग्रहे, हे. भूमिका रचनायां च मूर्त्यन्तरपरिग्रहे, त्रि.

भूमिज. भूमिजो नरकेऽङ्गारे सीतादेव्यां तु भूमिजा, मे. भूमिजो नरकेऽङ्गारे सीतायामपि भूमिजा, वि भूमिजो नरकाङ्गारौ भूमिजा जनकात्मजा, हे.

भूमिस्पृश्. भूमिस्पृक् पुंसि मानववैश्ययोः, मे. भूमिस्पृग् वैश्यनरयोः, वि.

भूयस्. भूयांस्त्रिषु बहुतरे पुनरर्थे तदव्ययम्, मे. भूयः पुनः पुनः ख्यातं प्रभूतार्थे त्वथाव्ययम्, वि. भूयोऽधिकारे च पुनः पुनः, मे.

भूरि भूरि र्ना वासुदेवे च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्ये त्वत्राद्याचत्रलिङ्गकः, मे. भूरि र्ब्रह्माच्युतेशेषु भूरि प्राज्यसुवर्णयोः, वि. प्रचुरं भूरि विज्ञेयं भूरि काञ्चनमेव च, अने. भूरिः स्वर्णे प्रचुरे च, हे. स्वर्णेऽपि भूरिचन्द्रौ द्वौ, अ.

भूसृश्. भूसृग् वैश्ये मानवे च, हे.

भृगु. भृगुः पुमान्। मुनौ हरेऽतटे शुक्रे, मे. अथ भृगुः सानौ जमदग्निप्रपातयोः। शुक्रे रुद्रे च, हे. भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि, वि अथ जमदग्न्यतटौ भृगू, त्रि.

भृङ्ग. भृङ्गो धूम्याटपिङ्गयोः। मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुड़त्वचि, मे. भृङ्गं त्वक्पत्रं भृङ्गास्तु पिङ्गधूम्याटमार्कवाः। षट्पदः, हे. भृङ्गो धूम्याटपिङ्गयोः। मधुव्रतेऽपि भृङ्गन्तु केशराजगुड़त्वचोः, वि. भृङ्गो धूम्याटकेऽपि च, त्रि.

भृङ्गराज. अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे, मे. भृङ्गराजस्तु मधुपे मार्कवे विहगान्तरे, वि भृङ्गराजो मधुकरे मार्कवे विहगान्तरे, हे. भृङ्गराजः खगौषधोः, त्रि.

भृङ्गार. भृङ्गारः कनकालुके। भृङ्गारी भिल्लिकायां स्यात्, वि. भृङ्गारी स्याज्झिल्लिकायां भृङ्गारः कनकालुका, हे. भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान्, मे

-भृति. भृतिः स्त्री स्यान्मूलेऽप्यपि भरणेऽपि च, मे भृति र्भरणमूल्ययोः, वि,.त्रि. भृति र्मूल्यभरणयोः, हे

रत. रतं सुरतगुह्यंयोः, मे, वि.

रतनारीच. रतनारीचो नारीणां सीत्कारे च शुनि स्मरे, मे. रतनारीच इत्येष कथितो रतिवल्लभे। कुक्कुरे रतनारीचः सीत्कारे वरयोषिताम्, वि. रतनारीचो मन्मथे शुनि स्त्रीणां च शीत्कृतौ, हे. कुक्कुरे रतनारीचः शीत्कारे वरयोषिताम्, त्रि.

रतर्धिक. रतर्धिकं स्याद् दिवसे सुखस्नानेऽष्टमङ्गले, मे, वि. रतर्धिकं तु दिवसे सुखस्नानेऽष्टमङ्गले, हे.

रति. रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः, मे. रतिः स्मरप्रियायाञ्च रागे च रमणे रतिः, वि. रतिः स्मरस्त्रियां रागे रते, हे.

रत्न. रत्न वर्त्मनि नद्यां स्त्री, मे. रत्नः सरिति वर्त्मनि, वि.

रत्न. रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्, मे. रत्नं श्रेष्ठे मणावपि, वि. रत्नं स्वजातिश्रेष्ठे स्यात् मणौ, हे. रत्नं स्वजातिश्रेष्ठेऽपि, अ.

रथ. रथः पुमानवयवे स्यन्दने वेतसेऽपि च, मे. रथः स्यात् स्यन्दने काये चरणे वेतसेऽपि च, वि. रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे, हे. रथः पौरुषदेहयोः, त्रि.

रथकार. रथकारस्तु माहिष्यात् करणीजे च तक्षणि, मे. रथकारस्तु माहिष्यकरणीजे च तक्षणि, वि. रथकारस्तक्षणि स्यात् माहिष्यात् करणीसुते, हे.

रथाङ्ग. रथाङ्गं न द्वयोश्चक्रे ना चक्राङ्गविहङ्गमे, मे. रथाङ्गश्चक्रवाकेऽपि रथाङ्गं चक्र इष्यते, वि. रथाङ्गः कोकपक्षिणि। रथाङ्गं चक्रे, हे. चक्रे रथाङ्गं कोके ना, त्रि.

रथ्य. रथ्या रथौघविशिखावर्त्मसु च योषिति। रथवोढरि पुंलिङ्गः, मे. रथ्यो रथोद्वहे। रथ्या रथौघे विशिखावर्त्तनीचत्वरेषु च, वि. रथ्यो रथांशे रथवोढरि। रथ्या तु रथसङ्घाते प्रतोल्यां रथचत्वरे, हे.

रद. रदो दन्ते विलेखने, मे, हे रदोऽपि लेखने दन्ते, वि.

रन्तिदेव. रन्तिदेवस्तु नृपते भेदे च गरुड़ध्वजे, मे.

रन्ध्र. रन्ध्रं तु दूषणे छिद्रे, मे. V. छिद्र, विवर.

रभस. रभसो हर्षवेगयोः, मे, त्रि. रभसो वेगहर्षयोः, वि, हे.

रम. रमा लक्ष्म्यां रमः कान्ते रक्ताशोकद्रुमे स्मरे, मे. रमः कान्ते रमा लक्ष्म्यां रक्ताशोकद्रुमे स्मरे, वि. रमः कान्ते रक्ताशोके मन्मथे च रमा स्त्रियाम्, हे.

रमण. रमणं पटोलमूले नार्यां स्त्री ना धवे स्मरे, मे. रमणं स्यात् पटोलस्य मूलेऽपि रमणः प्रिये, वि. रमणं पुनः । पटोलमूले जघने रमणो रासभे प्रिये, हे.

रमति. रमति र्नायके नाके पुंसि स्यात्, मे. रमति र्नायके स्वर्गे, वि.

रम्भ. रम्भा कदल्यप्सरसो र्ना वेणौ वारणान्तरे, मे. रम्भा कदल्यप्सरसो रम्भो वैणवदण्डके, वि. रम्भो वैणवदण्डके । रम्भा त्रिदशभामिन्यां कदल्यां च, हे. रम्भा कदल्यप्सरसोः, त्रि. रम्भा देवाङ्गना प्रोक्ता रम्भा तु कदली मता, धने.

रम्य. रम्या रात्रौ चम्पके ना मनोज्ञे त्वभिधेयवत् । नपुंसकं पटोलस्य मूले सूरिभिरिष्यते, मे. रम्यं मनोरमे रम्या रात्रौ रम्यश्च चम्पके, वि. रम्यश्चम्पकहृद्ययोः । रम्या रात्रौ, हे.

रल्लक. रल्लकः कम्बले स्मृतः । तथैव कम्बलमृगे, हे.

रवण. रवणः शब्दने खरे, मे. रवणं रासभे ध्वनौ, वि.

रवि. रविः पर्वतसूर्ययोः, रु.

रश्मि. रश्मिः पुमान् दीधितौ च पक्ष्मप्रग्रहयोरपि, मे. रश्मिरंशौ प्रग्रहे च, वि. रश्मि र्घृणिप्रग्रहयोः, हे. किरणप्रग्रहौ रश्मी, अ.

रस. रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वाद्योः पुमान् । स्त्रियां तु रसनापाठाशल्लकीकङ्गु भूमिषु, मे. रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गा-

रादौ द्रवे वीर्ये देहधातौ च पारदे। रसा तु शल्लकीपाठाजिह्वाधरणिकङ्गुषु, वि. रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे। बोले रागे देहधातौ तिक्तादौ पारदेऽपि च। रसा तु रसनापाठासल्लकीधितिकङ्गुषु, हे. शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः, अ. जिह्वा भूः शल्लकी रसा। जले शरीरधातौ च पारदस्वाद्यो रसः, लि. रसो जलं रसो हर्षो रसः शृङ्गारपूर्वकः। रसः सालद्रुनिर्यासः पारदोऽपि रसो विषम्, अने. शृङ्गारादिषु नवसु च लवणादिषु षटसु पारदे रागे। निर्यासवीर्यगुणधातुषु च विषष्टतादौ रसः प्रोक्तः, रु.

रसन. रसनं स्वदने ध्वनौ। जिह्वायां तु न पुंसि स्यात् रास्नायां रसना स्त्रियाम्, मे. रसनं स्वादने ध्वाने रसना काञ्चिजिह्वयोः, वि. रसनं ध्वनिते स्वादे रसज्ञारास्नयोरपि, हे. रसनं तु ध्वनौ स्वादे रसज्ञारास्नयोः स्त्रियाम्, लि.

रसायन. रसायनं विषेऽपि स्यात् जराव्याधिजिदौषधे। पुंलिङ्गः पक्षिराजे च विड़ङ्गाख्यौषधेऽपि च, मे. रसायनं विड़ङ्गे स्यात् जराव्याधिजिदौषधे। रसायनः पक्षिराजे विषेऽपि च रसायनम्, वि. रसायनो विड़ङ्गके। पक्षीन्द्रे रसायनं तु जराव्याधिभिदौषधे, हे.

रसाल. रसाला रसनादूर्वाविदारीमार्जितासु च। रसालं सिह्लके बोले रसालस्त्विक्षुचूतयोः, मे. रसाला मार्जितायां स्यात् जिह्वादूर्वाविदारिषु। रसालं सिह्लके बोले रसालस्त्वेक्षुचूतयोः, वि. रसाल इक्षौ चूते च रसालं बोलसिह्लयोः। रसाला दूर्वाविदार्यो र्मूर्विकाजिह्वयोरपि, हे. रसाला रसनायां स्यात् मथिते दध्नि षाणिना, श. रसालस्त्विक्षुचूतयोः, लि.

रसिक. रसिका स्त्री रसालेक्षुरसयोः सरसे त्रिषु, मे. रसिकापि रसालायां काञ्चीरसनयोरपि, वि. रसिका कटिसूत्रके। रसनायां रसालायाम्, हे.

रसित. रसितं पुनः। रतस्तनितयोः क्लीवं स्वर्णादिखचिते त्रिषु, मे. रसितं तु सुवर्णादिखचिते स्तनिते रते, वि. रसितं स्वर्णादिलिप्ते रतस्तनितयोरपि, हे. स्वर्णाभ्यक्तेऽपि रसितम्, लि.

रस्न. रस्नस्तधकचण्डयोः, वि.

रहस्. रहस्तत्त्वे रते गुह्येत्र, मे. रहोऽपि गुह्येत्र सुरते च तत्त्वे, वि. रहो गुह्येत्र रते तत्त्वे, हे. रहो रते च गुह्येत्र च, त्रि.

रहस्य. रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्, मे. रहस्या निम्नगाभेदे गोपनीये तु वाचत्रवत्, वि. रहस्यं गोपनीये स्याद्, रहस्या सरिदन्तरे, हे.

राका. राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम्। सम्पूर्णेन्दु-तिथौ, मे. राका कच्छ्वां दृष्टरजःकन्यायां सरिदन्तरे। पूर्णेन्दुपूर्णिमायाञ्च, हे. राका तु सरिदन्तरे। कच्छूनवरजःकन्यापूर्णेन्दुपूर्णिमासु च, वि. राका दृष्टरजःकन्या कच्छूः पूर्णेन्दुपूर्णिमा, त्रि.

राक्षस. राक्षसो यातुधाने स्यात् चण्डायां राक्षसी मता, मे. राक्षसीति च दंष्ट्रायां राक्षसी रक्षसः स्त्रियाम्, वि. राक्षसी कौणपी दंष्ट्रा, हे.

राग. रागस्तु मात्सर्ये लोहितादिषु। क्लेशादावपि रागे च गान्धा-रादौ नृपेऽपि च, मे. रागः स्याल्लोहितादिषु। गान्धारादौ क्लेशादिकेऽ-नुरागे मत्सरे नृपे, हे. रागोऽनुरक्तौ मात्सर्ये क्लेशादावहितादिषु। गान्धा-रादौ नृपे रागः, वि. रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु, त्रि.

रागचूर्ण. रागचूर्णः पुमान् दन्तधावने मकरध्वजे, मे. रागचूर्णः स्मरे दन्तधावने रक्तवालुके, वि. रागचूर्णस्तु खदिरे मकरध्वजे, हे.

रागसूत्र. रागसूत्रं तुलासूत्रे पट्टसूत्रे नपुंसकम्, मे. रागसूत्रं तुलासूत्रे पट्टसूत्रेऽपि दृश्यते, वि. रागसूत्रं पट्टसूत्रे तुलासूत्रेऽपि च क्वचित्, हे.

रागिन्. रागी रक्तोऽपि कामुके, मे. रागी रक्ते च कामुके, वि. रागी कामिनि रक्तरि, हे. रक्तः कामी च रागिणौ, त्रि.

राघव. राघवोऽब्धे र्महामीनभेदे च रघुवंशजे, मे. राघवो रघुवंशजे। महामीनप्रभेदेऽपि जलधे राघवः स्मृतः, वि. राघवोऽब्धिमत्स्यान्तरे। रघु-जेऽपि, हे.

राजजम्बू. राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयोः स्त्रियाम्, मे. राजजम्बूस्तु जम्बूभित्पिण्डखर्जूरयोः स्मृता, वि. राजजम्बूस्तु जम्बूभित्। पिण्डखर्जूरवृक्षश्च, हे.

राजन्. राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रेऽपि पुंसि स्यात्, मे. राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः, वि. राजा तु पार्थिवे। निशाकरे प्रभौ शक्रे यक्षक्षत्रिययोरपि, हे. राजा मृगाङ्के क्षत्रिये नृपे, अ. यक्षे चन्द्रे च राजा स्यात्, त्रि. राजा चन्द्रो नृपो राणा, अने.

राजबदर. स्याद् राजबदरं रक्तामलके लवणेऽपि च, मे.

राजराज. राजराजः कुबेरेऽपि सार्वभौमे सुधाकरे, मे, वि. राजराजो नृपेशेन्द्वोः कुबेरे, हे.

राजवृक्ष. राजवृक्षः सुवर्णालिपियालयोः, मे. राजवृक्षः प्रियाले स्यात् सुवर्णालुतरावपि, वि. राजवृक्षः पियालके। सुवर्णालुतरौ, हे.

राजहंस. राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे, मे, हे. राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः, वि. राजहंसो नृपाग्रे च, त्रि.

राजादन. राजादनं क्षीरिकायां पियाले किंशुकेऽपि च, मे, वि. राजादनं प्रियालद्रौ क्षीरिकायां विषप्नके, हे.

राजार्ह. राजार्हं जोङ्गके क्लीवं राजयोग्येऽभिधेयवत्, मे.

राजि. राजिः स्त्री पंक्तिलेखयोः, मे. राजिः स्यात् पंक्तिलेखयोः, वि. राजी रेखायां पंक्तौ च, हे.

राजिका. राजिकापि च केदारे राजसर्षपरेखयोः, मे, वि. राजिका पंक्तौ रेखायां केदारे राजसर्षपे, हे

राजीव. राजीवं नलिने ना तु भेदे हरिणमीनयोः, मे. राजीवाख्या मृगे मत्स्ये पुंसि राजोपजीविनि, वि राजीवो मीनसारङ्गभेदयोः। राजीव-मब्जे, हे. राजीवो मृगमीनयोः, त्रि

राज्ञी. राज्ञी राजप्रियायां च भार्यायां भास्करस्य च, मे.

राढ़ा. राढ़ा स्त्री सुह्मशोभयोः, मे. राढ़ा सुह्मेषु शोभायाम्,

वि, हे. राढ़ा स्त्राद् दीप्तिदेशयोः, वि. राढ़ा देशविशेषश्च राढ़ा शोभा-ऽभिधीयते, अने.

रालक. रालकं पशुरालेऽ ना वेश्यावेश्माद्‌वासिनि, मे. रालकं पशुरालके । येन वेश्यागृहे नीतो वत्सरस्तत्र रालकः, वि. रालकं पशुरालके । रालकस्तु पणवधूगृहान्तर्वेवासिनि, हे.

राध. राधो मासान्तरे राधा चित्रभेदे च धन्विनाम् । गोपी-विशाखाऽमलकीविष्णुक्रान्तासु विद्युति, मे. राधो वैशाखमासि स्त्राद् राधा गोप्यां च विद्युति । विष्णुक्रान्तामलक्योश्च चित्रवेधे च धन्विनाम्, वि. राधो वैशाखमासे स्त्राद् राधा विद्युद्‌विशाखयोः । विष्णुक्रान्तामलक्योश्च गोपीवेधविशेषयोः, हे.

राधन. राधनं साधने प्राप्तौ राधना भाषणे स्त्रियाम्, मे. राधनं राधने प्राप्तौ राधनं तोषणेऽपि, वि. राधनं प्राप्तितोषयोः । साधने, हे.

राधरङ्कु. राधरङ्कुस्तु ना सीरे शीकरे च घनोपले, वि. राध-रङ्कुस्तु ना सीरे शीकरे जलदोपले, हे. राधरङ्कुः पुमान् सीरे शीकरे च घनोपले, मे.

राम. रामा योषाहिङ्गुलिन्योः क्लीबं वास्तुककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हरे च पशुभेदे च त्रिषु चारौ सिते-ऽसिते, मे. रामः पशुविशेषे स्यात् जामदग्न्ये हलायुधे । राघवे चासि-तश्वेतमनोज्ञेषु च वाच्यवत् । रामाऽङ्गनाहिङ्गुलिन्यो रामं वास्तुककुष्ठयोः, वि. रामः श्यामे हलायुधे । पशुभेदे सिते चारौ राघवे रेणुकासुते । रामं तु वास्तुके कुष्ठे रामा हिङ्गुलिनिस्त्रियोः, हे. वले रामो नीलचारु-सिते त्रिषु, श. अथ राघवे । रामः पशौ भार्गवे च, त्रि. रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ । रामः पशुविशेषश्च रामो दश-रथात्मजः, अने. शुक्लेऽपि शुचिरामौ, ह.

रामिल. रामिलो रमणे कामे, मे, हे. रामिलो रमणे स्मरे, त्रि.

राशि. राशि र्मेषादिपुञ्जयोः, मे, वि, हे, श.

राष्ट्र. राष्ट्रं स्यादुपवर्तने। उपद्रवे क्लीवपुंसोः, मे. राष्ट्रमुद्दिष्टमुत्पाते तथा स्यादुपवर्तने, वि. राष्ट्रमुत्पातनीवृतोः, हे. अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे, अ.

रास. रासः कोलाहले ध्वाने भाषाश्रृङ्खलकेऽपि च। क्रीडाभेदे गोपानाम्, मे. रासः कोलाहले ध्वनौ। भाषाश्रृङ्खलके रासः क्रीडायामपि गोदुहाम्, वि. रासः क्रीडासु गोदुहाम्। भाषाश्रृङ्खलके, हे. भाषाश्रृङ्खलके रासः क्रीडायामपि गोदुहाम्, त्रि.

रासेरस. रासेरसस्तु रासे स्याद् रससिद्धवलावपि। षष्ठीजागरके गोष्ठ्यां श्रृङ्गारपरिहासयोः, वि. रासेरसस्तु गोष्ठ्यां स्याद् रासश्रृङ्गारयोरपि। रससिद्धौ रसावासे षष्ठीजागरकेऽपि च, मे. रासेरः रससिद्धवलौ श्रृङ्गारहासयोः। षष्ठीजागरके रसगोष्ठ्याम्, हे.

रास्ना. रास्ना च स्याद् भुजङ्गाख्याम् एलापर्ण्यामपि स्त्रियाम् मे. रास्ना स्मृता भुजङ्गाख्यामेलापर्ण्यां च कथ्यते, वि. रास्नैलापर्णीसर्पाख्योः, हे.

रिक्त. रिक्तं शून्ये वने, मे. रिक्तं काननशून्ययोः, वि. रिक्तं वनेऽपि, त्रि.

रिष्ट. रिष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले, मे. रिष्टं क्षेमेऽशुभे रिष्टोऽसी, हे. रिष्टं क्षेमाशुभाभावखपापेषु प्रयुज्यते, वि. रिष्टं क्षेमाशुभाभावेषु, अ. रिष्टं पापाशुभयोः, रु.

रिष्टि. रिष्टिः खड्गे ना शुभे स्त्री, मे. रिष्टिः खड्गे असद्धौ च, वि

रीढ़ा. अवज्ञा कथ्यते रीढ़ा रीढ़ा गतिरपीष्यते, अने.

रीति. रीतिः स्त्रियां स्यन्दप्रचारयोः। पित्तले लोहकीट्टे च, मे. रीतिः प्रसारे स्यन्दे च लोहकिट्टारकूटयोः, वि. रीतिस्तु पित्तले। वैदर्भ्यादौ लोहकीट्टे सीमनि स्रवणे गतौ, हे. प्रचारस्यन्दयो रीतिः, अ. रीतिस्तु लोहकिट्टारकूटयोः, त्रि.

रुक्म. रुक्मस्तु काञ्चने लोहे, मे, वि. रुक्मं लोहे सुवर्णे च.

हे. रुक्मं लोहसुवर्णयोः, लि. रुक्मं हेम विजानीयाद् रुक्मं रजतमुच्यते, अने.

रुच, रूच. रुचस्त्वप्रेम्णऽग्रचिक्कणे, मे, प्र. रूचः पादपजातौ स्यात् रूचोऽप्रेम्णग्रचिक्कणे, वि. रूचोऽस्निग्धमसृणयोः, हे.

रुच्. रुक् स्त्री शोभाद्युतीच्छासु, मे. रुक् शोभाकिरणेच्छासु, हे. रुक् शोभाकिरणेच्छासु चेष्यते, वि.

रुचक. रुचको वीजपूरे च निष्के दन्तकपोतयोः। न द्वयोः स्रजिकाक्षारेऽप्यश्वाभरणमाल्ययोः। सौवर्चलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च, मे. रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः। उत्कटे वीजपूरे च सौवर्चलविड़ङ्गयोः। रोचनायां च रुचकमश्वाभरणमाल्ययोः, वि. रुचकस्तु मातुलुङ्गे निष्के सौवर्चलेऽपि च। रोचनायां विड़ङ्गे च मङ्गल्यद्रव्यदन्तयोः। अश्वस्याभरणे माल्ये प्रोत्कटेऽपि प्रकीर्तितः, हे.

रुचि. रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः, मे. रुचिर्द्युतौ। स्पृहाभिष्वङ्गशोभासु, हे. रुचि मयूखे शोभायामभिष्वङ्गाभिलाषयोः, वि. अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्, अ. दीप्तिश्चेच्छा तथा रुचिः, अने.

रुजा. रुजा रोगे च भङ्गे, मे. रुजा त्वामयभङ्गयोः, हे. रुजा स्याद् रोगभङ्गयोः, लि.

रुण्डिका. रुण्डिका द्वारपिण्डयां च दूतिकायां रणक्षितौ, मे, वि.

रुदथ. रुदथः शुनि कुक्कुटे, वि. रुदथः कुक्कुटशुनोः, हे.

रुद्र. रुद्रो हयभे, ह.

रुधिर. रुधिरोऽङ्गारके पुंसि क्लीवं तु कुङ्कुमाऽसृजोः, मे. रुधिरोऽङ्गारके प्रोक्तो रुधिरं कुङ्कुमाऽसृजोः, वि. रुधिरं घुसृणे रक्ते रुधिरो धरणीसुते, हे. रुधिरं कुङ्कुमेऽपि च, लि, हा. कुङ्कुमं रुधिरं प्रोक्तं रुधिरं घतजं स्मृतम्, अने.

रुमा. रुमा सुग्रीवदारेषु विशिष्टलवणाकरे, मे. रुमा सुग्रीव-

दारेषु विशिष्टे लवणाकरे, वि. रुमा स्याल्लवणाकरे। सुग्रीवपत्न्याम्, हे.

रुरु. रुरुर्ना मृगदैत्ययोः, मे. रुरु र्मगे दैत्यभेदे, वि. रुरु र्दैत्ये मृगे, हे. दैत्यभेदे मृगे रुरुः, त्रि.

रूच. V. रुच.

रूढ़. रूढ़ं जाते प्रसिद्धे च, मे.

रूप. रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादौ आकारश्लोकयोरपि, वि, मे. स्याद् रूपं श्लोकशब्दयोः। पशावाकारे सौन्दर्ये नाणके नाटकादिके। ग्रन्थावृत्तौ स्वभावे च, हे. ग्रन्थावृत्तौ पशौ शब्दे स्वभावे नाटकादिषु। रूपमाकारसौन्दर्यनाणकेष्वपि दृश्यते, त्रि. रूपं मूर्त्ते च विद्वस्मे, अने. रूपं श्लोकेऽपि विज्ञेयम्, र.

रूपक. रूपकं नाटके धूर्त्ते काव्यालङ्करणेऽपि च, मे. रूपकं नाटके धूर्त्ते काव्यालङ्करणे विदुः, वि. रूपकं नाटके प्रोक्तं काव्यालङ्कारधूर्त्तयोः, हे.

रूप्य. रूप्यः स्यात् सुन्दरे त्रिषु। आहतस्वर्णरजते रजते च नपुंसकम्, मे. रूप्यं स्यादाहते स्वर्णरजते रजतेऽपि च। रूप्यं प्रशस्तरूपे तु वाच्यवत् समुदीरितम्, वि. रूप्यमाहतहेमादौ रजते रूपवत्यपि, हे. रूप्यं प्रशस्तरूपेऽपि, श्र. रूप्यं त्रिषु सुरूपके। आहतस्वर्णरजते रजते च नपुंसकम्, त्रि.

रेक रेकः शङ्कानीचविरेचने, मे. रेकः शङ्काविरेकयोः। हीनेऽपि, हे. रेको विरेके शङ्कायां रेकः स्यादधमेऽपि च, वि.

रेखा. रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि, हे, वि.

रेचनी. रेचनी त्रिवृतादन्त्योः, मे. रेचनी त्रिवृतादन्तीगुन्द्रारोचनिकासु च, वि. रेचनी गुन्द्रा दन्ती रोचनिका त्रिवृत्, हे.

रेणु. रेणुः स्त्रीपुंसयो र्धूलौ पुंलिङ्गः पर्पटे पुनः, मे. रेणुः पर्पटके धूल्यामल्पे, वि. रेणु र्धूल्यां पर्पटके, हे.

रेणुका. रेणुकापि हरेणौ च जामदग्न्यस्य मातरि, मे. - रेणुका

तु हरेणुः स्यात् जमदग्नेश्च योषिति, हे. रेणुकापि हरेणौ स्यात् जमदग्निस्त्रियामपि, वि.

रेतस्. रेतः शुक्रे पारदे च, मे.

रेत. रेतं रेतसि पीयूषे पटवासेऽपि सूतके, वि, मे. रेतं पीयूषपटवासयोः। रेतःसूतकयोः, हे.

रेप. रेपः स्यात् निन्दिते क्रूरे, मे, वि. रेपः क्रूरे विगर्हिते, हे.

रेपस्. रेपाः स्यादधमे क्रूरे कृपणेऽप्यभिधेयवत्, मे. रेपाः स्यादधमे क्रूरे कृपणेऽपि च कथ्यते, वि.

रेफ. रेफो रवर्णे पुंसि स्यात् कुत्सिते पुनरन्यवत्, मे. रेफो रवर्णे संप्रोक्तः कुत्सिते वाच्यवत् पुनः, वि. रेफोऽवद्यरवर्णयोः, हे. रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः, श. त्रिषु स्यात् कुत्सिते रेफो रवर्णे तु पुमानयम्, त्रि.

रेरिहाण. रेरिहाणस्तु पुंसि स्यात् महादेवेऽम्बरेऽपि च, मे. रेरिहाणो हरेऽम्बरे, वि. रेरिहाणोऽम्बरे रुद्रे, हे.

रेवती. रेवती हलिपत्न्यां स्यात् ताराभिन्मातृभेदयोः, मे. रेवती हलिपत्न्यां स्यात् ताराभेदेऽपि मातृषु, वि. रेवती बलभार्यायां नक्षत्रभिदि मातृषु, हे. रेवती हलिपत्न्यां भे स्मरपत्न्यां च रेवती, त्रि.

रेवा. रेवा स्यात् नील्यां रत्यां नदीभिदि, मे. रेवा तरङ्गिणीभेदे रेवा नील्यां स्मरस्त्रियाम्, वि. रेवा मन्मथयोषिति। नील्यां मेकलकन्यायाम्, हे.

रै. राः पुंसि स्वर्णवित्तयोः, मे. राः स्मृतः स्वर्णवित्तयोः, वि. रास्तु सुवर्णे जलदे धने, हे. स्वर्णेऽपि राः, श.

रैवत. रैवतस्तु सुवर्णालौ शैलभेदे च शङ्करे, मे. रैवतस्तु सुवर्णालौ शैलभेदेऽपि शूलिनि, वि. रैवतः स्यादुज्जयन्ते सुवर्णालौ पिनाकिनि, हे. शैलभेदे सुवर्णालौ शङ्करेऽपि च रैवतः, त्रि.

रोक. रोकस्तु क्रयभिद्दीप्त्यो रोकं नावि चले बिले, मे. रोकं क्रय-

पभेदे नावि विले चरे। रोकोऽश्मो, हे. रोको दीप्तौ विले रोकं नौकाक्रय-
पभेदयोः, वि. विले रोकं रुचौ पुमान्, त्रि.

रोग. रोगः कुष्ठौषधे व्याधौ, मे. रोगः कुष्ठौषधे गदे, वि.

रोचन. रोचनी कर्कशे स्त्रियाम्। रोचना रक्तकह्लारे गोपित्त-
वरयोषितोः। रोचनः कूटशाल्मल्यां पुंसि स्याद्, रोचके त्रिषु, मे. रोचनो
रक्तकह्लारे रोचनः कूटशाल्मलौ। अङ्कल्येऽपि च गोपित्ते रोचना रुचिर-
स्त्रियाम्, वि. रोचनः कूटशाल्मलौ। रोचना रक्तकह्लारे गोपित्ते वर-
योषिति, हे. गोपित्ते रोचना कूटशाल्मलौ रोचनः पुमान्, त्रि.

रोड़. रोड़ः चोदे भवेत् पुंसि त्रस्ते तु वाच्यलिङ्गकः, मे.

रोदन. रोदनं क्रन्दनेऽस्रेऽपि दुरालभौषधौ स्त्रियाम्, मे. रोदनं
क्रन्दनेऽश्रुणि, वि. रोदनं त्वश्रुणि क्रन्दे, हे.

रोदस्, रोदसी. रोदश्च रोदसीति च। दिवि भूमौ पृथक् च स्यात्
सहोक्तावपि तयोस्तथा, मे. रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक्।
सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी, वि. रोद इव तु रोदसी।
दिवि भुवुभयोश्चापि, हे. भूद्यावौ रोदसौ रोदसी च ते, अ.

रोध्र. रोध्रो ना गालवे क्लीवमपराधे च किल्बिषे, मे. रोध्रः साव-
रके रोध्रमपराधेऽपि किल्बिषे, वि. रोध्रो लोध्रे रोध्रमघागसोः, हे.
द्रुमभित्पापयो रोध्रः, त्रि.

रोप. रोपो रोपणवाणयोः, मे, वि. रोपौ रोपणेषू रोपं रन्ध्रे,
हे. शररोपणयो रोपः, त्रि.

रोमन्थ. रोमन्थः स्यात् पशुद्गारो रोमन्थः कीटवर्तनम्, अने.

रोमहर्षण. रोमहर्षणं रोमाञ्चे ना स्तूले च विभीतके, मे. रोमहर्षण-
मितेप्रवद्, रोमाञ्चेऽपि विभीतके, वि. रोमहर्षणाख्या तु रोमोद्गमे विभीतके, हे.

रोपण. रोपणः पारदे हेमपर्णपोपरयोः पुमान्। क्रोधने वाच्यलिङ्गः
स्यात्, मे. रोपणः पारदे हेमकपणोपरयोस्तथा। रोपणेऽपि, वि. रोपणो-
ऽमपर्णे हेमघर्षे पारद ऊषरे, हे.

रोहक. रोहकः प्रेतभेदे ना रोढ़रि त्रिषु विश्रुतः, मे.

रोहिणी. रोहिणी कण्ठरुग्भिदि। अभित्कटुम्भरासोमवल्कीषु लोहितागवोः, मे. रोहिणी कटुरोहिण्यां रोहिणी लोहितागवोः। कण्ठरोगान्तरे भे च सोमवल्कौ च रोहिणी, वि. रोहिणी सोमवल्के भे कण्ठरोगान्तरे गवि। लोहिताकटुरोहिण्योः, हे. अथ रोहिणी। नक्षत्रे रोहितायां च, त्रि.

रोहित्. रोहिन् स्त्र्यां लताभेदे स्त्री नार्के, मे. रोहित् सूर्यलतामिदोः, वि.

रोहित. रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने। पुंसि स्यान् मीनमृगयो भेदे रोहितकद्रुमे, मे. रोहितं रुधिरे घोर ऋजुशक्रशरासने। रोहितो मीनमृगयो भेदे रोहितकद्रुमे, वि. रोहितो लोहिते मीने मृगे रोहितकद्रुमे। रोहितं ऋजुशक्रास्त्रे धौरे, हे. रोहितमृजुशक्रास्त्रे रक्ते ना मृगमीनयोः, त्रि. रोहितं शक्रकोदण्डो रोहितो मत्स्यमुद्गयः। रोहितो लोहितो वर्णो मृगराजस्तु रोहितः, धने.

रोहिताश्व. रोहिताश्वश्चित्रभानौ हरिश्चन्द्रनृपात्मजे, मे. रोहिताश्वो हुतभुजानौ हरिश्चन्द्रनृपात्मजे, वि. रोहिताश्वो हुताशने। हरिश्चन्द्रनृपसुते, हे.

रोहिन्. रोही रोहितकेऽश्वत्थवटपादपयोः पुमान्, मे. रोही रोहितकेऽश्वत्थवटपादपयोरपि, वि. रोही रोहितकेऽश्वत्थे वटे, हे.

(रो) रौहिष. रौहिषं कत्तृणे क्लीबं पुंसि स्याद् हरिणान्तरे, मे. रौहिषं कत्तृणे क्लेयं रौहिषो हरिणान्तरे, वि. रौहिषः। मृगकत्तृणमत्स्येषु, हे.

रौद्र. रौद्रो घर्मे रसे चण्ड्यां स्त्री तीव्रे भीषणे त्रिषु, मे. रौद्रो माध्यरसान्तरे। रौद्रोऽतिभीषणे तीव्रे रौद्री स्कन्दस्य मातरि, वि. रौद्रो भीष्मे रसे तीव्रे रौद्री गौर्याम्, हे.

रौरव. रौरवो नरके घोरे, मे, वि. रौरवो भीषणे नरकान्तरे, हे. रौरवौ घोरनरकौ, त्रि.

रौहिणेय. रौहिणेयोऽन्यवद् वत्से ना बुधे च हलायुधे, मे. रौहिणेयो भवेद् वत्से रेवतीरमणे बुधे, वि. रौहिणेयो वत्से बुधे बले, हे. वत्से बुधे बले रौहिणेयः, लि.

रौहिष. v. रोहिष.

ल. लः शक्रे ला तु दाने स्यात् ग्रहणेऽपि निगद्यते, मे. क्रिया ककुद्गतो मांसं पिनाको भूर्बलागुणः। लम्पटः शक्रसंज्ञश्च वायो रान्तो लकारकः, मा. लो दीप्तौ द्यां लश्च भूमौ भये चाह्लादनेऽपि च। लो वाते लवणे च स्यात् लो दाने च प्रकीर्तितः, ए.

लक्ष. लक्षा न पुंसि सङ्ख्यायां क्लीबं व्याजशरव्ययोः, मे. लक्षं शरव्ये सङ्ख्यायां लक्षं छद्मनि कथ्यते, वि. लक्षं व्याजशरव्ययोः। सङ्ख्यायामपि, हे. सङ्ख्यायां तु न ना लक्षं क्लीबं व्याजशरव्ययोः, लि.

लक्षण. लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्, मे. लक्षणं नाम्नि चिह्ने च सौमित्रौ चापि लक्षणः, वि. लक्षणा सारसी, लि. लक्षणं नामचिह्नयोः। लक्ष्मणं च लक्षणस्तु सौमित्रौ लक्ष्मणो यथा, हे.

लक्ष्मण. लक्ष्मणा स्त्र्योषधीभेदे सारसयामपि योषिति। रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्, मे. लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः। लक्ष्मणौषधिसारस्योः सश्रीके चाभिधेयवत्, वि. लक्ष्मणः श्रीयुते लक्ष्मणौषधौ सारसस्त्रियाम्, हे. दाशरथिः श्रीमांश्च लक्ष्मणः, लि. सारसो लक्ष्मणः प्रोक्तो लक्ष्मणो रामवानुजे, अने. v. लक्षण.

लक्ष्मन्. लक्ष्म चिह्ने प्रधाने च, मे, वि. लक्ष्म चिह्नप्रधानयोः, श लक्ष्माख्या कन्दजातिः स्यात् चिह्नं लक्ष्म च लक्ष्मणम्, अने.

लक्ष्मी. लक्ष्मीः सम्पत्तिशोभयोः। ऋद्धौषधे च पद्मायां वृद्धिनामौषधेऽपि च। स्त्री फलिन्याम्, मे. लक्ष्मीः श्रीरिव सम्पत्तिपद्माशोभाप्रियङ्गुषु, वि. लक्ष्मीः श्रीशोभासम्पत्प्रियङ्गुषु, हे. सम्पत्कमलयो र्लक्ष्मीः, लि. v. विभ्रम.

लक्ष्मीपतिः. लक्ष्मीपतिः पुमान् वासुदेवे नरपतावपि, मे. लक्ष्मी-

पति वासुदेवे लवङ्गद्रुमपूगयोः, वि. लक्ष्मीपति र्जनार्द्दने। पूगे लवङ्ग-द्रुमे च, हे.

लक्ष्मीपुत्र. लक्ष्मीपुत्रस्तु पुंलिङ्गः कामदेवे तुरङ्गमे, मे. लक्ष्मीपुत्रः स्मरे हये, वि. लक्ष्मीपुत्रो हये कामे, हे. लक्ष्मीपुत्रौ स्मरहयौ, त्रि.

लक्ष्य. लक्ष्यं व्याजपदेऽप्येषि शरव्येऽपि नपुंसकम्, मे. लक्ष्यं शरव्ये सङ्ख्यायां लक्षं छद्मनि सम्मतम्, वि.

लग्न. लग्नं राश्युदये क्लीवं सक्तलज्जितयोस्त्रिषु, मे लग्नं राश्युदये लग्नं सक्तलज्जितयोरपि, वि. लग्नन्तु लज्जिते। राशीनामुदये सक्ते, हे. राशीनामुदयो लग्नं सक्तलज्जितयोस्त्रिषु, त्रि.

लघिष्ठ. लघिष्ठोऽत्यल्पके भेले, मे. लघिष्ठोऽत्यल्पके भेलेऽपि, वि. लघिष्ठो भेलकेऽपि च, हे.

लघु. लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीवम्। शीघ्रे च कृष्णागुरुणि पृक्कायामौषधौ तु स्त्री, मे. लघु र्मनोज्ञनिःसारागुरुषु प्रथितो लघुः। कृष्णागुरुणि शीघ्रे च स्पृक्कायां च स्पृक्का लघुः, वि. लघुः स्पृक्का लघ्वगुरुं ह्रस्वं कार्ष्णागुरु द्रुतम्, हे. त्रिष्विष्टेऽल्पे लघुः, अ. पृक्कायां स्त्री लघुः क्लीवं शीघ्रे कृष्णागुरुण्यपि, त्रि.

लघ्वी. लघ्वी लाघवयुक्तायां प्रभेदे स्यन्दनस्य च, मे. लघ्वी ह्रस्वविधायां प्रभेदे स्यन्दनस्य च, वि, हे.

लङ्का. लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च, मे, वि. लङ्का तु शाखा शाकिनी कुलटा पुरी, हे. नगरीशाखयो र्लङ्का, त्रि.

लङ्ग. लङ्गस्तु सङ्गलिङ्गयोः, मे. लङ्गः सङ्गे च लिङ्गे च, वि.

लङ्घन. लङ्घनं द्रुपवासे स्यात् क्रमणे प्लवनेऽपि च, मे, वि. लङ्घनं भोजनत्यागे प्लवने क्रमणेऽपि च, हे.

लञ्ज. लञ्जः स्यात् पट्टकच्छयोः, वि, हे, श्रा.

लट. लटः प्रमादवचनदोषयोरपुरदाहृतः, वि.

लड्डु. लड्डु करञ्जभेदे स्यात् फले वाटो खगान्तरे, मे, वि, लड्डु

पचिकुसुम्भयोः, हे. करञ्जभित्फले लङ्गा वाद्यपचिमभेदयोः, त्रि. लङ्गा शिल्पी खगान्तरे, हा.

लता. लता प्रियङ्गुशाखयोः। स्पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च। माधवीदूर्वयोः, मे. लता ज्योतिष्मतीदूर्वाशाखावल्लीप्रियङ्गुषु। स्पृक्कामाधव्योः कस्तूर्यन्नाम्, हे. लता ज्योतिष्मतीस्पृक्काशाखावल्लीप्रियङ्गुषु। लता कस्तूरिकायाश्च माधवीदूर्वयोरपि, वि. कस्तूरीष्टयोर्लता, त्रि.

लभ्य. लभ्यं युक्ते च लब्धव्ये, मे, वि. लभ्यं लब्धव्ये युक्ते च, हे. युक्ते च लभ्यं स्यात्, त्रि.

लम्पाक. लम्पाको लम्पटे देशे, मे, वि, हे.

लम्बकर्ण. लम्बकर्णः स्मृतोऽङ्कोठपादपे छगलेऽपि च, मे, वि. लम्बकर्णः पुनश्छगे। अङ्कोठे, हे. छागेऽपि लम्बकर्णः स्यात्, त्रि.

लम्बा. लम्बा महालयागौर्योस्तिक्ततुम्ब्यामपि स्त्रियाम्, मे. लम्बा श्रीतिक्ततुम्ब्योः, वि.

लम्बोदर. लम्बोदरः स्यादुद्धाने गणानामधिपेऽपि डि, मे. लम्बोदरः स्यादुधाने गणानामधिपेऽपि च, वि, त्रि. लम्बोदरः स्यादाधाने प्रमथानाञ्च नायके, हे.

लय. लयो विनाशे संश्लेषे साम्ये तौर्यत्रिकस्य च, मे, वि. लयसौर्यत्रयीसाम्ये संश्लेषणविलासयोः, हे. अथ श्लेषवादयोः। लयः, त्रि.

ललज्जिह्व. ललज्जिह्वोऽन्यवद् हिंस्रे क्रमेलकशुनोः पुमान्, मे. ललज्जिह्वो मतो हिंस्रे क्रमेलकशुनोरपि, वि.

ललना. ललना कामिनीनारीभेदजिह्वासु योषिति, मे. ललना नाड़िकाभेदे जिह्वायां वरयोषिति, वि. ललना स्त्री नारी जिह्वा, हे. योषित् जिह्वा च ललना, त्रि

ललाम. ललामं लाञ्छने ध्वजे। शृङ्गे प्रधाने भूषायां रम्ये वालधिपुण्ड्रयोः। तुरङ्गे च प्रभावे, मे. ललामं [illegible]

अ. भूषायां लाङ्गूले प्रधानश्रृङ्गप्रभावपुण्ड्रेषु। ध्वजलक्ष्मतुरङ्गेषु नवसु ललाम प्रयुज्यते प्राज्ञैः, ह. V. ललामन्.

ललामन्. ललाम स्यात् प्रभावे च लाञ्छनध्वजवाजिषु। श्रृङ्गे प्रधाने भूषायामपि वालधिपुण्ड्रयोः, मे. ललाम च ललामश्च लाञ्छनध्वजवाजिषु। श्रृङ्गे प्रधाने भूषायां रम्ये वालधिपुण्ड्रयोः। प्रभावे च, वि. ललामवत् ललामाख्ये चिह्ने श्रृङ्गपताकयोः। रम्ये प्रधाने भूषायां पुण्ड्रे पुच्छप्रभावयोः, हे. हये पुच्छे ध्वजे पुण्ड्रे मैले पुंसि गुणाधिके। चिह्ने धाननि भूषायां ललामेति बुधै र्मतम्, अने.

ललित. ललितं त्रिषु। ललिते चेप्सितेऽपि स्यात् हारभेदे तु न द्वयोः, मे. ललितं हारभेदे स्यादीप्सिते ललितेऽपि च, वि. ललितमीप्सिते। ललितो हारभेदे स्यात्, हे.

लव. लवो लेशे विनाशे च छेदने रामनन्दने, मे, वि. लवः कालभिदि च्छिदि। विनाशे रामजे लेशे, हे. लवश्छेदनलेशयोः, त्रि.

लवण. लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे। तद्युक्ते वाच्यलिङ्गः स्यात् नदीभेदस्त्रियोः स्त्रियाम्, मे. लवणो रसरक्षोऽब्धिभेदेषु लवणान्विते, वि. लवणो राक्षसे बले। अब्धिभेदे लवणा त्विट्, हे.

लाङ्गल. लाङ्गली तोयपिप्पल्यां क्लीवन्तु कुसुमान्तरे। गोदारणे तृणराजगृहदारुविशेषयोः, मे. लाङ्गली जलपिप्पल्यां लाङ्गलं कुसुमान्तरे। सीरेऽपि लाङ्गलं तालगृहदारुविशेषयोः, वि. लाङ्गलं तालहलयोः पुष्पभिद्गृहदारुणोः। लाङ्गली जलपिप्पल्याम्, हे. लाङ्गलं हलमिष्यते, अने.

लाङ्गलिन्. लाङ्गली नारिकेले स्त्री रेवतीरमणे पुमान्, मे. लाङ्गली बलभद्रे स्यात् नारिकेले च लाङ्गली, वि लाङ्गली बलभद्रे स्यात् नारिकेले, हे.

लाङ्ग(ङ्गू)ल. लाङ्गूलं पुच्छशेफसोः, मे. लाङ्गूलं मेहने पुच्छे, वि. लाङ्गूलं शिश्नपुच्छयोः, हे.

लाज अथ लाजः स्यादार्द्रतण्डुले। नपुंसकमुशीरेऽथ स्त्रियां

मुंभृग्नि चाघते, मे. लाजाः सुन्न भ्रष्टधान्येषु लाजः सन्नादार्द्र तण्डुले। उशीरे लाजमुद्दिष्टम्, वि. लाजः सम्रादार्द्र तण्डुले। लाजास्तु भ्रष्टधानाः सुन्न लाजं पुनरुशीरके, हे.

लाञ्छन. लाञ्छनं नामचिह्नयोः, मे. लाञ्छनं लक्षणे नाम्नि,वि. लाञ्छनं लक्ष्यसंज्ञयोः, हे.

लाट. लाटो देशान्तरेंऽशुके, मे. लाटौ वस्त्रदेशयोः, हे. लाटो देशांशुकेऽपि च, वि. लाटोऽंशुके च देशे च, त्रि.

लालस. लालसौत्सुक्यतृष्णातिरेकयाञ्चासु च द्वयोः, मे. लालसो लालसाऽपि सम्राद् याञ्चातृष्णातिरेकयोः। औत्सुक्ये च, वि. लालसो लोलयाञ्चयोः, हे. लालसे प्रार्थनौत्सुक्ये, अ.

लालाटिक. लालाटिकः प्रभो भालदर्शिन्याश्लेषणान्तरे। कार्याक्षमे, मे. लालाटिकः प्रभो भालदर्शिन्याश्लेषणान्तरे। कार्याक्षमेऽपि, वि लालाटिकः सम्रादाश्लेषे भवेत् कार्याक्षमेऽपि च। प्रभो भालदर्शिनि च, हे. लालाटिकः प्रभो भालदर्शी कार्याक्षमश्च यः, अ.

लासक. लासको लास्यकारिणि। मयूरे लसके च, मे. लासको लसके लास्यकारिण्यपि मयूरके, वि. लासकौ केकिनर्तकौ, हे.

लास्य. लास्यं तौर्यत्रिके मतम्। नृत्ये च, मे. लास्यं तौर्यत्रिके नाट्ये, वि.

लिङ्ग. लिङ्गं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि। शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकम्, मे. लिङ्गं मेहनचिह्नयोः। शिवमूर्तावनुमाने साङ्ख्योक्तप्रकृतावपि, हे लिङ्गं चिह्नेऽनुमानेऽपि साङ्ख्योक्तप्रकृतावपि। शिवमूर्तिविशेषेऽपि मेहने च प्रचक्षते, वि. लिङ्गं चिह्नशेफसोः, अ. व्यक्ते साङ्ख्योदिते लिङ्गं स्थाणौ शेफसि लक्ष्मणि। पुंस्त्वादौ, त्रि.

लिप्त. लिप्तं विलिप्तविषदिग्धयोः। भुक्ते, मे. लिप्तं भुक्तविलिप्तयोः। विषाक्ते, हे लिप्तं विषाक्ते भुक्ते च वाच्यवत् सम्राद् विलेपिते,वि.

ली. लीः श्लेषणे च चपले, मे.

लीला. लीला केलिविलासयोः। शृङ्गारभावचेष्टायाम्, मे. लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु, वि. लीला केलि विलासश्च शृङ्गारभावजा क्रिया, हे. लीला विलासक्रिययोः, अ.

लुब्ध. लुब्ध आकाङ्क्षिणि व्याधे, मे, हे. लुब्धो मृगयुकाङ्क्षिणोः, वि.

लूता. लूता वृर्णनाभपिपीलिकागदान्तरे, मे. लूता तु रोगे पिपीलिकोर्णनाभयोः, हे. लूता पिपीलिकायां स्यादूर्णनाभे गदान्तरे, वि.

लूतामर्कटक. लूतामर्कटकः पुन्नागनवमालिकयोः कपौ, हे. लूतामर्कटकः पुन्नागे नवमाल्यां प्लवङ्गमे, वि.

लूनक. लूनको भेदिते पशौ, मे. लूनकः स्यात् पशौ भिन्ने, वि. लूनकस्तु पशौ भिन्ने, हे.

लेख. लेखो लेख्ये सुरे लेखा लिपिराजिकयोर्मता, मे, वि. लेखो लेख्ये देवते च लेखा राजयां लिपावपि, हे. लेखो देवेऽपि पंक्तौ, त्रि.

लेखन. लेखनं छेदने भूर्जे लिपिन्यासे, मे. लेखनं छेदने भूर्जे लिपिन्यासे च लेखनम्, वि. लेखनम्। भूर्जे छेदे लिपिन्यासे, हे. छेदे भूर्जे च लेखनम्, त्रि.

लेखनिक. लेखनिकः कथितो लेखहारके। लेखेषु परहस्तेन स्वहस्तस्य च लेखके, मे. लेखनिकस्तु तत्र यः। स्वहस्तं परहस्तेन लिखितेषु विलेखयेत्। लेखहारे, हे. लेखनिको लेखहारे यः स्वहस्तं विलेखयेत्। लेखेषु परहस्तेन तत्रापीष्ट प्रदर्शितः, वि.

लेप. लेपः प्रलेपने अशौ, मे. लेपस्तु सुधालेपनालेपनेषु च, वि. लेपस्तु लेपने। अशने च सुरायां च, हे. लेपौ लेपनजेमने, त्रि.

लोक. लोको जनेऽपि भुवने, मे. लोकस्तु भुवने जने, वि, अ. लोको विश्वे जने, हे.

लोचक. लोचको मांसपिण्डेऽक्षितारकायाश्च कज्जले। ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः। निर्बुद्धौ कर्णपूरे च मौर्व्यां भ्रूश्लथचर्मणि, मे. लोचको मांसपिण्डे स्यादक्षितारे च कज्जले। ललाटाभरणे स्त्रीणां कदली-

नीलवस्त्रयोः। नियुं क्ली कर्णपूरे च मौवर्ज्ञी भग्नस्थचर्मणि, वि. लोचको नीलवाससि। कज्जले मांसपिण्डेऽचितारे स्त्रीभालभूषणे। नियुं क्ली कर्णिका-मोचाजग्रास्नु प्रसस्थचर्मणि, हे. नीलवस्त्रेऽचितारायां लोचको निर्मतौ लिषु, लि.

लोत. लोतमश्रुणि चोरिते, वि.

लोमश. लोमशो मुनिमेषयोः। लोमान्विते स्त्रियां काकजङ्घा-मांसीवचासु च। शूकशिम्बिमहामेदाकाशीशे शाकिनीभिदि, मे. लोमशो लोमसंयुते। मेढ्रके चाथ कासीसशृगालीजटिलासु च। लोमशा शूकशिम्बग्रास्व मर्कटीकाकजङ्घयोः। महामेदातिबलयोः शाकिनीभिदि चेष्यते, वि. लोमशो लोमयुक्तेऽवौ लोमशा शाकिनीभिदि। महामेदाकाकजङ्घाशृगालीजटिलासु च। काशीशेऽतिबलाशूकशिम्बीमर्कटिकासु च, हे. लोमशो मेढ्रकेऽपि स्यात्, लि.

लोल. लोलः स्याद् वाच्यलिङ्गकः। सतृष्णे चञ्चले लोला जिह्वा-कमलयोः स्त्रियाम्, मे. लोलश्चलसतृष्णयोः। लोला जिह्वाकमलयोः, वि. लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः, हे. जिह्वाकमलयो र्लोला, लि.

लोह. लोहोऽस्त्री शस्त्रके लौहे जोङ्गके सर्वतैजसे, मे. लोहं काला-यसे सर्वतैजसे जोङ्गकेऽपि च, हे. लोहस्तु शस्त्रके लोहं जोङ्गके सर्व-तैजसे, वि.

लोहल. लोहलः शृङ्खलाधार्ये भवेदव्यक्तवाचि च, वि. लोहलः शृङ्ख-लाधार्येऽव्यक्तवाचिनि च लिषु, मे. लोहलोऽस्फुटवादिनि। शृङ्खलाधार्ये, हे.

लोहित. लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने। पुमान् नदान्तरे भौमे वर्णे च लिषु तद्वति, मे. लोहितं कुङ्कुमे रक्ते गोशीर्षे च कुचन्दने। लोहितः स्यान् नदे भौमे वर्णभेदे च वाच्यवत्, वि. लोहितो मङ्गले नदे। वर्णभेदे लोहितन्तु कुङ्कुमे रक्तचन्दने। गोशीर्षे रुधिरे युद्धे, हे.

लौहित्य. लौहित्यं लोहितत्वे स्यात् क्लीवं पुंसि नदान्तरे, मे. लौहित्यः सागरे व्रीहौ, वि. लौहित्योऽब्धौ नदे व्रीहौ, हे.

व. वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् । वः सान्त्वने च वाते च वरुणे च निगद्यते, मे. वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्, वि. वः पश्चिमदिगीशे स्यादौपम्ये पुनरव्ययम्, हे. वालो वामांसनिलयो मेदो वारिदवाहनौ। उत्कारो जलसंघश्च खङ्गोशोऽपि वकारकः, मा. वः शोषे चाश्रये चैव प्रलये साधनेऽपि वः। मानसे वरुणे चैव वकारः सान्त्वनेऽपि च, ए.

वंश. पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः, मे. वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च, वि. वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च, हे. द्वौ वंशौ कुलमस्कारौ, श. वंशो वर्गे च पृष्ठांशे, त्रि. वंशो वेणौ कुलेऽपि च; शा. पृष्ठास्थन्यपि वंशः, रु. मेरौ दृषविशेषे च वंशशब्दस्तु कार्मुके, अने. करिपृष्ठे कुले वेणौ वंशाख्या कविभिः स्मृता, अने.

वक्तव्य. वक्तव्यं कुत्सिते हीने वचनार्हे च वाच्यवत्, मे. वक्तव्यो वाच्यवद् गर्ह्ये वचोऽर्हहीनयोरपि, हे. गर्ह्यहीनौ च वक्तव्यौ, श.

वक्तृ. वक्ता तु पण्डितेऽपि स्याद् वाग्मिन्यप्यन्यलिङ्गकः, मे. वक्ता वाग्मिनि पण्डिते, वि.

वक्त्र. वक्त्रं मुखे छन्दोभेदे, मे. वक्त्रं छन्दोऽन्तरे मुखे, वि. वक्त्रमात्रेत्र छन्दसि च, हे.

वक्र. वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् । त्रिषु क्रूरे च कुटिले, मे. वक्रः स्यात् कुटिले क्रूरे पुटभेदे शनैश्चरे, वि. वक्रं पुटभेदे वक्रः कुटिले क्रूरभौमयोः, हे. वक्रः शनैश्चरे क्रूरे पुटभेदे तथाऽध्वजौ, त्रि.

वकनक. वकनकस्तु पिशुने तथैव शुकपक्षिणि, मे. वकनकः शुके खले, वि. वकनकौ खलशुकौ, हे.

वङ्क. वङ्कः पर्याणभागे ना नदीपाते च भङ्गुरे,मे. वङ्कः पर्याणभागे स्यात् नदीपाते च भङ्गुरे, वि.

वङ्ग. वङ्गं सीसकरङ्गयोः । वार्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे, मे. वङ्गं सीसकरङ्गयोः । वङ्गः कार्पासवार्ताकदेशभेदेषु भाषितः, वि.

वङ्गः कार्पासे वन्ताके वङ्गा जनपदान्तरे। वङ्गं त्रपुणि सीसे च, हे.

वच. वचः कीरे वचौषधौ। शारिकायाञ्च, मे. वचा स्यादुग्रगन्धायां सारिकायां शुके वचः, वि. वचः शुके वचौषधौ। शारिकायाम्, हे. सारिकायाञ्च वचा, ति.

वचक्नु. वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत्, मे. वचक्नु-र्वाग्मिविप्रयोः, वि.

वज्र. वज्रं स्यन्नाद् बालके धात्रां क्लीवं योगान्तरे पुमान्। वज्रा स्नुह्यां गुडूच्याञ्च वज्री स्नुह्यन्तरे स्नुता। दम्भोली हीरकेऽप्यस्त्री, मे. वज्रं हीरकदम्भोलिबालकामलकेषु च। वज्रा गुडूचिकायां स्यात्, वि. वज्रं कुलिशहीरयोः। बालके वज्रा त्वग्लता, हे. वज्रोऽस्त्री हीरके पवौ, श्र.

वज्रिन्. वज्री तु वृक्षे देवाधिपे पुमान्, मे.

वञ्चक. वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके, मे. अथ वञ्चकः खलधूर्तयोः। जम्बूके गृहबभ्रौ च, वि. वञ्चको जम्बुके गेहनकुले खलधूर्तयोः, हे. वञ्चकौ धूर्तफेरवौ, ति.

वञ्जुल. वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि, मे. वञ्जुलो वेतसाशोकतिनिशे, वि. वञ्जुलस्त्वशोके तिनिशद्रुमे। वानीरे, हे.

वट. वटौ त्रिषु गुणे पुंसि स्यात् न्यग्रोधकपर्दयोः, मे. वटो गोले गुड़े भवेत् वटः साम्यवराटयोः। बटः कपर्दे न्यग्रोधे शुल्ववर्तिकयो वटी, वि. वटो गोले गुणे भवेत् वृक्षे साम्यवराटयोः, हे. वटौ त्रिषु गुणे पुंसि न्यग्रोधे च कपर्दके, ति.

वठर. वठरोऽम्बष्ठशठयोः, हे. वठरः कुक्कुटे पुंसि शठे च, मे. वठरः शठवेष्टयोः। कक्कुटे, वि.

वड़वा. वडवा द्विजयोषिति। अश्वायां कुम्भदास्याञ्च नारीजात्य-न्तरेऽपि च, मे. वड़वाऽश्वाकुम्भदास्योः स्त्रीविशेषे द्विजस्त्रियाम्, वि. वड़वाऽश्वायां स्त्रीभेदे कुम्भदास्यां द्विजस्त्रियाम्, हे. वड़वाऽश्वाकुम्भ-दास्योः, ति

वण्ठ. वण्ठः सप्रादकृतोद्वाहे खर्वे कुन्तायुधेऽपि च, मे, वि. वण्ठः कुन्तायुधे खर्वे भृत्याकृतविवाहयोः, हे.

वण्ठर. वण्ठरः स्थगिकारज्ज्वौ लाङ्गूले कुक्कुरस्य च। करीरकोषे तालस्य पल्लवे च पयोधरे, मे. वण्ठरस्तालपल्लवे। करीरकोशेऽपि, वि.

वण्ठाल. वण्ठालो युद्धभेदे च नौकायाञ्च खनित्रके, मे. वण्ठालं शूरयो र्युद्धे नौकायाञ्च खनित्रके, वि. वण्ठालः शूरयुद्धनौखनित्रयोः, हे.

वण्ड. वण्डा तु पांशुलायां स्त्री त्रिषु हस्तादिवर्जिते, मे. वण्डापि पांशुलायां सप्राद् वण्डो हस्तादिवर्जिते, वि.

वत. वतामन्त्रणसन्तोषखेदानुकम्पविस्मये, मे, वि. वतामन्त्रणखेदयोः। हत्यार्थयन्त्रानुकम्पासु, हे. निन्दायां विस्मये वत, श. खेदानुकम्पासन्तोषविस्मयामन्त्रणे वत, अ.

वतंस. वतंसस्तु पुमान् कर्णपूरशेखरयोरपि, मे. V. श्लतंस.

वत्स. वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीवम्, मे. वत्सस्तर्णकपुत्रादिवर्षे वत्सन्तु वक्षसि, वि. वत्सा उरस्तुक्र्षर्णतर्णकाः, हे. वत्सौ तर्णकवर्षौ द्वौ, श. पुत्रादौ तर्णके वर्षे वत्सः क्लीवन्तु वक्षसि, त्रि. वत्सौ तर्णकपुत्रकौ, भने. वत्सः संवत्सरेऽपि निर्दिष्टः, ड.

वदान्य. वदान्यो दानशौण्डे सप्रात् चारुवादिनि वाच्यवत्, मे. वदान्यो दानशौण्डे सप्राद् वदान्यश्चारुभाषिणि, वि. वदान्यः प्रियवागुदारशीलयोरुभयोरपि, हे. वदान्यो वल्गुवागपि, अ. वदान्यस्त्यागवान् सुवाक्, त्रि.

वध. वधो हिंसकहिंसयोः, हे.

वधू. वधूः स्त्री शारिवौषधे। स्नुषाप्रटीनवोढास्त्रीभार्यास्पृक्काङ्गनासु च, मे. वधूः स्नुषानवोढास्त्रीभार्यास्पृक्काङ्गनासु च। सट्यां च शारिवायां सप्रात्, वि. वधूः पत्न्यां स्नुषानार्योः स्पृक्काशारिवयोरपि, हे. वधूर्जाया स्नुषा स्त्री च, श. स्पृक्का महिला च वधूः, त्रि. वधूर्नारी वधूर्भार्या वधूः पुत्रवधूरपि, भने.

वन. वनं नपुंसकं नीरे निवासालयकानने, मे. वनं कानननीरयोः। प्रवासे निलये चापि वनं प्रस्रवणेऽपि च, वि. वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने, हे. वने सलिलकानने, अ. वनं काननमम्बु, च, अने.

वनज. वनजा मुद्गपर्ण्यां ना मुस्तके क्लीबमम्बुजे, मे. वनजो मुस्तके पद्मे वनजं वनजो गजे। वनजा मुद्गपर्ण्यां च, वि. वनजो मुस्तके स्तम्बेरमे वनजमम्बुजे। वनजा तु मुद्गपर्ण्याम्, हे. गुल्मेऽपि च वनजः, त्रि.

वनमालिन्. वनमाली तु गोविन्दे वाराह्यां वनमालिनी, मे, वि.

वनश्वन्. वनश्वा गन्धमार्जारे वृकव्याघ्रयोः पुमान्, मे. वनश्वा गन्धमार्जारे वृकव्याघ्रयोरपि, वि. वनश्वा विप्रतारके। शार्दूले गन्धमार्जारे, हे. वनश्वा जम्बुके व्याघ्रे, त्रि.

वनस्पति. वनस्पति र्ना द्रुमात्रे विनापुष्पफलद्रुमे, मे. वनस्पतिर्द्रुममात्रे विनापुष्पफलद्रुमे, वि. वनस्पति द्रुमात्रके। विनापुष्पफले द्रौ च, हे. द्रुममात्रेऽपि वनस्पतिः, त्रि.

वनित. वनिता जातरागस्त्रीस्त्रियोस्त्रिषु च याचिते। सेविते, मे. वनिता जनितात्यर्थानुरागायां च योषिति। वनितं याचितेऽपि स्याद् वनितं सेवितेऽपि च, वि. वनितं तु स्यात् प्रार्थिते सेवितेऽपि च। वनितोत्पादितात्यर्थरागनार्यपि नार्यपि, हे. वनिता जनितात्यर्थानुरागायाश्च योषिति, श्र.

वन्दनी. वन्दनी नतिजीवातुकटिमाचलकर्मसु, मे.

वन्य. वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः, मे. वन्यं वनभवे वन्या वनवारिसमूहयोः, वि.

वपन. वपनं बीजाधाने च मुण्डने, मे, वि. वपनं मुण्डने बीजाधाने, हे.

वपा. वपा विवरमेदसोः, मे, वि, हे. मेदो विलं वपा, त्रि.

वपुस्. वपुः क्लीवं तनौ प्रशस्ताकृतावपि, मे. वपु र्भव्याकृतौ देहे, वि. वपुः प्रशस्ताकृतौ देहे, हे.

वप्तृ. वप्ता तु जनके पुंसि वापकेऽप्यभिधेयवत्, मे.

वप्र. वप्रस्ताते पुमानस्त्री रेणुक्षेत्रे चये तटे, मे. पितृकेदारयो-र्वप्रो वप्रः प्राकाररोधसोः, वि. वप्रः प्राकाररोधसोः। क्षेत्रे ताते चये रेणौ, हे. वप्रस्ताते स्त्रियां क्षेत्रे चये रेणौ च रोधसि, त्रि. तटो वप्रः पिता वप्रो वप्रः केदार इत्यपि, अने. गिरिसानुन्यपि वप्रस्, रु.

वमथु. वमथुः पुंसि वमने गजस्य करशीकरे, मे. वमथु र्वमनेऽपि स्याद् गजस्य करशीकरे, वि. वमथु र्वमने कासे गजस्य करशीकरे, हे.

वमन. वमनं छर्दनेऽर्दने, मे, हे. वमनं छर्दनेऽर्दने। स्यादाहुतौ च, वि.

वमि. वमि र्वान्तौ स्त्रियां पुंसि कृताग्ने, मे. वमि र्वान्तौ कृताग्ने, वि. वमि र्वान्तेऽनले, हे.

वयःस्थ. वयःस्था तु स्त्रियां ब्राह्मीगुडूच्यामलकीषु च। सूक्ष्मैलायाञ्च काकोल्यां पथ्यायां तरुणे त्रिषु, मे. वयःस्थो वाचयवद् यूनि वयःस्था शाल्मलीद्रुमे। ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषु च, वि. वयःस्थो मध्यमवया वयःस्था शाल्मलीद्रुमे। ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषु च, हे. काकोल्यामलकी ब्राह्मी वयःस्था तरुणे त्रिषु, त्रि.

वयस्. वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्, मे. वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके, वि. वयस्तारुण्ये बाल्यादौ खगे, हे. खगबाल्यादिनो र्वयः, अ.

वर. वरो जामातरि वृतौ देवतादेरभीप्सिते। षिड्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम्। वरी प्रोक्ता शतावर्यां वरा च स्यात् फलत्रिके। मनागिष्टे वरं क्लीवं केचिदाहुस्तदव्ययम्, मे. वरोऽभीष्टे देवतादे र्वरो जामातृषिड्गयोः। श्रेष्ठेऽन्यवद् वरो वृतौ वरं काश्मीरजे मतम्। त्रिफलायां वरा प्रोक्ता शतावर्यां वरी वरम्।: अव्ययन्तु मनागिष्टे, वि. वरो वृतौ।

विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते। वरं तु घुसृणे किञ्चिदिष्टौ वरी शतावरी, हे. देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये, अ. वरो जामातरि वृते कुङ्कुमे च नपुंसकम्, त्रि वरी श्रेष्ठशताभनी, अने.

वरचन्दन. वरचन्दनमाख्यातं कालीये देवदारुणि, मे वरचन्दनमाम्नातं कालीये देवदारुणि, वि. वरचन्दनं देवदारुणि। कालेये, हे.

वरट. वरटा द्वयो र्वरट्यां स्त्री हंस्यां च तत्पतौ पुमान्, मे. वरटा हंसयोषायां गन्धोल्यां वरटाऽपि च, वि वरटा हंसयोषिति। गन्धोल्यां च, हे.

वरण. वरणस्तु पुमान् तिक्तशाकप्राकारयोरपि। क्लीवं कन्यादिवरणे वेष्टने स्त्री नदीभिदि, मे. वरणस्तिक्तशाकेऽपि प्राकारे वरणं मतम्, वि. वरणो वरणद्रुमे। प्राकारे वरणं स्त्रियाम्, हे.

वरण्ड. वरण्डोऽप्यन्तरे वेदौ समूहमुखरोगयोः, मे. वरण्डा सारिका वर्तिशस्त्रभेदे च योषिति, मे. वरण्डोऽप्यन्तरावेदौ सन्दोहमुखरोगयोः, वि. वरण्डा सारिकावर्तिखड्गधेनुषु कथ्यते, वि. वरण्डो वदनामये। अन्तरावेदौ सन्धे च वरण्डा शारिका छुरी। वर्तिः, हे. वरण्डो वदनामये। समूहे चान्तरावेद्याम्, त्रि.

वरण्डक. वरण्डकस्तु मातङ्गवेदी यौवनकण्टके। वर्तुले, मे. वरण्डकस्तु मातङ्गवेदी यौवनकण्टके। संवर्तुले, वि. वरण्डकस्तु मातङ्गवेदी यौवनकण्टके। संवर्तुले च भित्तौ च, हे.

वरत्रा. वरत्रा रज्जुकक्षयोः, मे. वरत्रा वर्तिकक्षयोः, हे.

वरद अथ वरदा स्त्रियाम्। कन्यायां वाच्यलिङ्गस्तु प्रसन्ने च समर्धके, मे. वरदोऽपि प्रसन्ने स्याद् वरदः शान्तचेतसि। वरदापि च कन्यायाम्, वि. वरदः पुनः। प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका, हे.

वरला. वरला वारला चापि गन्धोलीहंसकान्तयोः, मे. वारला वरला चापि गन्धोलीहंसयोषितोः, हे.

वरवर्णिनी वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च। फलिन्या-

कुत्समानारीसाधीयस्यामपि स्त्रियाम्, मे. स्याद् वरवर्णिनी लाक्षाहरिद्रा-रोचनासु च। स्त्रीरत्ने च फलिन्यां च दृश्यते वरवर्णिनी, वि. वरवर्णिन्यङ्गना-लाक्षाप्रियङ्गुषु। रोचनायां हरिद्रायाम्, हे. स्त्रीरत्ने च हरिद्रायां लाक्षायां वरवर्णिनी, हा.

वराक. वराकः सङ्गरे पुंसि शोचनीयेऽभिधेयवत्, मे. वराकः सङ्गरे शोच्ये, वि. वराकः शोच्यरणयोः, हे. वराको मूर्खके भोरौ, अने

वराङ्ग. वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि, मे, वि. वराङ्गं योनौ शीर्षे गुडत्वचि। कुञ्जरे च, हे. वराङ्गन्तु गुडत्वचि गजे पुमान्, त्रि. वराङ्गं मूर्धगुह्ययोः, अ.

वराटक. वराटकः पद्मवीजकोषे रज्जौ कपर्दके, मे. वराटकः स्थूल-रज्जौ पद्मवीजे कपर्दके, वि. वराटकः पद्मवीजकोषे रज्जौ कपर्दके, हे. कप-र्दरज्जुराजीववीजकोषे वराटकः, त्रि.

वरारोह. वरारोहा कटावपि। वरारोहस्तु कथितो हस्त्यारो-हावरस्त्रयोः, वि. वरारोहो गजारोहे वरारोहा कटावपि, हे.

वराह. वराहः शूकरे विष्णौ मानभेदेऽद्रिमुस्तयोः, मे. वराहः शूकरे मेषे मुस्तकेऽपि, त्रि. वराहोऽब्दे किरौ विष्णौ नायकेऽप्यद्रिमुस्तयोः, वि. वराहो नायके किरौ। मेषे मुस्ते गिरौ विष्णौ, हे.

वरिष्ठ. वरिष्ठं मरिचेऽपि च। ताम्रे क्लीवं तित्तिरौ ना वरोत्त-मयोस्त्रिषु, मे. वरिष्ठः स्यादुरुतरे प्रवरे तित्तिरावपि। वरिष्ठं मरिचे ताम्रे, वि. वरिष्ठस्तु तित्तिरौ। वरिष्ठं मरिचे ताम्रे वरोत्तमयोरपि, हे. वरिष्ठं मरिचेऽपि च। ताम्रे चोरुतरे च, त्रि.

वरीयस्. वरीयान् योगभिद्श्रेष्ठवरिष्ठेष्वतियूनि च, मे. वरीया-नतियूनि स्याद् वरिष्ठे श्रेष्ठयोगयोः, वि. वरीयान् श्रेष्ठयोगयोः। अति-यून्यतिविस्तीर्णे, हे. (अतिशये) वरीयांसूरुवरयोः, अ.

वरुण. वरुणस्तरुभेदेऽप्सु, पश्चिमाशापतावपि, मे. वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः, वि. वरुणोऽर्केऽप्पतावपि, हे.

वरूथ. वरूथो रथगुप्तौ स्याद् वरूथं चर्मवेश्मनोः, मे, त्रि. वरूथं स्यात् तनुत्राणे रथगोपनवेश्मनोः, हे. वरूथो निजराट्‌कः, त्रि.

वर्कर. वर्करः परिहासे स्याच्छागे युवपशावपि, मे. वर्करस्तरुणे मेषे, वि. वर्करः पशुनर्मणोः, हे.

वर्कराट. वर्कराटः कटाक्षे स्यात् तरुणादित्यरोचिषि। नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते, मे. वर्कराटः कटाक्षे स्यात् तरुणादित्यरोचिषि। स्त्रीणां पयोधरोत्सङ्गकान्तदन्तनखेऽपि च, वि. वर्कराटस्तु तरुणादित्यरोचिःकटाक्षयोः। स्त्रीणां पयोधरोत्सङ्गकान्तदन्तनखेऽपि च, हे. वर्कराटः कटाक्षे च स्त्रीणां स्तननखक्षते, त्रि.

वर्चस्. वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये, मे. वर्चो दीप्तौ पुरीषे च वर्चो रूपेऽपि च क्वचित्, वि. वर्चस्तु तेजसि। गूथे रूपे, हे. तेजःपुरीषयो र्वर्चः, अ, अने.

वर्जन. अथ वर्जनं हिंसात्यागयोः, मे. वर्जनं त्यागहिंसयोः, वि, हे.

वर्ण. वर्णो द्विजादिशुक्लादियशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपने, मे. वर्णः काञ्चनयज्ञयोः। वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपयशोऽक्षरे। विलेपने कुथायाञ्च वर्णः स्त्रमाद् गुणभेदयोः, वि. वर्णः स्वर्णे मखे स्तुतौ। रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे। भेदे गीतक्रमे चित्रे यशस्तालविशेषयोः। अङ्गरागे च वर्णन्तु कुङ्कुमे, हे. वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे, अ. अक्षराणि स्मृता वर्णा वर्णाः श्वेतादयो गुणाः। वर्णो नाम्यमुखे गाथा वर्णा ज्ञेया द्विजादयः, अने. वर्णो गुणाक्षरयशःशुक्लादिब्राह्मणादिषु। वर्णः स्तुतौ कुथायाञ्च वर्णः स्त्रमाद् रूपभेदयोः, श. शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते। गीतक्रमे स्तुतौ वेषे वर्णशब्दं प्रचक्षते, र.

वर्णक. वर्णकश्चारणे स्त्री तु चन्दने च विलेपने, मे. वर्णकश्चारणे स्मृतः। विलेपने चन्दने च वर्णकं स्त्रमात्, वि. अथ वर्णकः। विलेपने मलयजे चारणे, हे. लेखन्यां वर्णिकाऽपि स्त्रमात्, श.

वर्णविलोडक वर्णविलोडक एव श्लोकस्तेने च सन्धिचौरे च, मे. वर्णविलोडकः श्लोकच्छायाहारिणि कुम्भिले, वि. वर्णविलोडक. काव्यच्छायाहृत्सन्धिचौरयोः, हे.

वर्णाट. वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने, मे, वि. वर्णाटश्चित्रकारिणि। गायने स्त्रीकृताजीवे, हे. वर्णाटौ कामिगायनौ, त्रि.

वर्णिन्. वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि, मे, वि. वर्णी पुनश्चित्रकरे लेखके ब्रह्मचारिणि, हे.

वर्तक. वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयोः, मे. वर्तकोऽश्वखुरे खगे, वि, हे. खुरेऽप्यश्वस्य वर्तकः, अ.

वर्तन. वर्तनो वामने क्लीबं वृत्तौ स्त्री पेषणाध्वनोः। न पुंसि तूलनालायां तर्कुपिण्डे च जीवने। वर्तिष्णौ त्रिषु, मे. वर्तनी तर्कुपिण्डे स्याद् वर्तनो मलने पथि, वि. वर्तनी पथि। वर्तने तर्कुपिण्डे च, हे. वर्तनस्तर्कुपीठेऽपि स्त्रियां वर्तनवर्त्मनोः, त्रि.

वर्तरूक वर्तरूको नदीभेदे काकनीडे जलावटे, मे, वि वर्तरूकः काकनीडे जलावटे, हे.

वर्ति. वर्ति भेषजनिर्माणे नयनाञ्जनलेखयोः। गात्रानुलेपनीदीपदशादीपेषु योषिति, मे. वर्ति दीपदशादीपगात्रानुलेपनीषु च। वर्ति भेषजनिर्माणे नयनाञ्जनलेखयोः, वि. वर्ति गात्रानुलेपन्यां दशायां दीपकस्य च। दीपे भेषजनिर्माणे नयनाञ्जनलेखयोः, हे. वर्ति दीपदशास्वपि, त्रि. वर्ति दीपदशा सूत्रं वर्ति नेत्राञ्जनोचितम्, अने

वर्तिका. कठिन्यामपि वर्तिका, धा.

वर्त्मन्. वर्त्म नेत्रच्छदे मार्गे, मे. वर्त्म नेत्रच्छदेऽध्वनि, हे, ध अचिरोम स्मृतं वर्त्म वर्त्म मार्गः प्रकीर्तितः, अने. नयनच्छदेऽपि वर्त्म, ह्र वर्त्म नेत्रच्छदाध्वनोः, वि.

वर्धन. वर्धनं वृद्धिवर्धिष्णुच्छेदे धव्यां तु वर्धनो, मे वर्धनं छेदने स्त्री वारिधान्यां तु वर्धनो, वि वर्धनं छेदने स्त्री वर्धनो तु गल-

न्तिका, हे. छेदे दृद्धौ च वर्द्धनम्, त्रि. वर्धनं छेदने प्रोक्तं वर्धनं दृद्धिवर्धने, अने. वर्धनी च घटी ज्ञेया वर्धनी तृणकूर्चिका, अने.

वर्धमान. वर्धमानः प्रभेदे शरावेरण्डविष्णुषु, मे, त्रि, वि. वर्धमानो वीरजिने स्वस्तिकैरण्डविष्णुषु। प्रभेदे शरावे च, हे.

वर्धित. वर्धितं प्रहते छिन्ने पूरिते, मे. वर्धितं प्रहते छिन्ने पूरिते चापि वर्धितम्, वि. वर्धितं छिन्नपूर्णयोः। प्रहते, हे.

वर्भ्र. वर्भ्रः सीसवरत्रयोः, हे. वर्भ्रं लघुवरत्रयोः, मे, वि.

वर्य. वर्या पतिंवरायां स्त्री वरेण्ये त्रिषु ना स्मरे, मे. वर्यः स्मरवरेण्यत्रयोः, वि.

वर्ष. वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु। प्रावृट्काले स्त्रियां भूम्नि, मे. वर्षं संवत्सरे वृष्टौ जम्बूद्वीपे घने विदुः। प्रावृट्काले तु वर्षाः स्युः, त्रि. वर्षस्तु समाद्वीपांशवृष्टिषु। वर्षवरेऽपि वर्षास्तु प्रावृषि, हे. स्याद् वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्, अ.

वर्षाभू. वर्षाभूः स्त्री च भेकभ्रां भूलतासवयोः पुमान्, मे. वर्षाभूः पुनर्नवायां स्त्रवे किञ्चुलकेऽपि च, वि. वर्षाभूः पुनर्नवायां संप्राद् गण्डूपदभेकयोः, हे. पुनर्नवायां वर्षाभूः स्त्री ना किञ्चुलके स्त्रवे, त्रि.

वर्ष्मन्. वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम्, मे. वर्ष्म देहे प्रमाणातिसुन्दराकारयोरपि, वि. वर्ष्म पुनस्तनौ। प्रमाणे सुन्दराकारे, हे. वर्ष्म देहप्रमाणयोः, अ. वर्ष्म देहप्रमाणे स्याद् वर्ष्म देहश्च कथ्यते, अने.

(ब)वर्हिस्. वर्हिः पुंसि हुताशने। न स्त्री कुशे, मे. वर्हिः कुशहुताशयोः, वि वर्हिः कुशेऽग्नौ, हे. वर्हिर्ना कुशशुष्मणोः, त्रि. वर्हिर्दर्भो नलं वर्हिः, अने.

वलय. वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम्, मे वलयः कण्ठरोगे स्याद् वलयं कङ्कणेऽपि च, वि वलयः कङ्कणं कण्ठरुक्, हे.

वल्क. वल्कं वल्कलशल्कयोः, मे. वल्कं तु वल्कले खण्डे, वि. वल्कं शकले त्वचि शल्कवत्, हे

वल्गु. वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिधेयवत्, मे. वल्गुश्छागे मनोज्ञेऽपि वल्गु भाषितमन्यवत्, वि. वल्गुश्छागमनोज्ञयोः, हे. वल्गुश्छागेऽपि, त्रि.

वल्मीक वल्मीको रोगभेदे च नाकौ च पुंनपुंसकम्, मे. वल्मीको वामलूरे स्यान् मुनिरोगविशेषयोः, वि. वल्मीको नाकुवाल्मीक्यो रोगभेदे, हे.

वल्लभ. वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे, मे. वल्लभो दयितेऽध्यक्षे कुलीनाश्वे च वल्लभः, वि. वल्लभोऽध्यक्षे कुलीनाश्वे प्रियेऽपि च, हे. त्रिष्वध्यक्षेऽपि वल्लभः, रू.

वल्लर. वल्लरं शाद्वले प्रोक्तं निर्जनस्थानकुञ्जयोः। वनक्षेत्रे च मञ्जर्यां वल्लरी तु प्रकीर्तिता, वि. वल्लरं कुञ्जमञ्जर्योः क्षेत्रेऽनम्भसि शाद्वले, हे.

वल्लव. वल्लवः सूपकारे स्याद् भीमसेने च गोदुहि, मे. वल्लवः सूपकारे स्याद् भीमसेनेऽपि गोदुहि, वि. वल्लवः स्यात् सूपकारे गोदोग्धरि वृकोदरे, हे. वल्लवः सूदगोपयोः, त्रि. वल्लवौ सूपगोपालौ, अने.

वल्ली. वल्ली स्यादजमोदायां व्रतत्यामपि योषिति, मे. वल्ली स्यादजमोदायां पुष्पभेदेऽपि वीरुधि, वि. वल्ली स्यादजमोदायां लतायां कुसुमान्तरे, हे.

वल्लूर. वल्लूरं स्याद् वनक्षेत्रे गहनोषरयोरपि। वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः, मे. वल्लूरं स्याद् वनक्षेत्रे वाहनोषरयोरपि। वल्लूरमाहुः संशुष्कमांसशूकरमांसयोः, वि. वल्लूरन्तु वनक्षेत्रे वाहनोषरयोरपि। शुष्कमांसे कोलमांसे, हे. स्यादूषरे वनक्षेत्रे वल्लूरं गहनेऽपि च। वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः, त्रि.

वश. वशा वन्ध्यासुतायोषास्त्रीगवीकरणीषु च। त्रिष्वायत्ते स्त्रीवमायत्तत्वे चेच्छाप्रभुत्वयोः, मे. वशमायत्ततायां स्याद्, वशमिच्छा-

प्रभुत्वयोः। वशा वन्ध्यासुतायोषास्त्रीगवीकरेणुषु च, वि. वशो जन्मस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः। वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि, हे. वशा स्त्री करिणी च सयात्, अ. आयत्ततामभुत्वेच्छे वशः परवशे त्रिषु, त्रि.

वशिर. वशिरः पुमान्। किणिह्वीहस्तिपिप्पल्योः क्लीवेऽब्धिलवणे स्मृतः, मे. वशिरं किणिह्वीसिन्धुलवणेभकणासु च, वि.

वसति. वसतिः स्त्रियात् स्त्रियां वासे यामिन्याश्च निकेतने, मे. वसतिः स्त्रियादवस्थाने यामिन्याश्च निकेतने, वि. वसतिः स्यादवस्थाने निशायां सदनेऽपि च, हे. वसती रात्रिवेश्मनोः, अ. वासेऽपि वसतिः, त्रि. वसति जैनाश्रमेऽपि निर्दिष्टा, ह.

वसन. वसनं छादने वस्त्रे, मे, हे. वसनं छादनेंऽशुके, वि.

वसन्तदूत. वसन्तदूतश्चूते स्यात् पिकपञ्चमरागयोः। वसन्तदूती पाटल्यामतिमुक्ते च योषिति, मे. वसन्तदूतश्चूते स्यात् पिकपञ्चमरागयोः। वसन्तदूती पाटल्यां प्रतीताप्यतिमुक्तके, वि. वसन्तदूत आम्रके। पिके पञ्चमरागे वसन्तदूत्यतिमुक्तके। पाटलायाम्, हे.

वसु. वसु ना देवभेदाग्निभायोक्त्रबकराजसु। क्लीवे हृद्धौषधेऽश्वे च वैरलमधुरे त्रिषु, मे. वसु मयूखाग्निधनाधिपेषु योक्त्रे बके स्याद् वसु हाटके च। हृद्धौषधाख्यानधनेषु रत्ने वसु स्मृतं स्यान् मधुरेऽन्यवच्च, वि. वसुस्त्वग्नौ देवभेदे नृपे रुचि। योक्त्रे शुक्ले वसु स्यादौ रत्ने हृद्धौषधे धने, हे. देवभेदेऽनले रश्मौ वसू रत्ने धने वसु, अ. योक्त्रे च वसुराख्याने, त्रि. वसुः सूर्यो वसुर्देवो वसु र्वह्नि वसु र्मही। वसु रत्नं वसु द्रव्यं वसवोऽष्टौ भ्वादयः, अने. अग्निधनरश्मिरत्नत्रिदशविशेषेषु भवति वसुशब्दः, ह.

वसुक. वसुकं रोमके पुंसि शिवमल्लार्कपर्णयोः, मे. वसुकः शिवमल्लां स्यादर्कपर्णे च रोमके, वि. वसुकं पुनः। रोमके वसुकस्तु स्याच्छिवमल्लार्कपर्णयोः, हे

वस्ति. वस्ति र्द्वयो र्निरूहे नाभ्यधो भूम्नि दशासु च, मे.

वस्न. वस्नस्त्ववक्रये पुंसि वेतने स्यात् नपुंसकम्, मे. वस्नं स्याद् वेतने मूल्ये वसनद्रव्ययोरपि, वि. वस्नं वस्ने धने मूल्ये वेतने, हे.

वस्वौकसारा. वस्वौकसारेन्द्रपुरे कुवेरनलिनीपुरोः, मे. वस्वौकसारा शौद्रस्य शक्रस्य नलिनीपुरोः, वि वस्वौकसारा त्विन्द्रस्य धनदस्य च। नलिनीपुर्यौ, हे

वह. वहः स्याद् वृषभस्कन्धे वाहे गन्धवहेऽपि च, मे. वहः स्याद् वृषभस्कन्धदेशे गन्धवहेऽपि च, वि. वहो वृषस्कन्धदेशे वायौ, हे. वृषस्कन्धेऽनिले वहः, त्रि.

वहति. वहति र्गवि। सचिवे पुंसि, मे. वहतिः सचिवे गवि, वि.

वहतु. वहतुः पथिके वृषभे पुमान्, मे वहतुः पथिके वृषे, वि.

वह्नि. वह्नि र्वैश्वानरेऽपि स्यात् चित्रकाख्यौषधौ पुमान्, मे.

वा. वा स्याद् विकल्पोपमयो र्वितर्के पादपूरणे। समुच्चये च विश्वास्मे नानार्थातीतयोरपि, मे. वा समुच्चय एवार्थे उपमानविकल्पयोः, हे. वा स्याद् विकल्पोपमयोरेवार्थेऽपि समुच्चये, वि. V. वा.

वागर. वागरस्तु गतातङ्के मुमुक्षौ वाड़वेऽष्टके। विशारदेऽपि शाणेऽपि निर्णये वारकेऽपि च, मे. वागरो वारके शाणे निर्णये वाड़वे वृके। विशारदे मुमुक्षौ च गतातङ्के च वागरः, वि. वागरो वारके शाणे निर्णये वाड़वे वृके। मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च, हे.

वाग्मिन्. वाग्मी पटौ सुराचार्ये, मे. वाग्मी वाचस्पतौ पटौ, वि. वाग्मी पटुवृहस्पत्योः, हे.

वाच् (चा). वाग्वाचे भारत्यां वचने स्त्रियौ, मे. वाग् वचने सरस्वत्यां भाषा गी र्भारती यथा, वि वाग् भारत्यां वचस्यपि, हे.

वाचत्र. वाचत्रन्तु कुत्सिते हीने वचनार्हे च वाचरवत्, मे.

वाज. वाजो निस्वनपक्षयोः। वेगे पुमानथ क्लीवं घृतयज्ञान्नवारिषु, मे. वाजं घृतेऽपि यज्ञान्ने वाजो निस्वनपक्षयोः। वाजं जले मुनौ

वाजः, वि. वाजं सर्पिषि वारिणि । यज्ञान्ने वाजस्तु पक्षे मुनौ निस्वन-वेगयोः, हे. वाजमन्नं गरुद् वाजो वाजं पीयूषमिष्यते, अने.

वाजिका. वाजिका पक्षिजातिः स्याद् वाजिका नीलमक्षिका, अने.

वाजिन्. वाजी वाणाश्वपक्षिषु, मे, वि. वाजी वाणे हये खगे, हे. वाजिनोऽश्वेषुपक्षिणः, अ.

वाट. वाटो मार्गे वृतिस्थाने स्यात् कुटीवास्तुनोः स्त्रियाम्, मे. वाटो वृतौ च मार्गेऽपि वाटी तु गृहनिष्कुटे, वि. वाटः पथि वृतौ वाटं वरण्डेऽन्नान्नभेदयोः । वाटी वास्तौ गृहोद्याने, हे. पथि वास्तुनि वाटं स्त्रात्, त्रि.

वाड़व. वाड़वं करणे स्त्रीणां घोटकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वड़वानले, मे. वाड़वं करणे स्त्रीणाम् ऊर्वे विप्रेऽपि वाड़वः । वाड़वं वड़वासङ्घे वाड़वो रसमानयोः, वि. वाड़वं करणे स्त्रीणां वड़वौघे रसातले । वाड़वो विप्र अग्नौ च, हे. अश्वौघे वाड़वं न स्त्री पाताले ना द्विजौर्वयोः, त्रि. वाड़वो वह्निविप्रयोः, अने.

वाढ़. वाढ़ं दृढ़प्रतिज्ञयोः, मे. वाढं दृढे प्रतिज्ञायाम्, वि. वाढं भृशप्रतिज्ञयोः, हे. भृशप्रतिज्ञयो र्वाढ़म्, अ. अवश्यंभृशयो र्वाढम्, ह.

वाण. वाणः सम्राट् गोस्तने दैत्यभेदे कैवलकाण्डयोः । वाणा तु वाणमूले स्त्री नीलझिण्ट्यां पुन र्द्वयोः, मे. वाणः सम्राट् कैवले काण्डे काण्डावयवदैत्ययोः । वाणा झिण्ट्यां मता धीरैः, वि. वाणो वृक्षविशेषे सम्राट् शरस्यावयवे शरे । बलिपुत्रेऽपि, हे. वाणो बलिसुते शरे, अ. वाणा झिण्ट्यां शरे वाणे, त्रि.

वाणि(णी). वाणी तु योषिति । वूतावपि सरस्वत्याम्, मे. वाणिः सम्राट् वूतिभारत्यो र्वाणि र्मूल्ये वलाहके, वि. वाणिरस्त्र्यदे । वूतौ मूल्ये सरस्वत्याम्, हे. वाणी वूतिश्च भारती, त्रि.

वाणिनी. वाणिनी नर्तकीमत्ताविदग्धवनितासु च, मे, वि. सम्राट् वाणिनी तु नर्तक्यां छेकमत्तस्त्रियोरपि, हे. मदमत्ताविदग्धस्त्रीन-

र्तकीषु च वाणिनी, द्वा. वाणिन्यौ नर्तकीदूत्यौ, अ. स्त्री विदग्धा च वाणिनी, त्रि.

वातकेलि. वातकेलिः कलालापे पिङ्गदन्तक्षते पुमान्, मे. वातकेलिः कलालापे पिङ्गानां दन्तलेखने, वि, हे.

वातखुड़ा. अथ वातखुडा वात्याराजशोणितयोरपि। पिच्छिलस्फोटिकायाञ्च वामायामपि योषिति, मे. भवेद् वातखुडा वात्यावामयोर्वातशोणिते। पिच्छिलस्फोटिकायाञ्च, वि. वातखुड़ा पुनः। वात्यायां पिच्छिलस्फोटे वामायां वातशोणिते, हे.

वातपुत्र. वातपुत्रो महाधूर्ते भीमसेने हनूमति, मे. वातपुत्रो हनूमति। महाधूर्ते च भीमे च, वि.

वातरायण. वातरायण उन्मत्ते निष्प्रयोजनपूरुषे। काण्डे च करपत्रे च कूटे च शरसंक्रमे, मे, वि. वातरायणः ककचे सायके शरसंक्रमे। निष्प्रयोजननरे चापि, हे.

वातरूप. वातरूपस्तु वातूलोत्कोचयोः शक्रकार्मुके, मे, वि. वातरूपः शक्रशरासने। वातूलोत्कोचयोश्चापि, हे.

वातिग. वातिगः पुंसि भण्टाक्यां धातुवादिनि चान्यवत्, मे. वातिगः कथितो भण्टे धातुवादिनि वातिगः, वि

वातूल. वातूलः पुंसि वात्यायां वाचवन् मारुतासहे, मे. वातूलो वातसङ्घाते वातले मारुतासहे, वि. वातूलो वातले वातसमूहे मारुताक्षमे, हे. वातूलः पुंसि वात्यायामपि वातासहे त्रिषु, च.

वादर. v. बादर.

वान. वानं शुष्कफले शुष्के स्यूतिकर्मकटे गतौ, मे वानं शुष्कफले शुष्के कटे सीवनकर्मणि। जलसंप्लववातोर्मिसुरङ्गागतिसौरभे, वि. वानं शुष्कफले शुष्के सीवने गमने कटे। जलसंप्लुतवातोर्मिसुरङ्गासौरभेषु च, हे. अथ फले शुष्के वानं स्यूते कटे गतौ, त्रि.

वानप्रस्थ. वानप्रस्थो मधूकेऽपि स्यात् तृतीयाश्रमे पुमान्, मे.

वानप्रस्थो मधूके स्यात् किंशुके चाश्रमान्तरे, वि. वानप्रस्थो मधूकद्रौ किंशुकाश्रमभेदयोः, हे. वानप्रस्थो मधूकेऽपि स्यात् तृतीयेऽपि चाश्रमे, त्रि.

वानीर. वानीरश्चित्रकेऽपि च, हा.

वापित. वापितं जीवान्तकमुण्डितयोस्त्रिषु, मे. वापितं मुण्डितं मतम्। जीवान्तके, वि. वापितं जीवान्तके मुण्डिते च, हे.

वाम. वामं धने हरे पुंसि कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ। वामी शृगालीवड़वारासभीकरभीषु च, मे. वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे। पयोधरे हरे कामे विद्याद् वामामपि स्त्रियाम्। वामी शृगालीवड़वारासभीकरभीषु च, वि. वामः कामे सव्ये पयोधरे। उमानाथे प्रतिकूले चारौ वामा तु योषिति। वामी शृगाल्यां करभीरासभीवड़वासु च, हे. वामौ वल्गुप्रतीपौ द्वौ, अवामः प्रतिकूलेऽपि प्रोक्तः, रु.

वामन. वामनोऽप्यतिखर्वे च त्रिषु पुंसि तु दिग्गजे। हराङ्कोटवृक्षे, मे. वामनोऽङ्कोटवैकुण्ठखर्वदृचिणदिग्गजे, वि. वामनो दिग्गजेऽसुरते। खर्वे काण्डे, हे. वामनौ विष्णुदिग्गजौ। खर्वश्च, त्रि.

वामिल. वामिलो दाम्भिके वामे त्रिषु, मे. वामिलो दाम्भिके वामे, वि, हे.

वायस. वायसोऽगुरुवृक्षे च श्रीवासध्वाङ्क्षयोः पुमान्। काकोदुम्बरिकायाञ्च काकमाचयाञ्च वायसी, मे वायसो नाड़िजङ्घे स्यात् श्रीवासे चागुरुद्रुमे। काकोदुम्बरिकायाञ्च काकमाचयां च वायसी, वि. वायसस्त्वगुरौ द्विके। श्रीवासे वायसी काकोदुम्बरी काकमाचपि, हे.

वायुफल अथ वायुफलं शक्रकार्मुके करकेऽपि च, मे. भवेद् वायुफलं शक्रकार्मुके करकेऽपि च, वि. वायुफलन्तु जलदोपले शक्रशरासने, हे.

वार. वारः सूर्यादिवासरे। द्वारे हरे कुब्जवृक्षे दृन्दावसरयोः पणे। वारी स्याद् गजबन्धन्यां कलश्यामपि योषिति, मे. वारः सूर्यादि-

दिवसे द्वारेऽवसरटन्द्योः । कुब्जटचे हरे वारो वारं मद्यस्य भाजने, वि. वारः सूर्यादिवासरे । महेश्वरावसरयो ह्न न्दे कुब्जाख्यपादपे, हे. निवहावसरौ वारौ, अ. कुब्जटचे हरे वारम्, त्रि.

वारक. वारकोऽश्वगतौ पुंसि वाच्यवत् स्यात् निषेधके, मे. वारकोऽश्वगतावश्वविशेषे च निषेधके, वि.

वारकिन्. वारकी प्रत्युचिल्लाश्वपर्णीजीवपयोधिषु, मे.

वारकीर. वारकीरस्तु पुंसि स्यात् वारग्राहिणि वाड़वे । यूकायां बालबन्धिन्यां नीराजितहयेऽपि च, मे.

वारण. वारणं प्रतिषेधे स्यात् वारणस्तु मतङ्गजे, मे, वि. वारणः स्यात् मतङ्गजे । वारणं तु प्रतिषेधे, हे.

वारला. V. वरला.

वारवाण. वारवाणस्तु कूर्पासे कवचेऽपि च, हे. कवचेऽपि वारवाणः, ह.

. वारासन. वारासनं वा:सद्मे स्थूलापहारपात्रयोः, वि.

वाराही. वाराही मातृभेदे स्यात् विष्वक्सेनप्रियौषधौ, मे. वाराही मातृभेदे स्यात् गृष्टिनाम्नौषधेऽपि च, वि. वाराही गृष्टिभेषजे । मातर्यपि, हे.

वारि. वारि वीगगणबन्धन्योः स्त्री क्लीवेऽम्बुनि बालके, मे. वारिः स्मृता सरस्वत्यां वारि क्लीवेरनीरयोः । वारी घटीभबन्धन्योः, वि. वारि क्लीवेरनीरयोः । वारि र्वध्यां सरस्वत्यां गजबन्धनभुव्यपि, हे. करिणां बन्धनस्थानं वारि वारि जलं मतम्, अने. V. वार.

वारुणी. वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि, मे, वि. वारुणी पश्चिमा सुरा । गण्डदूर्वा, हे. सुरा प्रत्यक् च वारुणी, अ. वारुणी मदिरा ज्ञेया पश्चिमा दिक् च वारुणी, अने.

वारण्ड. वारण्डो द्वारपिण्डयां स्त्री गणिस्वराणके पुमान् । न स्त्रियां सेकपात्रे च मलेऽक्ष्णः श्रवणस्य च. मे. वारण्ड. सेकपात्रे स्यात् .

मले हृक्कर्णयोरपि। गणिस्वराजे वारण्डी द्वारपिण्ड्यामुदीरिता, वि. वारण्डस्तु कर्णहृन्मले सेकभाजने। गणिस्वराजे, हे. नौसेचनेऽपि वारण्डः, श.

वारूढ़. वारूढ़ इत्ययम्। वस्त्राञ्चले कपाटेऽग्नौ पञ्जरे शम्बलेऽपि च, मे. वारूढ़ः शम्बलेऽपि स्याद् वस्त्राञ्चलकपाटयोः। पावके च, वि. वारूढ़ः शम्बले वस्त्राञ्चलेऽग्नौ पञ्जरेऽररौ, हे.

वार्त्त. वार्त्ता तु वर्त्तने वार्त्तिङ्गणे कृष्याद्युदन्तयोः। निःसारारोग्ययोः क्लीवं हस्तिमन्नीरुजोस्त्रिषु, मे. वार्त्ता वार्त्तिङ्गणे हन्तौ वार्त्ता कृष्याद्युदन्तयोः। हस्तिमन्नीरुजो वार्त्तो वार्त्तमारोग्यफल्गुनोः, वि. वार्त्ता वार्त्ताकुउदन्तयोः। कृष्यादौ वर्त्तने वार्त्तं त्वारोग्यारोगफल्गुषु। हस्तिशालिनि, हे. वार्त्ता हन्तौ जनश्रुतौ, श. वार्त्तं कुशलनीरुजोः, त्रि.

वार्द्दर, वार्द्दर. वार्द्दरं कृमिजाबीजदक्षिणावर्त्तशङ्खयोः। नीरे च काकचिञ्चायां भारत्यां च नपुंसकम्, मे. वार्द्दरं दक्षिणावर्त्ते शङ्खे कृमिजनीरयोः। काकचिञ्चाच बीजेऽपि वाचि वार्द्दरमिष्यते, वि. वार्द्दरं कृमिजे जले। काकचिञ्चाच बीजे स्याद् दक्षिणावर्त्तशङ्खयोः, हे.

वार्धक. वार्धकं वृद्धसङ्घाते वृद्धस्य भावकर्मणोः, मे. वार्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि, वि. वार्धकन्तु वृद्धत्वे वृद्धकर्मणि। वृद्धानां समवाये च, हे.

वार्षिक. वार्षिकं त्रायमाणायां क्लीवं वर्षाभवे त्रिषु, मे. वार्षिकं त्रायमाणे स्याद् वर्षाकालभवेऽन्यवत्, वि. वार्षिकं त्रायमाणायां वर्षाकालभवे, हे.

वालक. वालकोऽस्त्री पारिहार्ये त्रिषु स्यादङ्गुरीयके, मे. v. वालक.

वालुक. वालुका सिकतासु स्याद् वालुकं त्वेलवालुके, मे, वि. वालुका तु सिकतासु वालुकं हरिवालुके, हे.

वाल्मीक. वाल्मीकस्तु सभीकः स्याद् वाल्मीको वाग्विशारदः, अने.

वाल्हिक, वाल्हीक यत्र वाह्लिकं वाह्लीकं धीरहिङ्गुनोः। द्वावेतौ

पुंसि देशस्य प्रभेदे तुरगान्तरे, मे. वाह्लिको देशभेदेऽश्वे वाह्लिकं धीर-हिङ्गुनोः। अनयोरपि वाह्लीकः, वि. अथ वाल्हिकः। देशभेदेऽश्वभेदे च वाह्लिकं हिङ्गु कुङ्कुमम्। वाल्हीकवत्, हे. वाह्लीकं रामठेऽपि च, अ. वाह्लिकं हिङ्गुराख्यातं वाह्लिकं कुङ्कुमं मतम्। वाह्लिकं स्याज्जनपदो वाह्लिकाश्वाश्वजातयः, अने.

वाष्प. वाष्प ऊष्मणि स्रोते, मे. वाष्पो नेत्रजलोष्मणोः, वि. वाष्प ऊष्मादिजलयोः, हे. वाष्पमूष्मास्त्र, अ. वाष्प ऊष्मा तथास्रु च, अने.

वास. वासो गेहेऽप्यवस्थाने वासा स्यादटरूषके, वि. वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके, हे.

वासन. अथ वासनं धूपनेऽपि च। वारिधान्याञ्च वस्त्रे च मत्ला-ख्यानयोः स्त्रियाम्, मे. वासनं वसने वीरासने स्थाने च धूपने, वि.

वासन्त. वासन्तो माधवीयूथ्योरष्ट्र नावहिते त्रिषु, मे. वासन्ती माधवीयूथोः पाटलायां क्रमेलके। वासन्तो कोकिलेऽपि स्याद् वासन्तो विहिते विटे, वि. वासन्तः परभृटे सत्रात् करभे विहिते विटे। वासन्ती मागधीयूथीपाटलासु, हे.

वासर. वासरस्तु पुमान् नागप्रभेददिनयोरपि, मे. वासरो दिवसे रागप्रभेदेऽपि च वासरः, वि. वासरो रागभेदेऽह्नि, हे.

वासित. वासिता करिणीनार्यो र्वासितं भाविते रुते, मे. वासिता करिणीनार्यो र्वासितं सुरभीकृते। ज्ञानमात्रे खगाराये वासितं वस्त्र-वेष्टिते, वि. वासितम्। वस्त्रच्छन्ने ज्ञानमात्रे भावितेऽप्यथ वासिता। स्त्रीकरेण्वोः, हे. वासिता स्त्रीकरेण्वोश्च, अ.

वासुरा. वासुरा वासितायां स्याद् वासतेयभुवि स्त्रियाम्, मे. वासुरा वासितायां स्याद् वासतेय्यां मता भुवि, वि. वासुरा वासितारात्रौ-भुंवि, हे. ? वासुरा चालनी प्रोक्ता वासुरा वलभी मता, अने.

वास्तु. वास्तु स्याद् गृहभूर्यां गृहे सोमतुरङ्गयोः, हे.

वास्त· वास्तोऽपि दिवसे वास्त मन्दिरे च चतुष्पथे, वि वास्तो ना दिवसे क्लीवं मन्दिरे च चतुष्पथे, मे.

वाह. वाहो भुजे पुमान् मानभेदाश्वदपवायुषु, मे. वाहो भुजायां वाहस्तु मानभेदे हये ह्ये, वि. वाहोऽश्वमानयोः। हये वाहा तु वाही स्त्रात्, हे. वाहो युग्मं वनो वाहः प्रवाहो वाह उच्यते। वाहो मायाविशेषश्च वाहो वाहुरिति स्मृतः, अने.

वाहस. वाहसो जलनिर्याणे श्रयालौ सुनिषण्णके, मे. वाहसो जलनिर्याणेऽजगरे सुनिषण्णे, वि. वाहसोऽजगरे वारिनिर्याणसुनिषण्णयोः, हे.

वाहिनी· वाहिनी स्त्रात् तरङ्गिण्यां सेनासैन्यप्रभेदयोः, वि, मे. वाहिनी तु सेनातङ्गदसिन्धुषु, हे. स्रवन्त्यामपि वाहिनी, श. सेना नदी च वाहिन्यौ, त्रि

वि वि निग्रहे नियोगे च तथैव पदपूरणे। निश्चये सहने हेतावव्याप्तिविनियोगयोः। ईषदर्थे परिभवे शुद्धावावव्यनेऽपि च। विज्ञाने. मे. वि श्रेष्ठातीतनानार्थे विः स्त्रात् पक्षिष्वनव्ययम्, वि. वि श्रेष्ठेऽतीते नानार्थे, हे.

विकच. विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत्, मे. विकचः क्षपणे केतुग्रहे च स्फुटितेऽन्यवत्, वि. केतुग्रहेऽपि विकचः, त्रि.

विकट· विकटा वज्रवाराह्यां त्रिपूरविकरालयोः, मे. विकटः सुन्दरे प्रोक्तो विशालविकरालयोः, वि. विकटः पृथुले पृथुरक्ययोः, हे. विकटं विस्तृतं दृष्टत्, त्रि विकटं श्रेष्ठेऽपि निर्दिष्टम्, च.

विकल्प विकल्प. पुंसि भ्रान्तौ कल्पने, मे.

विकार· विकारो विकृतौ रुजि, मे. विकारो विकृतौ रोगे, वि, हे. विकारो विकृते रोगे, त्रि.

विकाश. विकाशः पुंसि विजने प्रकाशे, मे· विकाशो रहसि व्यक्ते, हे ४ वीकाश

विकृत विकृतं त्रिषु बीभत्से रोगिते संस्कृतेऽपि च, मे. विकृतं

संस्कृतेऽपि सम्राट् बीभत्से रोगितेऽपि च, वि. विकृतो रोगिसंस्कृत:। बीभत्सश्च, हे विकृतौ रोगिबीभत्सौ, त्रि.

विकृति. विकृति र्डिम्बरोगयो:, वि. विकृती रुजि। डिम्बे विकारे मद्यादौ, हे.

विकेशी. विकेशी पट्टवर्त्तौ सम्राट् विकेशी निष्कचस्त्रियाम्, वि.

विक्रम. विक्रमस्तु पुमान् क्रान्तिमात्रे सराच्छक्तिसम्पदि, मे. विक्रम: क्रान्तिमात्रे सम्राट् विक्रम. शक्तिसम्पदि, वि. विक्रम. शक्तिसम्पदि। क्रान्तौ च, हे क्रान्तौ च विक्रम', अ

विक्लिन्न. विक्लिन्नो जरसा जीर्णे शीर्णे चार्द्रे च वाच्यवत्, मे. विक्लिन्नो जरया जीर्णे शीर्णे चार्द्रे च वाच्यवत्, वि. विक्लिन्ना जीर्ण-शीर्णार्द्रा:, हे.

विगत. विगतो निष्प्रभे वीते, हे. विगतौ वीतनिष्प्रभौ, त्रि.

विगूढ़ विगूढ़ो गर्हितेऽपि च। गुप्तेऽपि त्रिषु, मे. विगूढ़ो गर्हगुप्तयो:, हे. विगूढ़ो गर्हिते गुप्ते, वि.

विग्रह. विग्रह' कायविस्तारे विभागे ना रणेऽस्त्रियाम्, मे. विग्रह: समरे काये विस्तारप्रविभागयो:, वि. विग्रहो युधि विस्तारे प्रतिभाग-शरीरयो:, हे अथ विग्रह:। संग्रामे प्रविभागे च देहविस्तारयोरपि, त्रि. विग्रह: समरे भेदे विग्रहो वपुरुच्यते, शने व्यासेऽपि विग्रह: सम्रात्, रु.

विघ्नकारिन् विघ्नकारी स्मृतो घोरदर्शनेऽपि विघातिनि, मे, वि. विघ्नकारी विघातस्य कारके घोरदर्शने, हे

विचकिल भभेद् विचकिलो मल्लीप्रभेदे मदने पुमान्, मे. स्मृतो विचिकिलो मल्लीप्रभेदे मदनेऽपि च, वि. विचिकिलो दमनके मल्लयाम्, हे.

विच्छित्ति. विच्छित्तिरङ्गरागे विच्छेदे हावभेदे स्त्री, मे विच्छित्ति-रङ्गरागे सराट् हावविच्छेदयोरपि, वि. विच्छित्ति: सम्रादङ्गरागे हाव-विच्छेदयोरपि, हे छेदे विनाशे विच्छित्ति:, त्रि.

विच्छिन्न विच्छिन्नस्तु समालब्धे विभक्तेऽप्यभिधेयवत्, मे. विच्छिन्नस्तु

समालब्धे विपन्ने कुटिलेऽन्यवत्, वि. विच्छिन्नं कुटिले स्यात् तु समालब्ध-विभक्तयोः, हे. समालब्धे विभक्ते च विच्छिन्नं वाच्यलिङ्गकम्, त्रि.

विजय. विजयः सख्यान्ये पार्थे स्त्रियां तिथ्यन्तरे स्मृता। उमा-सख्याम्, मे. विजयस्तु जये पार्थे गौर्यां तु विजया तिथौ, वि. विजयो जये। पार्थे विमाने विजयोमातत्सख्योस्त्रियावपि, हे.

विजात. विजाताख्या प्रसूतायां जनिते विस्तृतेऽपि च, वि. विजातो विस्तृते जाते विजाता तु प्रसूतिका, हे.

विजृम्भित. विजृम्भितन्तु चेष्टायां क्लीबं त्रिषु विकस्वरे, मे. अभ्युद्यते विकसिते चेष्टिते च विजृम्भितम्, त्रि.

विज्ञान. विज्ञानं ज्ञानकर्मणोः, मे. विज्ञानं कर्मणि ज्ञाने, वि. विज्ञानं कार्मणे ज्ञाने, हे.

विट. विटोऽद्रौ लवणे षिङ्गे मूषिके खदिरेऽपि च, मे, वि, त्रि, हा. विटस्तु मूषके। खदिरे लवणे षिङ्गेऽद्रौ च, हे.

विटप. विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना, मे. विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः, वि. विटपः पल्लवे स्तम्बे विस्तारे षिङ्गशाखयोः, हे. स्तम्बेऽपि विटपोऽस्त्रियाम्, अ. विटपः पल्लवे स्तम्बे षिङ्गे, त्रि.

विडङ्ग. विडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसकम्, मे. विडङ्गं कृमिघ्ने स्यात् विडङ्गो नागरेऽन्यवत्, वि. विडङ्गस्तु स्यादभिज्ञ-कृमिघ्नयोः, हे.

विडाल. विडालो नेत्रपिण्डे स्यात् दृषदंशकके पुमान्, मे. विडालो नेत्रपिण्डे स्यात् विडालोऽपि मृगान्तरे। विडाली पूतनाभेदे लतायूकेऽपि शस्यते, वि.

वितंस, वीतंस. वीतंसो बन्धनोपाये मृगाणां पक्षिणामपि। तेषा-मपि च विश्वासहेतोः प्रावरणेऽपि च, मे, वि.

वितण्डा वितण्डा वादभेदे स्यात् कङ्कोशाके शिलाह्वये। कर-

वीर्य्यामपि स्त्री स्यात्, मे. वितण्डा वादभेदे स्यात् कञ्चीशाके शिलाह्वये। वितण्डा करवीर्य्याञ्च, वि. वितण्डा कञ्चीशाके शिलाह्वये। करवीर्य्यां वादभेदे, हे. वितण्डा शाकभिद्यपि, त्रि. वितण्डा करवीर्य्याञ्च दर्व्वीवादप्रभेदयोः, श.

वितत. V तत.

वितर्क वितर्कस्तु पुमानूहे संशये च निगद्यते, मे. वितर्कः संशयोहयोः, वि, हे.

वितान. वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्। क्लीवं वृत्तविशेषे स्यात् त्रिलिङ्गो मन्दतुच्छयोः, मे. वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि। वृत्तभेदावसरयो र्वितानं तुच्छमन्दयोः, वि. वितानं क्रतुके यज्ञे विस्तारे क्रतुकर्मणि। तुच्छे मन्दे वृत्तभेदे शून्यावसरयोरपि, हे. क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके। मन्दे, अ. रिक्ते वितानमुल्लोचे, त्रि. प्रोक्तं वितानमुल्लोचे वितानः शून्य उच्यते, धने.

वितुन्न. वितुन्नं सुनिषण्णे च शैवाले च नपुंसकम्, मे.

वितुन्नक. वितुन्नकस्तु धान्याके झाटामलमयूरके, मे. वितुन्नकस्तु धान्याके तथा झाटामलौषधौ, वि वितुन्नकस्तु धान्यके। झाटामलौषधौ चापि, हे.

वित्त वित्तं क्लीवं धने वाच्यलिङ्गं ख्याते विचारिते, मे. वित्तं ख्याते धने लब्धे वित्तं ज्ञाते विचारिते, वि. वित्तं विचारिते ख्याते धने, हे. वित्तं ख्याते धनेऽपि च, त्रि.

वित्ति. वित्ति र्विचारे च लाभसम्भावयो. स्त्रियाम्, मे. वित्तिर्ज्ञाने विचारे च लाभसम्भवयोरपि, वि. वित्तिस्तु सम्भवे। ज्ञाने लाभे विचारे च, हे.

विदथ. विदथो योगिकृतिनोः, मे, वि. विदथो योगिनि प्राज्ञे, हे.

विदा. विदा ज्ञाने च निर्दिष्टा मनीषायाञ्च योषिति, मे. विदा ज्ञाने च बुद्धौ च, वि विदा ज्ञानधियोः, हे.

विदार. विदारो जलोच्छ्वासाऽजिदारणे। विदारी शालपर्ण्यां च रोगभेदेक्षुगन्धयोः, मे. विदारो दारणे रणे। विदारी शालपर्ण्यां च रोगभेदेक्षुगन्धयोः, वि. विदारो युधि दारणे। विदारी रोगभेदे स्यात् सालपर्णीक्षुगन्धयोः, हे.

विदारण. विदारणं विडम्बे च भेदे क्लीवं रणे द्वयोः, मे. विदारणं रणे भेदे विडम्बे च विदारणम्, वि. विदारणं भेदने स्यात् सम्पराये विडम्बने, हे.

विदित. विदितं बुधितार्थितयोः, मे. विदितं विदितार्थयोः, वि. विदितं बुधिते श्रुते, हे.

विदुर. विदुरो नागरे धीरे कौरवाणां च मन्त्रिणि, मे, वि. विदुरो नागरे धीरे धृतराष्ट्रानुजेऽपि च, हे.

विदुल. विदुलस्तु पुमानम्लवेतसे वेतसेऽपि च, मे.

विदूषक. विदूषकश्चाटुबटौ परनिन्दाकरेऽपि च, मे, वि. विदूषकोऽन्यनिन्दके। क्रीड़नीयकपात्रे च, हे.

विदेह. विदेहः कायशून्ये स्याज्जनकान्वयभूमिपे, मे. विदेहो देहशून्ये स्याद् विदेहो मिथिले स्मृतः, वि. विदेहस्तु निर्देहे मैथिलेऽपि च, हे.

विद्ध. विद्धं सन्नाद् वेधिते क्षिप्ते सदृशे बाधिते त्रिषु, मे. विद्धं सन्नाद् वेधिते क्षिप्ते सादृश्येऽपि निगद्यते, वि. विद्धं सदृग्वेधितयोः क्षिप्ते, हे.

विद्युत्. विद्युत् तड़िति सन्ध्यायां स्त्रियां त्रिषु तु निष्प्रभे, मे. विद्युत् सौदामिनीसन्ध्ये निष्प्रभे त्वभिधेयवत्, वि.

विद्रव. विद्रवो विद्रुतौ धियि, मे. विद्रवस्तु पलायने। बुद्धौ च, वि. विद्रवो धीः पलायनम्, हे

विद्रुम. विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्, मे. विद्रुमो रत्नवृक्षेऽपि प्रवाले पल्लवेऽपि च, वि. विद्रुमो वृक्षे प्रवाले, हे.

विद्वस्. विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्, मे, वि. विद्वानात्मविदोः प्राज्ञे, हे. त्रिषु। विद्वान् विद'श्च, अ.

विधा. विधा गजाशने ऋद्धौ प्रकारे वेतने विधौ, मे. विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ, वि. विधर्द्धिमूल्ययोः। प्रकारेभान्नविधिषु, हे. विधा विधौ प्रकारे च, अ. प्रकारे वेधने विधा, त्रि.

विधातृ विधाता तु वेधसि। स्मरे ना, मे. विधाता द्रुहिणे कामे, हे. विधाता वेधसि स्मरे, वि

विधान विधान' हस्तिकवले प्रेरणेऽभ्यर्चने धने। वेतनोपायविधिषु प्रकारे वैरकर्म'णि, हे

विधि. विधि र्ना नियतौ काले विधाने परमेष्ठिनि, मे. विधिर्ब्रह्मविधानयो.। विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः, हे. विधि र्विधाने दैवेऽपि, अ. विधि ब्र'ह्मणि काले च, त्रि. विधि र्विधाने नियतौ विधिः काले विधातरि, वि. काले कल्पेऽपि विधिः, ह

विधु विधु र्ना कर्पू'रेन्दु,विष्णु,षु, मे. विधुः शशाङ्के कर्पू'रे हृषीकेशेऽपि राक्षसे, वि विधुश्चन्द्रेऽच्युते, हे.

विधुर. विधुर' स्त्रात् परिश्लेषे न द्वयो र्विकले त्रिषु। रसालायां स्त्री, मे विधुर' स्त्रात् प्रविश्लेषे विधुरो विकलेऽन्यवत्। विधुरापि रसालायाम्, वि विधुर' स्त्रात् प्रविश्लेषे विकले विधुरा पुनः। रसालायाम्, हे. वैकल्येऽपि च विश्लेषे विधुर' विकले त्रिषु, त्रि प्रत्यवायेऽपत्रविश्लेषे विधुर' स्मर्यते बुधै', ह

विधूत. विधूत' कम्पिते त्यक्ते, हे.

विनत. विनता तार्क्ष्यजनन्यां पिटकाभिदि। विनतः प्रणते भुग्ने शिक्षिते चाभिधेयवत्, मे. विनता पिटकाभेदे विनता तार्क्ष्यमातरि। विनतः प्रणते भुग्ने शिक्षितेऽपत्रभिधेयवत्, वि. विनतः प्रणते भुग्ने विनता पिटकाभिदि। सुपर्णायाम्, हे.

विनय. विनया तु बलायां स्त्री शिक्षायां प्रणतौ पुमान्, मे' विनय'

प्रणतौ प्राज्ञ: शिक्षायां विनया मता, वि. विनय: शिक्षाप्रणत्योर्विनया तु बलौषधौ, हे.

विनायक. विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ, वि, मे. विनायको गणाधिपे। बुद्धे तार्क्ष्ये गुरौ विघ्ने, हे. सुगते च विनायक, श्र. सुरावनाथे गरुड़े जिने विघ्ने विनायक., त्रि.

विनिपात. विनिपातो निपाते स्याद् दैवादिव्यसने पुमान्, मे. विनिपातोऽवपाते स्याद् दैवादिव्यसनेऽपि च, वि. विनिपातस्तु दैवते। व्यसने चावपाते च, हे.

विनीत. विनीत: सुवहाश्वे स्याद् वणिजत्रपि पुमांस्त्रिषु। जितेन्द्रियेऽपनीते च निभृते विनयान्विते, मे. विनीतस्तुपनीते स्यादपनीते जितेन्द्रिये। वाणिजे सुवहाश्वे च निभृते चाभिधेयवत्, वि. विनीतस्तु निभृते निर्जितेन्द्रिये। वाणिजे साधुवाह्यश्वे विनयग्राहिते हृते, हे.

विनेतृ. विनेता देशिके राज्ञि ना, मे. विनेता देशिके राज्ञि, वि. विनेता देशिके नृपे, हे.

विन्दु. बिन्दु र्दन्तक्षतान्तरे। भ्रुवो मध्ये रूपकार्यमस्तके दृश्यते पुमान्। वेदितर्यन्यलिङ्ग: स्यात्, मे. विन्दुस्तु दन्तिदाने स्यात् तथा वेदितृ-विप्रुषो:, वि. विन्दु, र्विप्रुट् ज्ञातो रदक्षते, हे. विप्रुड़् ज्ञाता च विन्दु: स्यात्. त्रि. विन्दुस्तु विदुरेऽपि च, श.

विन्दुतन्त्र. विन्दुतन्त्र: पुमान् शारिफलके च तुरङ्गके, मे. विन्दु-तन्त्रं विदु: शारिफलके च तुरङ्गके, वि. विन्दुतन्त्र' पुन: शारिफलके च तुरङ्गके, हे.

विन्ध्य. विन्ध्या स्त्रियां लवल्यां स्यात् पुंसि व्याधाद्रिभेदयो:, मे. विन्ध्या तु,टौ लवल्यां च विन्ध्यो स्कन्दशैलभेदयो:, वि. विन्ध्यो व्याधाद्रि-भेदयो:। विन्ध्या त्रुटौ लवल्यां च, हे. व्याव्राचलौ मतौ विन्ध्यौ, धने.

विम्न विम्नं विचारिते लब्धे, मे. विम्नं ज्ञाते स्थिते लब्धे, वि. विन्नं विचारिते लब्धे स्थिते, हे. लब्धे ज्ञाते स्थिते विन्नम्, त्रि.

विपञ्ची. विपञ्ची केलिवीणयोः, मे, वि.

विपणि. विपणिः पण्यवीथ्यांञ्च भवेद्दायपण्यपत्रयोः, मे, वि. विपणिः पण्यहट्टयोः। पण्यवीथ्याम्, हे. वणिक्पथे च विपणिः, अ.

विपत्ति. विपत्तिरपि यातनापदोः, मे. विपत्ति यातनापदोः, हे, वि.

विपन्न. विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे, मे. विपन्नः कथितो नष्टे विपन्नश्च भुजङ्गमे, वि. विपन्नो भुजगे नष्टे, हे. विपन्नोऽङ्गी विपद्गते, त्रि.

विपाक. विपाकः पचने खेदे कर्मणो विसदृक्फले, मे. विपाकः कीर्तितो स्वादौ परिणामे च दुर्गतौ, वि. विपाकः परिणामे च दुर्गतिस्वादुनोरपि, हे. विपाकः परिणामेऽपि, त्रि.

विपाश. विपाशाख्या सरिद्भेदपाशवर्जितयो र्मता, वि.

विपुल. विपुलः पृथुलेऽगाधे मेरुपश्चिमभूधरे, मे, वि. विपुलः पृथ्वगाधयोः। विपुलार्यामिदि क्षोण्याम्, हे.

विप्रति(ती)सार. विप्रतीसार उद्दिष्टः कौकृत्येऽनुशये रुषि, मे. विप्रतीसारमिच्छन्ति कौकृत्येऽनुशये रुषि, वि. विप्रतिसारस्त्वनुशये रुषि। कौकृत्ये, हे.

विप्रलाप. विप्रलापो विरोधोक्त्यावपार्थवचनेऽपि च, मे, वि. विप्रलापो विरोधोक्तावनर्थकवचस्यपि, हे.

विबुध. विबुधो ज्ञे सुरे, मे. विबुधः पण्डिते देवे, वि. विबुधः पण्डिते सुरे, हे.

विभव. विभवो वैभवैश्वर्ये, मे. विभवो निर्वृतौ धने, वि. निर्वाणे विभवो धने, त्रि. विभवो धननिर्वृत्योः, हे.

विभाकर. विभाकरोऽग्निसूर्ययोः, मे, हे. विभाकरोऽग्नौ तपने, वि.

विभाव. विभावः स्यात् परिचये रसस्योद्दीपनादिषु, मे. विभावः स्यात् परिचितौ कारस्योद्दीपनेऽपि च, वि. विभावः स्यात् परिचये रत्यादीनां च कारणे, हे.

विभावरी. विभावरी निशारात्रोः कुट्टन्यां चक्रयोषिति। विवादवस्त्रगुरुठ्रां च, मे. विभावरी हरिद्रायां रजन्यां च विभावरी। विवादवस्त्रलुरुठ्रां च कुट्टन्यां चक्रयोषिति, वि.

विभावसु. विभावसुः पुमान् सूर्ये हारभेदे च पावके, मे. विभावसुर्दिनमणौ हारभेदे च पावके, वि. विभावसुस्तु भास्करे। हुताशने हारभेदे चन्द्रे, हे. सूर्यवह्नी विभावसू, अ. वसुसूर्यौ विभावसू, अने.

विभु. विभुः प्रभौ सर्वगते शङ्करब्रह्मणोस्तु ना, मे. विभुः शिवे प्रभौ नित्येत्र, वि. विभुः प्रभौ। व्यापके शङ्करे नित्ये, हे. विभुः सत्रात् स्वामिभृत्ययोः, त्रि.

विभ्रम. विभ्रमो भ्रान्तिहावयोः, मे, वि. अथ विभ्रमः। शोभायां संशये हावे, हे. चेष्टालङ्कारे भ्रान्तौ च विभ्रमः, अ. विभ्रमो भ्रमहावयोः, त्रि. शोभार्थेऽपि प्रयुजन्ते लक्ष्मीश्रीकान्तिविभ्रमाः, रु.

विमल. विमला स्त्रियाम्। शीतलायां भुवो भेदे निर्मले त्वभिधेयवत्, मे. विमला शीतलायां स्याद् भुवो भेदे च निर्मले। 'विमल' च, वि. विमलोऽर्हति निर्मले, हे.

विमान. विमानो व्योमयाने च सार्वभौमगृहेऽपि च। घोटके यानमात्रे च पुंनपुंसकयो र्मतः, मे. विमानं देवतायाने सार्वभौमगृहेऽपि च, हे.

विम्ब. विम्बं तु प्रतिविम्बेऽपि मण्डले पुंनपुंसकम्। विम्बिकायाः फले क्लीवं क्रकलासे पुनः पुमान्, मे. विम्बं फले विम्बिकायाः प्रतिविम्बे च मण्डले, वि. विम्बन्तु प्रतिविम्बे स्यात् मण्डले विम्बिकाफले, हे. विम्बं विम्बफले रूपे, त्रि.

विरिञ्च, विरिञ्चि. विरिञ्चि र्ना विरिञ्चश्च वैकुण्ठे परमेष्ठिनि, मे.

विरूढ़. विरूढ़ोऽङ्कुरिते जाते, मे, हे. विरूढ़स्तु सञ्जातेऽङ्कुरितेऽन्यवत्, वि.

विरोचन. विरोचनः प्रह्लादस्य तनयेऽर्केऽग्निचन्द्रयोः, मे. विरो-

चनोऽर्के दक्षने चन्द्रे प्रह्लादनन्दने, वि. विरोचनोऽग्निसूर्ययोः । प्रह्लादनन्दने चन्द्रे, हे. चन्द्राग्न्यर्का विरोचनाः, अ.

विल. विलं छिद्रे गुहायां च पुमानुच्चैःश्रवोहये, मे. विलं छिद्रे गुहायां च विल उच्चैःश्रवोहये, वि. विलं रन्ध्रे गुहायां च, हे.

विलग्न. विलग्नं न स्त्रियां मध्ये त्रिषु सम्राडग्नमात्रके, मे. विलग्नो मध्यलग्नयोः, वि. विलग्नं मध्यलग्नयोः, हे, त्रि.

विलास. विलासो हावभेदे सम्राड्लीलायामपि पुंस्त्रयम्, मे. विलासो हावलीलयोः, वि. विलासो हावे लीलायाम्, हे.

विलासिन्. विलासी भोगिनि व्याले विष्वक्सेनेऽग्निचन्द्रयोः, मे. विलासी भोगिनि व्याले, वि. विलासी भोगिसर्पयोः, हे.

विलीन. विलीनौ लीनविद्रुतौ, हे.

विलेपनी. विलेपनी सुवेषस्त्रीयवाग्वोरपि योषिति, मे. विलेपनी सम्राट् तरलासुवेषाङ्गनयोरपि, वि. विलेपनी सम्राट् यवाग्वां चारुवेषस्त्रियामपि, हे.

विलेशय. विलेशयस्तु पुंलिङ्गो मूषिके च भुजङ्गमे, मे. विलेशयो मूषिके स्याद् भुजङ्गेऽपि विलेशयः, वि. विलेशयो मूषिकोऽहौ, हे.

विलोम. विलोमस्तु प्रतीपे स्याद् भुजङ्गे वरुणे शुनि । आमलक्यां विलोमी च विलोमं चारघट्टके, मे, वि. विलोममरघट्टके । विलोमो वरुणे सर्पे प्रतीपे कुक्कुरेऽपि च । विलोमी स्यादामलक्याम्, हे.

विल्व. विल्वं फले श्रीफले ना, मे.

विवचित. विवचितं शोभनेऽपि स्यात्, श.

विवध. विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः, मे. विवधो वीवधश्चापि पर्याहारेऽध्वभारयोः, वि. विवधो वीवधो भारे पर्याहाराध्वनोरपि, हे. पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ, अ.

विवर. विवरं दूषणे गर्ते, मे. विवरं दूषणे गर्ते कथितं छिद्ररन्ध्रवत्, वि. V. छिद्र.

विवर्त. विवर्तः समुदाये स्यादपवर्तनवृत्तयोः, मे, वि. विवर्तौ नर्तने सङ्कोऽपावृत्तौ, हे.

विवश. विवशोऽरिष्टदुष्टधियोरपि, मे, वि. विवशः स्यादवश्यात्मारिष्टदुष्टमतिश्च यः, हे. विवशो वशविह्वलौ, त्रि.

विवस्वत्. विवस्वान् विबुधे सूर्ये तन्नगर्यां विवस्वती, मे. विवस्वान् विबुधे भानौ, वि. विवस्वांस्तु देवे सूर्ये, हे. देवसूर्यौ विवस्वन्तौ, ध. विवस्वान् देवतापि, द.

विविक्त. विविक्तं त्रिष्वसंपृक्ते रहःपूतविवेकिषु। वसुनन्दे ना, मे. विविक्तं स्यादसंपृक्ते विवेकान्वितपूतयोः। वाचवद् दर्शितो धीरैर्विविक्तं रहसि स्मृतम्, वि. विविक्तो वसुनन्दके। विविक्तं स्यादसंपृक्ते रहःपूतविवेकिषु, हे. विविक्तौ पूतविजनौ, ध.

विवृत. विवृता क्षुद्ररुग्भेदे विस्तृते त्वभिधेयवत्, मे. विवृता क्षुद्ररोगे स्याद् विवृतं स्फुटे, हे.

विवेक. विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः, मे. विवेकः स्याज्जलद्रोण्यां विचारेऽपि रहस्यपि, वि. विवेकः पुनरेकान्ते जलद्रोणीविचारयोः, हे.

विश्. विट् पुंसि मनुजे वैश्ये, मे. विट् स्मृतो वैश्यमनुजप्रवेशेषु मनीषिभिः, वि. विट् प्रवेशे नृवैश्ययोः, हे. द्वौ विशौ वैश्यमनुजौ, ध.

विशद. विशदः पाण्डरे व्यक्ते, मे, त्रि. विशदः पाण्डुरे व्यक्ते, वि, हे.

विशल्या. विशल्याग्निशिखादन्तीगुडूचीत्रिपुटासु च, मे. विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च, वि. विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च। शल्येन रहितायां च प्रियायां लक्ष्मणस्य च, हे. विशल्या दन्तिकापि च, ध.

विशाख. विशाखस्कार्त्तिके स्कन्दे स्त्रियामृक्षे कठिल्लके, मे. विशाखकार्मुके स्कन्दे विशाखर्क्षे कठिल्लके, वि. विशाखो याचके स्कन्दे विशाखा भे कठिल्लके, हे. विशाखा भे गुहे पुमान्, त्रि.

विशारद. विशारदः पण्डिते च धृष्टे, मे. विशारदो बुधे धृष्टे, वि, हे. विद्वत्सुप्रगल्भौ विशारदौ, अ.

विशाल. विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति। मृगपक्षिभिदोः पुंसि पृथुले त्वभिधेयवत्, मे. विशाला त्विन्द्रवारुण्यां विशालोज्जयिनीपुरि। विशालो वृक्षभेदेऽपि विशालः पृथुलेऽन्यवत्, वि.

विशालाक्ष. विशालाक्षो हरे तार्क्ष्ये ना सुनेत्रेऽभिधेयवत्, मे. विशालाक्षो हरे तार्क्ष्ये विशालाक्षी वरस्त्रियाम्, वि. विशालाक्षो महेश्वरे। तार्क्ष्ये विशालनेत्रे च, हे. हरतार्क्ष्यौ विशालाक्षौ, त्रि.

विशिख. विशिखस्तोमरे शरे। विशिखा तु खनित्रां च रथ्यानलिकयोरपि, मे. विशिखस्तोमरे शरे। रथ्याखनित्रयोर्विशिखा नलिकायामपि क्वचित्, वि. विशिखः शरे। विशिखा खनित्रिकायां रथ्यायाम्, हे. काण्डे ना विशिखा रथ्या, त्रि. विशिखाऽपि खनित्रिका, द्वा.

विशेष. विशेषस्तिलकेऽपि च, द्वा.

विशेषक. विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु, मे. विशेषकः स्यात्तिलके विशेषाधायकेऽपि च, वि. विशेषकस्तु पुण्ड्रके। विशेषाधायके चापि, हे.

विश्रब्ध. विश्रब्धोऽनुद्धटेऽपि स्याद् गाढविस्रब्धयोस्त्रिषु, मे. विश्रब्धोऽनुद्धटेऽत्यर्थे शान्तविस्रब्धयोरपि, वि. विश्रब्धोऽनुद्धटे शान्ते विस्रब्धात्यर्थयोरपि, हे. विस्रब्धोऽनुद्धटश्च विश्रब्धः। विश्रब्धं गाढार्थम्, त्रि.

विश्रम्भ. विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च, मे, त्रि. विश्रम्भः केलिकलहे विश्वासे प्रणये वधे, वि. विस्रम्भः केलिकलहे विश्वासे प्रणये वधे, हे. विश्रम्भः प्रणयेऽपि च, अ.

विश्राणन. विश्राणनं विहापिते। संप्रेषणे परित्यागे, हे.

विश्रुत. विश्रुतम्। ख्याते हृष्टे प्रतीते च, हे.

विश्लेष. विश्लेषो विधुरेऽयोगे, मे. विश्लेषः स्याद् विघटने विश्लेषो विधुरेऽपि च, वि. विश्लेषस्तु वियोजने। विधुरे च, हे.

विश्व. विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम्। न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु, मे. विश्वं समस्ते जगति विश्वो देवेषु नागरे। विश्वा चातिविषायां स्यात्, वि. विश्वा सुरेषु विश्वन्तु शुण्ठ्यां भुवनकृत्स्नयोः। विश्वा विषायाम्, हे. विश्वं शुण्ठ्यां समस्ते च, त्रि.

विश्वकर्मन्. विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः, मे. विश्वकर्मा देवशिल्पिमुनिभेदोष्णरश्मिषु, वि. विश्वकर्माऽर्के मुनिभिद्देवशिल्पिनोः, हे. विश्वकर्मार्कसुरशिल्पिनोः, श.

विश्वकद्रु. विश्वकद्रुस्त्रिषु खले श्वानाखेटशुनोः पुमान्, मे. विश्वकद्रुः खले श्वाने स्यादाखेटिककुक्कुरे, वि. विश्वकद्रुस्तु मृगयाकुक्कुरे पिशुने ध्वनौ, हे. विश्वकद्रू श्वभित्पृश्नौ, त्रि.

विश्वप्सन्. विश्वप्सा वह्निचन्द्रयोः। समीरणे कृतान्ते च, हे. विश्वप्साऽनलचन्द्रयोः, वि.

विश्वम्भर. विश्वम्भरोऽच्युतेशक्रे पुंसि विश्वम्भरा भुवि, मे. विश्वम्भरोऽच्युते शक्रे भवेद् विश्वम्भरा भुवि, वि. विश्वम्भरोऽच्युतेन्द्रयोः। विश्वम्भरा तु मेदिन्याम्, हे.

विश्वस्त. विश्वस्तो जातविश्वासे विश्वस्ता विधवास्त्रियाम्, मे. विश्वस्तो निभृते स्मृतः। विश्वासयोग्ये विश्वस्तो विश्वस्ता विधवास्त्रियाम्, वि. विश्वस्तः ज्ञातविश्वासे विश्वस्ता विधवास्त्रियाम्, हे. विश्वस्ता त्रिधवाऽपि च, त्रि.

विश्वावसु. विश्वावसुः सम्राट् गन्धर्वभेदे विश्वावसु र्निशि, वि. विश्वावसुः पुनः। निशि गन्धर्वभेदे च, हे.

विष् विट् स्त्री व्यापनविष्ठयोः, मे. विड् व्यापने च विष्ठायाम्, वि.

विष. विषन्तु गरले तोयेऽस्त्रिविषायाञ्च योषिति, मे. विषन्तु गरले तोयेऽतिविषायां विषा भवेत्, वि. विषं जले। घोरे विषा त्वतिविषा, हे. विषमप्सु च, श. विषं पानीयमित्युक्तं विषमन्तकरो रसः, अने.

विषघ्न विषघ्नस्तु शिरीषे ना गुडूचीनिरतोः स्त्रियाम्, मे. विष-

शाखा शिरीषे स्यात् लिटताक्ततयोरपि, वि. विषमः शिरीषतरौ विषमा लिटताऽक्ता, हे.

विषय. विषयो गोचरे देशे तथा जनपदेऽपि च। प्रबन्धादयस्त्र यो ज्ञातस्तत्र रूपादिके पुमान्, मे. विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च। गोचरे च प्रबन्धादौ यस्त्र ज्ञातस्तु तत्र च, वि. विषयो यस्त्र यो ज्ञातस्तत्र गोचरदेशयोः। शब्दादौ जनपदे च, हे. विषयो यस्त्र यो ज्ञातस्तत्र शब्दादिकेऽपि च, श. विषयौ देशगोचरौ, त्रि.

विषयायिन्. विषयायी पुमान् राज्ञि वैषयिकजनेऽपि च। इन्द्रिये कामदेवे च विषयासक्तपूरुषे, मे.

विषयिन्. विषयी विषयासक्ते वाच्यवत् क्लीवमिन्द्रिये। पुंसि स्यान्नृपतौ कामदेवे वैषयिकेऽपि च, मे. विषयी त्विन्द्रिये स्यात् वाच्यवद् विषयान्विते, वि. विषयी विषयासक्ते वैषयिकजने नृपे। कामे विषयि रूपीके, हे. वैशकारेऽपि विषयी कामिनि क्लीवमिन्द्रिये, त्रि.

विषाण. विषाणी क्षीरकाकोलयामजश्टङ्ग्याश्च योषिति। कुष्ठनामौषधे क्लीवं पशुश्टङ्गेभदन्तयोः, मे. विषाणन्तु कोड़हिरददन्तयोः। पश्वोः श्टङ्गे विषाणी तु मेषश्टङ्ग्यां प्रकीर्तिता, वि. विषाणन्तु श्टङ्गे कोलेभदन्तयोः। विषाणी मेषश्टङ्ग्यां स्यात्, हे. अस्त्रियु विषाणं स्यात् पशुश्टङ्गेभदन्तयोः, श.

विष्कम्भ. विष्कम्भो योगभेदे स्याद् विस्तारप्रतिबन्धयोः। रूपकाङ्गप्रभेदे च बन्धभेदे च योगिनाम्, मे, वि. विष्कम्भो विस्तृतौ योगविशेषप्रतिबन्धयोः। योगिनाञ्च बन्धभेदे रूपकावयवेऽपि च, हे.

विष्टम्भ. विष्टम्भः प्रतिबन्धे स्यात् प्रभेदे चामयस्य च, मे. विष्टम्भः प्रतिबन्धे च वैदर्भे च प्रयुज्यते, वि.

विष्टर. विष्टरः कुशमुष्टौ स्यादासनेऽपि महीरुहे, मे. विष्टरस्तु महीरुहे। आसने कुशमुष्टौ च, वि. विष्टर आसने। पादपे कुशमुष्टौ च, हे. विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्, अ. विष्टरो वर्हिषो मुष्टिः

विष्टरो ज्ञेयमासनम्। विष्टरो द्रुविशेषश्च विष्टरः क्रतुरेव च, अने.

विष्टि. विष्टिस्त्रिषु कर्मकरे स्त्रयाज्ञूवेतनकर्मसु, मे. विष्टिः कर्मकरे भद्रे प्रेषणे वेतनेऽपि च, वि. विष्टिः कर्मकरे मूल्ये भद्राज्ञूप्रेषणेषु च, हे. भद्रप्रेङ्क्षणयो विष्टिः, त्रि.

विष्णु. अथ विष्णुः स्यात्। कृष्णेऽर्के वसुदेवते, वि.

विष्णुपद. विष्णुपदन्तु खे। क्षीरोदे च स्त्रियां गङ्गारविसंक्रान्तिभेदयोः, मे. भवेद् विष्णुपदाभिख्या क्षीरोदे गगनेऽम्बुजे। प्रोक्ता विष्णुपदी गङ्गासंक्रान्तिद्वारकासु च, वि. विष्णुपदं नभोऽब्जयोः। विष्णुपदस्तु क्षीरोदे विष्णुपदी सुरापगा। संक्रान्ति द्वारिका चापि, हे.

विष्वक्सेन विष्वक्सेना फलिन्यां स्याद् विष्वक्सेनो जनार्दने, मे, वि. विष्वक्सेनो जनार्दनः। विष्वक्सेना तु फलिनी, हे.

विष्वक्सेनप्रिया. विष्वक्सेनप्रिया लक्ष्म्यां वाराह्यामपि योषिति, मे. विष्वक्सेनप्रिया लक्ष्म्यां त्रायमाणौषधावपि, वि. विष्वक्सेनप्रिया त्रायमाणौषध्यां श्रियामपि, हे.

विसर. विसरः प्रसरे व्रजे, मे, वि. विसरस्तु समूहे प्रसरेऽपि च, हे.

विसर्ग. विसर्गस्तु पुमान् दाने त्यागे च मलनिर्गमे। विसर्जनीयेऽपत्रपनभेदेऽपि च विभावसोः, मे. विसर्गस्त्यागवद् दाने विसर्गो मलनिर्गमे। विसर्जनीयेऽप्ययनप्रभेदेऽपि विभावसोः, वि. विसर्गो विसर्जनीये वर्चसि त्यागदानयोः, हे. विसर्गो मुक्तिवर्चसोः, रु.

विसर्जन विसर्जनं परित्यागे दाने संप्रेषणेऽपि च, मे, वि.

विस्तर. विस्तरो वाक्प्रपञ्चे स्याद् विस्तारे प्रणयेऽपि च, मे. विस्तरस्तु प्रपञ्चे स्याद् विस्तारे प्रणयेऽपि च, वि.

विस्तार. विस्तारो विस्तृतौ स्तम्बे, मे, वि. विस्तारो स्तम्बविस्तृती, हे, त्रि.

विस्मय विस्मयः स्मयादाश्चर्यगर्वयोः पुमान्, मे. विस्मयोऽद्भुतगर्वयोः, वि विस्मयोऽद्भुतदर्पयोः, हे

विस्मापन. विस्मापनः स्मरात् कुहके गन्धर्वनगरे स्मरे, मे. विस्मापनाख्या कुहके गन्धर्वनगरे स्मरे, वि. विस्मापनाख्या कुहके स्मरे। गन्धर्वनगरे चापि, हे.

विहङ्ग. विहङ्गस्तु विलिङ्गः स्यादाशुगे च विहङ्गमे, मे.

विहनन. भवेद् विहननं विघ्नहिंसयोस्तूलपिञ्जने, मे. विहननं विघाते स्यात् पिञ्जने तूलधूनने, वि. विहननन्तु पिञ्जने। वधे, हे.

विहस्त. विहस्तः पण्डिते व्याकुले त्रिषु, मे. विहस्तो विह्वले षण्डे, वि. विहस्तस्तु विह्वले पण्डितेऽपि च, हे.

विहायस्. विहायाः शकुने पुंसि गगने पुंनपुंसकम्, मे. विहायास्तु शकुन्ते स्याद् विहायः सुरवर्त्मनि, वि. विहायो व्योमपक्षिणोः, हे. विहायाः शकुने पुंसि विहायः खे नपुंसकम्, त्रि.

विहार. विहारो भ्रमणे स्कन्धे लीलायां सुगतालये, मे, वि. विहारस्तु जिनालये। लीलायां भ्रमणे स्कन्धे, हे.

विहेडन. विहेडनन्तु हिंसायां मर्दने च विडम्बने, मे, वि. विहेडनं विडम्बने। हिंसायां मर्दने, हे. अथ विहेडनम्। विहिंसायां विडम्बे च, त्रि.

वीकाश. वीकाशो विजने व्यक्ते, वि. वीकाशः स्फुटरहसोः, ह. रहःप्रकाशौ वीकाशौ, अ. v. विकाश.

वीध्र वीध्रन्तु विमले हस्ये पुंसि लासकवाजिनोः, मे. वीध्रन्तु विमले हस्ये वीध्रो लासकवाजिनोः, त्रि. वीध्रं द्रष्टव्ये विमलेऽपि च। वीध्रस्तु लासके वाहे, हे.

(वीखा) वीङ्खा. वीङ्खाश्वगतिभेदेऽपि शूकशिम्बयाश्च नर्तने, मे. वीङ्खा तु शूकशिम्बायां गतिभेदे च नर्तने, हे. वीखा गतिविशेषेऽपि शूकशिम्बयाश्च नर्तने, वि.

वीचि. वीचिः स्वल्पतरङ्गे स्यादवकाशे सुखे द्वयोः, मे. वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखेऽपि च, वि. वीच्यालूर्म्योरवकाशे सुखाल्पयोः, हे. वीचिः सुखतरङ्गयोः। स्वल्पेऽपि, त्रि.

वीज. अथ वीजमङ्कुरकारणे। हेतुतत्वाधानशुक्रे, मे. वीजन्तु रेतसि। स्यादाधाने च तत्वे च हेतावङ्कुरकारणे, हे. वीजं रेतसि तत्वे च हेतावङ्कुरकारणे। आधानेऽपि च, वि. वीजं रेतस्तत्वार्थहेतुषु, त्रि.

वीजपुष्प. वीजपुष्पं मरुवके तथा मदनकेऽपि च, मे. वीजपुष्पं मरुवके तथा दमनकेऽपि च, वि.

वीणा. वीणा विद्युति वल्लक्याम्, मे. वीणा वल्लकिविद्युतोः, वि. वीणा स्याद् वल्लकी तड़ित्, हे.

वीत. वीतमसारगजे सत्रादङ्कुशकर्मण्यसारतुरङ्गेऽपि, मे. वीतमङ्कुशकर्मणि। असाराश्वगजे, हे. वीतश्चासारहस्त्यश्वे वीतमङ्कुशकर्मणि, वि. असाराश्वभयोर्वीतं वीतमङ्कुशकर्मणि, त्रि.

वीति. वीति र्गतौ च दीप्तौ प्रजनाशनधावनेषु स्त्री, मे. वीतिर्गतौ च दीप्तौ च धावने प्रजनेऽशने, वि. वीतिरश्वेऽशने गतौ। प्रजने धावने दीप्तौ, हे.

वीतिहोत्र. वीतिहोत्रोऽनलेऽर्के च, मे. वीतिहोत्रोऽनलार्कयोः, वि. वीतिहोत्रस्तु दिवाकरकृशानवोः, हे.

वीथी. वीथी पंक्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः, मे. वीथी गृहाङ्गे पंक्तौ च नाट्यरूपकवर्त्मनोः, वि. वीथी वर्त्मनि पंक्तौ च गृहाङ्गे नाट्यरूपके, हे. वीथी पद्व्यपि, अ. वीथी पंक्तौ गृहांशके, त्रि.

वीर. वीरो रसविशेषे सत्रादुत्तरे सुभटे जिनु। स्त्री सुरावीरकाकोलीतामलक्येलवालुके। पतिपुत्रवतीरम्भाविदारीदुग्धिकासु च। मलपूचीरविदार्योः क्लीवं शृङ्गग्रां नलेऽपि च, मे. वीरा सत्रात् चीरकाकोलीतामलक्येलवालुषु। पतिपुत्रवतीरम्भागम्भारीमदिरासु च। गोष्ठोदुम्बरिकाचीरविदारीदुग्धिकासु च। वीरस्तु सुभटे श्रेष्ठे वीरं शृङ्गग्रां नतेऽपि च, वि. वीरो जिने नटे श्रेष्ठे वीरं शृङ्गग्रां नतेऽपि च। वीरा गम्भारिका रम्भा तामलक्येलवालुका। मदिराचीरकाकोलीगोष्ठोदुम्बरिकासु च। पतिपुत्रवतीचीरविदारीदुग्धिकास्वपि, हे. वीरो विक्रमवान्धवी, आने.

वीरतर सप्राद् वीरतरं वीरणे वीरश्रेष्ठे शरे च ना, मे विदु-वीरतरं श्रेष्ठे शरवीरणयोरपि, वि. वीरतरो वीरश्रेष्ठे शरे वीरतरं पुनः। वीरणे, हे.

वीरभद्र वीरभद्रोऽश्वमेधाश्वे वीरश्रेष्ठे च वीरणे, मे, वि. वीरभद्रो वीरणेऽश्वमेधाश्वे वीरसत्तमे, हे.

वीरवृक्ष. वीरवृक्षस्तु भल्लातककुभद्रुमयोः पुमान्, मे. वीरवृक्षस्तु भल्लातककुभद्रुमयो र्मतः, वि. वीरवृक्षोऽर्जुनद्रुमे। भल्लाते, हे.

वीरुध् वीरुल्लताविटपयोः स्त्रियाम्, मे. वीरुद् विटपिगुल्मयोः, वि. वीरुल्लतायां विटपेऽपि च, हे.

वीर्य. वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि, मे, वि. वीर्यं तेजःप्रभावयोः। शुक्रे शक्तौ च, हे. वीर्यं बले प्रभावे च, अ. वीर्यं प्रधाने धातौ च, त्रि. वीर्यं शुक्रं बलं वीर्यं वीर्यं बीजमुदाहृतम्, अने.

वीवध. v. विवध

वृकधूप. वृकधूपस्तु सरलद्रवकृत्रिमधूपयोः, मे, वि. वृकधूपो वृक-धूपे सिह्लके, हे.

वृक्षादन वृक्षादनचलदले मधुच्छत्रकुठारयोः। वृक्षादनी तु वन्दायां विदारीकन्दकेऽपि च, मे. वृक्षादनचलदले मधुच्छत्रकुठारयोः। वृक्षादनी स्मृता वन्दाविदारीगन्धयोरपि, रि. वृक्षादनो मधुच्छत्रे चलपत्र-कुठारयोः। वृक्षादनी तु वन्दायां विदारीगन्धिकौषधे, हे. वृक्षादनो सप्राद् वन्दायां स्त्रियां कुठारके पुमान्, त्रि

वृजिन वृजिनं कल्मषे क्लीवं केशे ना कुटिले त्रिषु, मे. वृजिनं कल्मषे केशे वृजिनः कुटिलेऽन्यवत्, वि. वृजिनः केशे वृजिनं भुग्नेऽघे रक्त-चर्मणि, हे. केशेऽपि वृजिनः, अ. वृजिनं मलिने पापे, अने. वृजिनः केशेऽपुत्रकः, ह.

वृति वृतिस्तु वरणेऽपि सप्राद् वेष्टनेऽपि च योषिति, मे. वृतिः सप्राद् वरणे श्राटे, वि वृति र्वृष्णुत्राटयोः, हे

वृत्त. वृत्तोऽधीतेऽप्यतीतेऽतिवर्त्तुलेऽपि वृते मृते। दृढे ऽन्यलिङ्गं वा क्लीवं छन्दश्चारित्रवृत्तिषु, मे. वृत्तं वृत्तौ दृढे मृते। चरिते वर्त्तुले छन्दस्यतीताधीतयो र्वृते, हे. वृत्तोऽतीते दृढे ख्याते वर्त्तुलेऽपि मृते वृते। वाच्यवद् वर्त्तने वृत्तं चरित्रच्छन्दसोरपि, वि. वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले, अ. वर्त्तुलाधीतयो र्वृत्तम्, त्रि.

वृत्तान्त. वृत्तान्तः प्रक्रियायां स्यात् कार्त्स्न्ये वार्त्ताप्रभेदयोः। प्रस्तावे, मे. वृत्तान्तस्तु प्रकरणे कार्त्स्न्ये वार्त्ताप्रकारयोः, हे. वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोः, अ. वृत्तान्तोऽवसरे भावकार्त्स्न्यवार्त्ता-विशेषयोः। वृत्तान्तः प्रक्रियायां स्यात् क्वचिदेकान्तवाचकः, वि.

वृत्ति. वृत्ति र्विवरणाजीवकैशिक्यादिप्रवर्त्तने। स्त्री, मे. वृत्ति-र्विवरणे जीव्ये कैशिक्यादिषु चेष्यते, वि. वृत्तिस्तु वर्त्तने। कैशिक्यादौ विवरणे, हे. कैशिक्याद्याश्च वृत्तयः, अ. वर्त्तने विवृतौ वृत्तिः, त्रि.

वृत्र. वृत्रो रिपौ घने ध्वान्ते शैलभेदे च दानवे, मे. वृत्रो रिपौ घने ध्वान्ते शैले शक्रे च दानवे, वि. वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ, हे. ध्वान्तारिदानवा वृत्राः, अ. वृत्रो दानववैरिणो, धने. त्वाष्ट्रे तमसि शत्रौ च वृत्रशब्दस्त्रिषु स्मृतः, रु.

वृथा. वृथा स्वन्येत्र निष्कारणे, मे. वृथा निष्कारणे स्वन्येत्र वृथा स्याद् विधिवर्जिते, वि. वृथा त्वविधौ स्यादनर्थके, हे. वृथा निरर्थकाऽविध्योः, अ.

वृद्ध. वृद्धो जीर्णे प्रवृद्धे ना त्रिषु क्लीवन्तु शैलजे, मे. वृद्धन्तु शैलजे स्थविरजीर्णवृद्धेषु भेद्यवत्, वि. वृद्धः प्राज्ञे स्थविरे च वृद्धं शैलेयवृद्धयोः, हे. वृधवृद्धौ पण्डितेऽपि, अ.

वृद्धि. वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे। कलान्तरे चाभ्युदये समृद्धावपि योषिति, मे. वृद्धिरानन्दने घृद्धौ वर्धनेऽपि कलान्तरे, वि. वृद्धि कलान्तरे हर्षे वर्धने भेषजान्तरे, हे.

वृन्त वृन्तं प्रसवबन्धे च घटीधाराकुचाग्रयोः, मे. वृन्तं स्तनमुखे

पुष्पवन्धे, हे. वृन्तं प्रसववन्धे स्याद् घटधाराकुचाग्रयोः, वि

वृन्दारक. वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु, मे. वृन्दारकः सुरे श्रेष्ठे मनोज्ञे पुनरन्यवत्, वि वृन्दारको मनोरमे। सुरे श्रेष्ठे, हे. वृन्दारकौ रूपिमुख्यौ (त्रिषु), अ. वृन्दारकौ सुरश्रेष्ठौ, त्रि.

वृश्चिक. वृश्चिकश्च द्रुणे राशौ शूककीटौषधीभिदोः, मे. वृश्चिकस्तु द्रुणे राशौ शूककीटे तथौषधे, वि. वृश्चिकश्च द्रुणे राशावौषधे शूककीटके, हे. शूककीटे च वृश्चिकः, अ.

वृष. वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः। श्रेष्ठे स्यादुत्तरस्थश्च व्यासमूषिकशुक्रले। तथा वास्तुस्थानभेदे पुमानेष प्रकीर्तितः। वृषा मूषिकपर्णी च यतीनामासने वृषी, मे. वृषः स्याद् वासवे धर्मे सौरभेये च शुक्रले। पुंराशिभेदयोः शृङ्ग्यां मूषिकश्रेष्ठयोरपि। कपिकच्छ्वां वृषा प्रोक्ता वतिनामासनं वृषी, वि. वृषो गव्याखुधर्मयोः। पुंराशिभेदयोः शृङ्ग्यां वासवे शुक्रलेऽपि च। श्रेष्ठे स्यादुत्तरस्थश्च वृषी तु व्रतिविष्टरे। वृषा चित्ता-कपिकच्छ्वोः, हे. शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः, अ. धर्मो वृषो वृषः श्रेष्ठो वृषो गौ र्महिषो वृषः। वृषो बलं वृषः कामो वृषणो वृष उच्यते, अने.

वृषन्. वृषा कर्णे महेन्द्रे ना, मे. वृषा तु वासवे। वृषभे तुरगे पुंसि, हे. वृषा कर्णमहेन्द्रयोः, वि.

वृषपर्वन् वृषपर्वा पुमान् दैत्यभेदेऽप्यन्धकसूदने, मे. वृषपर्वा हरे दैतेय शृङ्गारिणि कशेरुणि, वि वृषपर्वा तु शृङ्गारिहरदैत्यकशेरुषु, हे. वृषपर्वा शिवे दैतेय, वि.

वृषभ. वृषभः श्रेष्ठवृषयोः, मे. वृषभः स्यादादिजिने वृषपुङ्गवयोरपि, हे. वृषभः पुङ्गवे वृषे, वि.

वृषल. वृषलो गृञ्जने शूद्रे चन्द्रगुप्ते च वाजिनि, मे. वृषलः कथितः शूद्रे चन्द्रगुप्ते च वाजिनि, वि वृषलस्तुरगे शूद्रे, हे.

वृषाकपायी. वृषाकपायी श्रीगौरीशतावरीजीवन्तिकासु च, मे. वृषा-

कपायी श्रीगौर्यो जीवन्त्याञ्च शतावरी, वि. वृषाकपायी जीवन्त्यां शतावर्युमयोः स्त्रियाम्, हे. वृषाकपायी श्रीगौर्योः, अ.

वृषाकपि. वृषाकपिः पुमान् कृष्णे शङ्करे जातवेदसि, मे वृषाकपिः शिवे कृष्णे ज्वलने च वृषाकपिः, वि. वृषाकपिः। वासुदेवे शिवेऽग्नौ च, हे. हरविष्णू वृषाकपी, अ. शिवकृष्णौ वृषाकपी, अने.

वृषाङ्क. वृषाङ्कः शङ्करे साधौ भल्लातकमहल्लयोः, मे, वि. वृषाङ्कः साधुभल्लातशङ्करेषु महल्लके, हे. वृषाङ्कौ शिवभल्लातौ, त्रि.

वृष्णि. वृष्णिः पापण्डचण्डयोः। त्रिषु ना यादवे मेषे, मे. वृष्णिस्तु यादवे मेषे वृष्णिः पापण्डचण्डयोः, वि. वृष्णि र्मेषे यादवे च, हे. वृष्णिर्यादवमेषयोः, त्रि.

+ वृहतिका. वृहतिका स्यादूरुवस्त्रभेदयोः, हे. विद्याद् वृहतिकाभिख्याम् रुवस्त्रप्रभेदयोः, वि.

वृहन्नल. वृहन्नला गुडाकेशे महापोटगले पुमान्, मे. वृहन्नलो गुडाकेशे महापोटगले मतः, वि. वृहन्नलः। महापोटगले पार्थे, हे.

वेकट. वेकटः स्याद् वैकटिके मत्स्यप्रभेदे च यूनि च, मे. वेकटो जाततारुण्ये मणिकारे, हे. वेकटः स्याद् वैकटिके तथा सञ्जातयौवने, वि.

वेग. वेगो जवे प्रवाहे च महाकालफलेऽपि च, मे, वि. वेगो रयप्रवाहयोः। रेतःकिम्पाकयोश्चापि, हे. वेगः प्रवाहजवयोरपि, अ. वेगस्तु महाकालफलेऽपि च, त्रि.

वेणी. वेणी केशस्य बन्धने। नद्यादेरन्तरे देवताले, मे. वेणी कचस्य बन्धे स्यात् नदीनां मेलकेऽपि च। देवताडे च, वि. वेणी सेतुप्रवाहयोः। देवताडे केशबन्धे, हे

वेणु. वेणुर्नृपान्तरे। त्वक्सारेऽपि च पुंसि स्यात्, मे. वेणुर्नृपान्तरे वंशे, वि. वेणुर्वंशे नृपान्तरे, हे, त्रि.

वेट. वेटः श्रुतौ च ष्टत्ते च, मे

वेदना. वेदना ज्ञानदुःखयोः, मे, वि,,लि. वेदना ज्ञाने पीड़ायाम्, हे. संवित्तावपि वेदना, ह.

वेदि. वेदिः सत्रात् पण्डिते पुमान्। स्त्रियामङ्गुलिमुद्रायां सत्रात् परिष्कृतभूतले, मे. वेदिरङ्गुलिमुद्रायां बुधेऽलङ्कृतभूतले, वि, हे.

वेदिका. वेदिकाऽङ्गुलिमुद्रायाम्, ह.

वेधस्. वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि, मे. वेधा विधौ बुधे विष्णौ, मि. वेधा धातृज्ञविष्णुषु, हे. विष्णौ च वेधाः, श. विद्व्यपि स्मृतो वेधाः, ह.

वेर. वेरः कलेवरे क्लीबं वार्ताकौ कुङ्कुमेऽपि च, मे. वेरं शरीरे काश्मीरे वेरं वार्तिङ्गणेऽपि च, वि. वेरं घुसृणवृन्ताकशरीरेषु, हे. वराङ्गे कुङ्कुमे वेरम्, लि.

वेरट. अथ वेरटः। मिश्रीकृते च नीचे च वेरटं बदरीफले, हे.

वेला. वेला काले च सीमायामब्धेः कूलविकारयोः। अक्लिष्टमरणे रागे ईश्वरस्य च भोजने, मे. वेला काले च जलधेस्तीरनीरविकारयोः। अक्लिष्टमरणे रागे सीम्नि वाचि बुधस्त्रियाम्। भोजनेऽपीश्वराणां सत्रात्, वि. वेला बुधस्त्रियां काले सीमनीश्वरभोजने। अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयोः, हे. अम्बुराश्युच्छ्रितौ वेला कालमर्यादयोरपि, श. अथ वेला सत्रात् सिन्धोः कूले च भोजने, लि. वेला कालविशेषः सत्राद् वेला सिन्धुजलोन्नतिः। वेला शफाङ्गुलीच्छेदे वेला द्रोण्यन्तरात्मनि, धने. दन्तमांसेऽपि वेला सत्रात्, शा. व्यवस्थाऽनेहसो वेला, ह.

वेल्लित. वेल्लितं गमने क्लीबं कुटिले विधुते त्रिषु, मे. वेल्लितं कुटिले प्रोक्तं वाच्यवद् विधुते स्मृते, वि. वेल्लितं कुटिले धुते। स्मृते, हे.

वेश. वेशो वेश्यागृहे गृहे, मे, हे. वेशो वेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रके, वि वेशो वेश्यागृहेऽपि च, लि.

वेश्य वेश्यं वेश्यागृहे क्लीबं गणिकायान्तु योषिति, मे. वेश्यं

वेश्यागृहे वेश्या गणिकायामुदीरता, वि. वेश्यन्तु गणिकागृहे। वेश्या तु पण्यप्रयोपायाम्, हे.

वेष्टन. वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे दृतौ, मे. वेष्टनं कर्णशष्कुल्यामुष्णीषे परिवारणे, वि. वेष्टनं मुकुटे कर्णशष्कुल्युष्णीषयोर्दृतौ, हे.

वेष्टित. वेष्टितं रुद्धे लासके करणान्तरे, मे. वेष्टितं लसके रुद्धे स्त्रीणाञ्च करणान्तरे, त्रि. वेष्टितं लासके रुद्धे स्त्रीकरणान्तरे, हे.

वै. वै स्यात् सम्बोधने पादपूरणेऽनुनयेऽपि च, मे, त्रि. वै हेतौ पादपूरणे, हे.

वैकुण्ठ. वैकुण्ठः कृष्णशक्रयोः, मे, वि. वैकुण्ठो वासवे विष्णौ, हे.

वैजयन्त. वैजयन्तो गृहे शक्रध्वजप्रासादयोः पुमान्। वैजयन्ती पताकायां जयन्तीपादपे स्त्रियाम्, मे. वैजयन्तो गृहे शक्रप्रासादध्वजयोरपि। वैजयन्ती पताकायां जयन्तीवक्रिमन्ययोः, वि. वैजयन्तो गृहे ध्वजे। इन्द्रालये वैजयन्ती त्वग्निमन्थपताकयोः। जयन्तश्च, हे.

वैजिक. वैजिकं शिग्रुतैले स्याद् हेतौ सद्योऽङ्कुरे तु ना, मे. वैजिकं शिग्रुतैले च हेतौ सद्योऽङ्कुरेऽपि च, वि. वैजिकं कारणे शिग्रुतैले च वैजिकोऽङ्कुरे, हे.

वैतरणी. अथ वैतरणी नद्यां प्रेतानां यातुमातरि, मे. भवेद् वैतरणी नद्यां प्रेतानां यातुमातरि, वि. वैतरणी प्रेतनद्यां जनन्यामपि रक्षसाम्, हे.

वैतालिक. वैतालिकः पुमान् खेटिताले बोधकरे त्रिषु, मे. वैतालिको बोधकरे खेटितालेऽप्युदीरितः, वि. वैतालिकः खङ्गताले मङ्गलापाठकेऽपि च, हे.

वैदर्भ. वैदर्भं वाग्मवक्रत्वे वैदर्भी रीतिभिद्यपि, मे. वैदर्भं वाग्मयक्रत्वे वैदर्भश्च नृपान्तरे, वि.

वैदेहक. वैदेहको वाणिजके शूद्राद् वैश्यासुतेऽपि च, मे, त्रि.

वैदेहको वाणिजको वैश्यापुत्रश्च शूद्रजः, हे. वैदेहको वाणिजके वैश्याया-मपि शूद्रजे, त्रि.

वैदेही. वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीषु च, मे. वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीष्वपि, वि. वैदेही पिप्पलीसीतावणिक्स्त्रीरोच-नास्वपि, त्रि.

वैनतेय. वैनतेयस्तु गरुडे स्यात् प्रभाकरसारथौ, मे.

वैनाशिक. वैनाशिकः स्यात् क्षणिके परतन्त्रोर्णनाभयोः, मे, वि. वैनाशिकः स्यात् क्षणिके परायत्तोर्णनाभयोः, हे.

वैरोचन(नि). वैरोचनिस्तु सुगते वलिदैत्यार्कपुत्रयोः, मे. वैरो-चनस्तु सुगते बलिदैत्यार्कपुत्रयोः, वि. वैरोचनो रविसुते सुगते बलि-दानवे, हे.

वैशाख. वैशाखो मासभेदेऽपि मन्थाने च प्रकीर्त्तितः, मे. वैशाखो राधमन्थयोः, वि. वैशाखः रजके राधे, हे. वैशाखो मन्थमासयोः, त्रि.

वोड्र. वोड्री स्त्री पणपादे ना गोनसाह्वौ झषान्तरे, मे.

वोढ़. वोढ़ा ना भारिके सूते, मे. वोढ़ा स्याद् भारिके सूते, वि, हे.

व्यक्त. व्यक्तः स्फुटमनीषिणोः, मे, वि. व्यक्तो मनीषिस्फुटयोः, हे. व्यक्त प्राज्ञेऽपि, श. स्पष्टप्राज्ञौ च तौ व्यक्तौ, धने.

व्यग्र. व्यग्रो व्यासक्त आकुले, मे, वि, श. व्यग्रो व्यापृताकु-लयोः, हे.

व्यङ्ग. व्यङ्गो भेके च हीनाङ्गे, मे, हे. व्यङ्गो हीनाङ्गभेकयोः, वि.

व्यञ्जन. व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवे हलि, मे. व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च, वि. व्यञ्जनं श्मश्रुचिह्नयोः। तेमनेऽवयवे कादौ, हे. व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपि, श.

व्यतिकर. अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः, मे, त्रि. व्यति-करः समाख्यातो व्यसनव्यतिषङ्गयोः, वि. व्यतिकरो व्यसनव्यतिषङ्गयोः, हे.

व्यतीपात. व्यतीपातो महोत्पाते योगभेदापयानयोः, मे, वि. व्यतिपात उपद्रवे। योगभेदेऽपयाने च, हे.

व्यलीक. व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीड़ने। ना नागरे, मे. व्यलीको नागरे स्मृतः। व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीड़ने, वि. व्यलीकं व्यङ्ग्यवैलक्ष्याप्रियाऽकार्येषु पीड़ने, हे. पीड़ार्थेऽपि व्यलीकं स्यात्, श्र. वैलक्ष्याकार्ययोः क्लीबं व्यलीकं त्रिषु नागरे, त्रि.

व्यवहार. व्यवहारो द्रुभेदे स्यात् पणे न्यायेऽपि च स्थितौ, मे. व्यवहारो द्रुभेदे स्याद् व्यवहारो पणे स्थितौ, वि. व्यवहारः स्थितौ पणे। द्रुभेदे, हे.

व्यवहारिका. व्यवहारिका स्याल्लोकयात्रासम्मार्जनीद्रुदे, मे. अथ स्याद् व्यवहारिका। लोकयात्रेङ्गुदीवर्धनीषु, हे. स्याद् व्यवहारिका लोकयात्रासम्मार्जनीद्रुदे, वि.

व्यवाय. व्यवायः सुरतेऽन्तर्धौ पुंसि क्लीबन्तु तेजसि, मे. व्यवायः सुरतेऽन्तर्धौ व्यवायं तेजसि स्मृतम्, वि. व्यवायन्तु मैथुनव्यवधानयोः, हे. सुरतेऽपि व्यवायः स्यात्, रु.

व्यवायिन्. व्यवायी कामुके द्रव्यविशेषे च समीरितः, वि.

व्यसन. व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे, मे, वि. व्यसनं निष्फलोद्यमे। दैवानिष्टफले सक्तौ स्त्रीपानमृगयादिषु। पापे विपत्तावशुभे, हे. व्यसनं विपदि भ्रंशे दोषे कामजकोपजे, श्र. दैवानिष्टफले सक्तौ व्यसनं निष्फलोद्यमे, त्रि.

व्यस्त. व्यस्तन्तु व्याकुले व्याप्ते, मे. व्यस्तं व्याप्ते च सङ्कुले, वि.

व्याघात. व्याघातो योगभेदे स्यादन्तरायप्रहारयोः, मे, वि. व्याघातो योगविघ्नयोः। घाते, हे.

व्याघ्र. व्याघ्रः स्यात् पुंसि शार्दूले रक्तैरण्डकरञ्जयोः। श्रेष्ठे नराद्युत्तरस्थः कण्टकार्यान्तु योषिति, मे. व्याघ्रो द्वीपिनि विख्यातः रक्तैरण्डकरञ्जयोः। व्याघ्री निदिग्धिकायाञ्च श्रेष्ठे स्यादुत्तरस्थितः, वि. व्याघ्रः

करञ्जे शार्दूले रक्तैरण्डतरावपि। श्रेष्ठे उत्तरपदस्थः सम्राट्_व्याघ्री कण्टकारिका, हे.

व्याघ्रनख. भवेद् व्याघ्रनखः कन्दगन्धद्रव्यविशेषयोः। नखक्षतान्तरे क्लीवम्, मे. भवेद् व्याघ्रनखः कन्दगन्धद्रव्यविशेषयोः, वि. व्याघ्रनखस्तु कन्दे सम्राट् गन्धद्रव्यान्तरेऽपि च, हे.

व्याज. व्याजः शाठ्येऽपदेशे, मे, हे. व्याजः शाठ्यापदेशयोः, वि. व्याजः शाठ्येऽपदेशे च, त्रि.

व्याड़. व्याड़ो हिंस्रपशौ सर्पे, मे, वि, हे. सर्पमांसात्पशू व्याड़ौ, श्र.

व्याध. व्याधो मृगयुदुष्टयोः। तारामये खे च, मे. व्याधो मृगदुष्टयोः, वि, हे.

व्याधि. व्याधिः कुष्ठे च रोगे ना, मे. व्याधिरामयवाप्ययोः, वि.

व्याप्त. व्याप्तं ख्याते समाक्रान्ते, मे, वि.

व्याप्ति. व्याप्ति व्यापनलम्भयोः, वि, मे. व्याप्ति व्यापने लम्भनेऽपि च, हे. लाभसम्बन्धयो व्याप्तिः, त्रि.

व्यायत. व्यायतं व्याप्तते दीर्घे दृढे चातिशयेऽन्यवत्, मे, वि. व्यायतं दीर्घे व्याप्तेऽतिशये दृढे, हे. दृढेऽपि व्यायतम्, त्रि.

व्यायाम. व्यायामः पौरुषे श्रमे। विषमे दुर्गसञ्चारे, मे. व्यायामो दुर्गसञ्चारे वियामे पौरुषेऽपि च, वि. व्यायामः पौरुषे श्रमे। वियामे दुर्गसञ्चारे, हे.

व्याल. व्यालो दुष्टगजे सर्पे श्वापदे नाऽन्यवत् खले, मे. व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि, वि. व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः, हे. भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः, श्र. अर्थवत्रवसहे व्यालस्तथा हिंस्रपशौ स्मृतः, ह. व्यालोऽहिः श्वापदो व्यालो व्यालः स्यात् कुटिल करी। प्रमादवान् नरो व्यालो व्यालो वाल उदाहृतः, अने. व्यालः सर्पः शठे व्यालो व्यालो श्रेयश्चतुष्पदः, अने

व्यास. व्यासो ना विस्तृते मुनौ, मे. व्यासो मुनिप्रपञ्चयोः, हे. व्यासो मुनौ च विस्तारे, त्रि. व्यासो मुनौ स्यात् विस्तारे, वि.

व्युत्थान. व्युत्थानं स्वातन्त्र्यकृतेर विरोधाचरणेऽपि च, मे. व्युत्थानं स्वैरकरणे विरोधाचरणेऽपि च, वि. व्युत्थानं प्रतिरोधने। विरोधाचरणे स्वैरवृत्तौ समाधिपारणे, हे. व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च, ध. स्वतन्त्रता च व्युत्थानम्, त्रि.

व्युष्ट. व्युष्टं कल्ये त्रिपर्युषिते, मे, त्रि. व्युष्टं फले दिने। पर्युषिते प्रभाते च, हे. व्युष्टं दिने प्रभाते च फले पर्युषितेऽपि च, वि. व्युष्टं कल्ये तथोषिते, हा.

व्युष्टि. व्युष्टिः फले समृद्धौ च, ध. व्युष्टिः स्तुतिफलर्द्धिषु, हे. व्युष्टिः फले समृद्धौ स्त्री, मे. व्युष्टिरुक्ता समृद्धौ च नियमादिफलेऽपि च, वि.

व्यूढ. व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत्, मे. व्यूढः संहत-विन्यस्तपृथुलेषु च भेद्यवत्, वि. व्यूढा न्यस्तोरसंहताः, हे. व्यूढौ विन्यस्त-संहतौ, ध.

व्यूह. व्यूहः स्यात् बलविन्यासे निर्माणे वृन्दतर्कयोः, मे, वि. व्यूहो निर्माणतर्कयोः। समूहे बलविन्यासे, हे. देहनिर्माणसैन्येष्वपु व्यूहः स्यात्, त्रि. व्यूहो वृन्देऽपि, ध. व्यूहं रचनायामपि, ह.

व्योमचारिन्. व्योमचारी तु निर्दिष्टो देवतायां विहङ्गमे, मे. व्योमचारी खगे देवे, वि.

व्योमन्. व्योम वारिणि चाकाशे भास्करस्यार्चनाश्रये, मे. व्योम वारिविहायसोः, वि.

व्योष. व्योषं स्यात् त्रिकटुद्रव्येऽ करिभेदे पुमानयम्, मे.

व्रज. व्रजो गोष्ठाध्ववृन्देषु, मे, वि. व्रजोऽध्वगोष्ठसङ्घेषु, हे. गोष्ठा-ध्वनिवहा व्रजाः, ध. व्रजो गोष्ठं व्रजो मार्गो व्रजः सङ्घो व्रजो गणः, अने.

व्रजरा. व्रजरा पर्यटने प्रोक्ता वर्गमस्थानयोरपि, मे, वि.

व्रीहि. व्रीहिः सामान्यधान्ये स्यादाशुधान्ये तु पुंस्ययम्, मे.

व्रीहिराजिक. स्यात् व्रीहिराजिकः कङ्गुधान्यचीनकधान्ययोः, मे. स्यात् व्रीहिराजिकः कामलिकायां चीनधान्यके, वि. अथ व्रीहिराजिकः। चीनाख्ये कामलिकायामपि, हे.

श. (शं वदन्ति बुधाः श्रेयः अथ शस्त्रं निगद्यते। शीश्च शयनमित्याहुः शास्त्रं शा च निगद्यते, मे.) शं सुखं शङ्करः श्रेयः अथ सौख्यं निगद्यते। शयने शः समाख्यातो हिंसायां शो निगद्यते, ए. चतुरङ्को विपन्नश्च छदो दचकरस्थितः। शङ्कुकर्णोऽस्थिसंस्थश्च शकारः सद्भिरीरितः, मा.

शंसा. शंसा वचसि वाञ्छायाम्, मे, हे. शंसा वचनवाञ्छयोः, वि.

शक. शको जात्यन्तरे हये, मे. शको राजन्यदेशयोः, वि. शको देशे राजभेदे, हे.

शकल. शकलं त्वचि खण्डे स्यात् रागवस्तुनि वल्कले, मे, वि. शकलं रागवस्तुनि। वल्कले त्वचि खण्डे च, हे. शकलं वल्कले खण्डे, त्रि.

शकुन. शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान् नपुंसकम्, मे. शकुनं च शुभाशंसिनिमित्ते शकुनः खगे, वि. शकुनं स्यात् दैवशंसिनिमित्ते शकुनः खगे, हे. दैवशंसिनिमित्ते च शकुनं पुंसि पक्षिणि, त्रि.

शकुनि शकुनिः पुंसि विहगे सौवले करणान्तरे, मे. शकुनिः सौवले करणे खगे, वि. शकुनिः खगे करणभेदे कौरवमातुले, हे. शकुनिः सौवले खगे, त्रि

शकुन्त. शकुन्तः कीटभेदे स्यात् भासपक्षिविहङ्गयोः, मे. शकुन्तो विहगे भासे, हे. शकुन्तौ भासपक्षिणौ, श. शकुन्तः पक्षिभेदे स्यात् भासपक्षिविहङ्गयोः, वि.

शकुलादनी. शकुलादनी स्त्रियां तृणभेदेऽकटुकशाकयोः, मे शकुलादन्य भिख्या तु मांसीकिञ्चुलिकाद्वयोः। कटुकाजलपिप्पल्योः कथ्यते शकुला-

दनी, वि. शकुलादनी। कटुमांसीकिञ्जुलिकाजलपिप्पलिकासु च, हे. कटुकायां कन्नटके कथिता शकुलादनी, इा.

शक्ति. शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्, मे. शक्तिर्बले प्रभावादौ शक्तिः प्रहरणान्तरे, वि. शक्तिरायुधभेदे सत्राडुत्साहादौ बले स्त्रियाम्, हे. कासूसामर्थ्ययोः शक्तिः, श्र. अस्त्रभेदेऽपि शक्तिः सत्रात्, ति.

शक्र. शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः, मे. शक्रो महेन्द्रे सत्रात् कुटजार्जुनभूरुहोः, वि. शक्रोऽर्जुनतराविन्द्रे कुटजे, हे. कुटजे वासवे शक्रः, ति.

शक्वरी. शक्वरी छन्दसो भेदे नदीमेखलयोरपि, मे. शक्वरी मेखलानद्योः छन्दोभेदेऽपि शक्वरी, वि. शक्वरी सरिदन्तरे। छन्दोजातौ मेखलायाम्, हे. शक्वरी मेखला छन्दः, ति.

शङ्का. शङ्का त्रासे वितर्के च, मे, वि. शङ्का सत्रात् संशये भये, हे.

शङ्कु. शङ्कुः संख्यास्त्रयादोभित्कीलेशकलुषेषु ना, मे. शङ्कुः मलशिराजाले सङ्ख्याकीलकशम्भुषु। यादोऽस्त्रभेदयो मेंढ्रे, हे. शङ्कुः कीले शिवेऽस्त्रे च सङ्ख्यायादःप्रभेदयो, वि. शङ्कुः कीलकसङ्ख्यास्त्रजलजन्तुषु दृश्यते, ति.

शङ्ख. शङ्खः कम्बौ न योषित् ना भालास्थिनिधिभिन्नखे, मे. शङ्खो निधन्तरे कम्बुललाटास्थिनखीषु च, वि. शङ्खः कम्बौ निधिभेदे सत्राल्लस्थामलिकास्थनि, हे. शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री, श्र.

शङ्खक. शङ्खकं वलये कम्बौ शङ्खो पुंसि शिरोरुजि, मे. शङ्खकं वलये कम्बौ शिरोरोगे च शङ्खकम्, वि. शङ्खकं वलये कम्बौ शङ्खकस्तु शिरोरुजि, हे.

शङ्खिन्. शङ्खी हरौ समुद्रे ना शङ्खवत्यभिधेयवत्। शङ्खिनी श्वेतपुङ्खायां चोरपुष्प्यां वधूभिदि, मे. शङ्खिनी श्वेतपुन्नागे चोरपुष्प्यां वधूभिदि, वि.

